आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ३७

कृष्णयजुर्वेदीयं

# तैत्तिरीयब्राह्मणम् ।

श्रीमत्सायणाचार्यविरचितभाष्यसमेतम् ।

( तत्र तृतीयकाण्डस्याष्टम-नवम-दशमै-कादश-द्वादशे-त्यन्तिम-प्रपाठकपञ्चकमितस्तृतीयो भागः ( ३ ) )

एतत्पुस्तकं

पुण्यपत्तननिवासिभिः ' गोडबोले ' इत्युपाह्वैः वे० शा० रा० नारायणशास्त्रिभिः संशोधितम् ।

तच्च

बी. ए. इत्युपपदधारिभिः

विनायक गणेश आपटे

इत्येतैः

पुण्याख्यपत्तने

श्रीमन्'महादेव चिमणाजी आपटे' इत्यभिधेय-महाभागप्रतिष्ठापिते

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

द्वितीयेयमङ्कनावृत्तिः ।

शालिवाहनशकाब्दाः १८६० ।

खिस्ताब्दाः १९३८ ।



मूल्यं रूपकत्रयम् ( ३ ) ।

# अथ कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे

## तृतीयकाण्डेऽष्टमप्रपाठकः ।

### तत्र प्रथमोऽनुवाकः ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
अच्छिद्रार्थाः कर्ममन्त्राः सप्तमे पाठके श्रुताः ।
अष्टमे नवमे चाश्वमेधब्राह्मणमुच्यते ॥ २ ॥
अश्वमेधस्त्रिरात्रोऽयमहराद्यं त्विहाष्टमे ।
पाठके वर्ण्यते तत्र प्रोक्ताऽऽदौ स्वामिसंस्कृतिः ॥ ३ ॥

सूत्रकारेण—"राजा सार्वभौमोऽश्वमेधेन यजेत" इत्युपक्रम्य "चैत्र्यां पौर्णमास्याꣳ सांग्रहण्येष्ट्या यजते" इति यदुक्तं तदिदं विधत्ते—

हरिः ॐ ।

सांग्रहण्येष्ट्या यजते । इमां जनताꣳ संगृह्णानीति, इति ।

इमां जनतां स्वस्यापेक्षितं जनसमूहं संग्रहीष्यामीत्यभिमेत्य सांग्रहण्याख्ययेष्ट्या यजेत । सा चेष्टिः "वैश्वदेवीं सांग्रहणीं निर्वपेद्ग्रामकामः" इत्यत्रोत्पन्ना । संगृह्यतेऽपेक्षितं सर्वं ययाऽसौ संग्रहणी सैव सांग्रहणी ।

यदुक्तं सूत्रकारेण—"द्वादशारत्निस्त्रयोदशारत्निर्वा दर्भमयी मौञ्जी वा रशना" इति । तत्राश्वबन्धनार्थाया रशनायाः परिमाणं प्रकृतिद्रव्यं च क्रमेण विधत्ते—

द्वादशारत्नी रशना भवति । द्वादश मासाः संवत्सरः । संवत्सरमेवावरुन्धे । मौञ्जी भवति । ऊर्ग्वै मुञ्जाः । ऊर्जमेवावरुन्धे, इति ।

चतुर्विंशतिरङ्गुल्योऽरत्निः । द्वादशारत्निप्रमाणेयमश्वाभिधानी रशना कर्तव्या । तत्र संख्याबलान्मासद्वारा संवत्सरप्राप्तिर्भवति । मुञ्जाख्येन तृणविशेषेण सा रशना निष्पाद्या । पशुभिर्भक्ष्यत्वान्मुञ्जानामूर्ग्रूपत्वम् ।

अश्वमेधस्य संकल्पकाले नक्षत्रविशेषं विधत्ते-

चित्रा नक्षत्रं भवति । चित्रं वा एतत्कर्म (१)। यदश्वमेधः समृद्ध्यै, इति ।

बहुविधानामनुष्ठेयानामिष्टिपशुसोमरूपाणां सद्भावादश्वमेधकर्मणश्चित्रत्वमतस्तस्य समृद्ध्यर्थं चित्रा नक्षत्रम् ।

कालविशेषं विधाय देशविशेषं विधत्ते-

पुण्यनाम देवयजनमध्यवस्यति । पुण्यामेव तेन कीर्तिमभिजयति, इति ।

पुण्यं पावनं नामधेयं यस्य श्रवणमात्रेण प्रतीयते तत्पुण्यनाम स्थानं पुष्करवनं गौतमवनं वाराणसी कुरुक्षेत्रमित्यादि । तादृशं देवयजनदेशं चित्रानक्षत्रकालेऽध्यवस्यति तेन पुण्यां कीर्तिं प्राप्नोति ।

देशकालयोर्विशेषं विधायर्त्विगानयने विशेषं विधत्ते-

अपदातीनृत्विजः समावहन्त्या सुब्रह्मण्यायाः । सुवर्गस्य लोकस्य समष्ट्यै, इति ।

ये ऋत्विजः स्वस्वगृहे वृतास्तानृत्विजोऽपदातीनावहन्ति पादसंचारं निवार्य हस्त्यश्वादीनारोप्य राजपुरुषास्तानृत्विज आनयन्ति । तत्र कालावधिरा सुब्रह्मण्याया इति । यस्यां चैत्र्यां पौर्णमास्यां सांग्रहणी तत आरभ्य संवत्सरेऽतीते सत्युपरितनसंवत्सरे वैशाख्याममावास्यायां त्रैधातवीयरूपायां दीक्षणीयामारभ्य सप्तसु दिनेषु तस्यां दीक्षणीयायां समाप्तायां तत्समाप्तिदिनमारभ्य दिनत्रये दीक्षां परिसमाप्य तत्रोपरितने प्रायणीयेऽहनि सुब्रह्मण्या प्रवर्तते । तत्सुब्रह्मण्यापर्यन्तमृत्विजां समावहनं कर्तव्यम् । तद्यथा-सांग्रहणीष्टिदिने तस्य तस्य गृहे गत्वा सोमप्रवाकेण वृतानध्वर्युब्रह्महोतॄनाग्नीध्रं च हस्त्यश्वादिकमारोप्येष्ट्यर्थमानयन्ति । अनन्तरभाविन्यां वैशाख्यां पौर्णमास्यां प्राजापत्यमृषभं तूपरमालब्धुं सोमप्रवाकवृतौ मैत्रावरुणप्रतिप्रस्थातारौ हस्त्यश्वादिकमारोप्य राजपुरुषा आनयन्ति । तदनन्तरभाविन्यां वैशाख्याममावास्यायां ब्रह्मौदनार्थं चतुर्णां महर्त्विजामपेक्षितत्वादध्वर्युब्रह्महोतॄणां पूर्वमेवाऽऽनीतत्वादवशिष्टमहर्त्विजमुद्गातारं हस्त्यश्वादिभिरानयन्ति । अथाऽऽगामिसंवत्सरगतायां वैशाख्याममा-

वास्यायां दीक्षणीयेष्टौ साम गातुं प्रस्तोतारं हस्त्यादिभिरानयन्ति । ततो दीक्षारम्भदिवसादूर्ध्वं तृतीयादिष्वहःस्वन्वहमितरानष्टावृत्विजो हस्त्यश्वादिकमारोप्याऽऽनयन्ति । ब्राह्मणाच्छंसिनमच्छावाकं नेष्टारं प्रतिहर्तारं ग्रावस्तुतं पोतारमुन्नेतारं सुब्रह्मण्यमित्येतान्सोमार्थमानयन्ति । एवमा सुब्रह्मण्याह्वानादपदातीनृत्विज आवहन्ति, तच्चोच्छ्रितस्थानारोहणसाम्यात्स्वर्गप्राप्त्यै भवति ।

यद्यप्ययमश्वमेधो द्वादशाहविकृतिद्वारा परम्परयाऽग्निष्टोमविकृतिः । अतो वपनादिकमत्र प्राप्तम् । तथाऽप्येतद्दीक्षासमीपे न त्वत्र । अतोऽप्राप्तमपूर्वं वपनादिकमत्र विधत्ते—

केशश्मश्रु वपते । नखानि निकृन्तते । दतो धावते । स्नाति । अहतं वासः परिधत्ते । पाप्मनोऽपहत्यै । वाचं यत्वोपवसति । सुवर्गस्य लोकस्य गुप्त्यै । रात्रिं जागरयन्त आसते । सुवर्गस्य लोकस्य समष्ट्यै, इति ।

कर्म धत्ते पश्च च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टकेऽष्टमाध्याये प्रथमोऽनुवाकः ॥ १ ॥

अहतमच्छिन्नं नूतनं तेन पापं विनश्यति । वाग्यमनपूर्वकेणोपवासेन स्वर्गलोको रक्षितो भवति । एनं यजमानं राजानं रात्रिं जागरयन्तो निवृत्तनिद्रं कुर्वन्तः कथाभिर्नानाविधाभिर्विनोदयन्तः पार्श्वस्था आसते । तज्जागरणं स्वर्गस्य सम्यक्प्राप्तये भवति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डेऽष्टमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

अथ द्वितीयोऽनुवाकः ।

प्रथमेऽनुवाके यजमानसंस्कारा उक्ताः । द्वितीये ब्रह्मौदनमभिधीयते । तदर्थमादौ चतुर्विधानि जलानि विधत्ते—

चतुष्टय्य आपो भवन्ति । चतुःशफो वा

अश्वः प्राजापत्यः समृद्ध्यै, इति ।

प्रजापतिर्देवताकस्याश्वस्य शफसंख्यासाम्यात्जलचतुष्टयं समृद्धिहेत्वानयति । वर्ष्याः कूप्याः स्थावरा वहन्त्यश्चेति जलानां चातुर्विध्यम् । एतच्चाऽऽरुणकेतुके चयने स्पष्टमाम्नातम् ।

तासामपामाहरणे देशविशेषान्विधत्ते—

ता दिग्भ्यः समाभृता भवन्ति । दिक्षु वा आपः । अन्नं वा आपः । अद्भ्यो वा अन्नं जायते । यदेवाद्भ्योऽन्नं जायते । तदवरुन्धे, इति ।

प्राच्यादिभ्यश्चतसृभ्यो दिग्भ्यस्ता आप आहर्तव्याः । न त्वेकस्या दिशः । आपश्च सर्वासु दिक्षु वर्तन्ते । ताश्चान्नरूपा अन्नस्याद्भ्यो जातत्वात् । तस्मादपामाहरणे सत्यद्भ्यो जातमन्नं सर्वं प्राप्तं भवति ।

आहृतास्वप्स्वोदनपाकं विधत्ते—

तासु ब्रह्मौदनं पचति । रेत एव तद्दधाति ( १ ), इति ।

रेतस ओदनजन्यत्वात्तेनौदनपाके[ न ] रेत एव धारयति ।

ओदनस्य परिमाणं विधत्ते—

चतुःशरावो भवति । दिक्ष्वेव प्रतितिष्ठति, इति ।

शरावचतुष्टयपरिमितैर्व्रीहिभिरयमोदनो निष्पादनीयः । चतुःसंख्यासाम्येन दिक्षु प्रतिष्ठा ।

यदुक्तं सूत्रकारेण—" प्राच्यां राजतं रुक्मं निधाय तस्मिन्ब्रह्मौदनमुद्धृत्य प्रभूतेन सर्पिषोपसिच्य सौवर्णं रुक्ममुपरिष्टात्कृत्वा कर्षन्ननुच्छिन्दंश्चतुर्भ्य आर्षेयेभ्यो महर्त्विग्भ्य उपोहति प्राशितवद्भ्यश्चतुरः साहस्रान्सौवर्णान्निष्कान्ददाति" इति । तदेतत्सर्वं क्रमेण विधत्ते—

उभयतो रुक्मौ भवतः । उभयत एवास्मिन्रुचं दधाति । उद्धरति शृतत्वाय । सर्पिष्वान्भवति मेध्यत्वाय । चत्वार आर्षेयाः प्राश्न-

न्ति । दिशामेव ज्योतींषि जुहोति । चत्वारि हिरण्यानि ददाति । दिशामेव ज्योतीꣳष्यवरुन्धे (२), इति ।

ओदनस्याधस्तादुपरिष्टाच्च रुक्मस्थापनेनोभयतो ज्योतिः संपादयति । पात्र्यामुद्धरणेन पक्वत्वं स्पष्टी भवति । प्रभूतसर्पिर्योगेन शुद्धतया यज्ञयोग्यं भवति । आर्षेया ऋषिपुत्रसमानाश्चत्वारो मुख्या ऋत्विजस्तेषां प्राशनेन चतसृणां दिशां संबन्धिनि ज्योतिष्येव हुतं भवति । चतुःसहस्रनिष्कदानेन चतुर्दिक्संबन्धीनि ज्योतींषि प्राप्नोति ।

यदुक्तं सूत्रकारेण—'द्वादशारत्निस्त्रयोदशारत्निर्वा दर्भमयी मौञ्जी वा रशना तां ब्रह्मौदनोच्छेषणेनानक्ति' इति । तदिदमञ्जनं विधत्ते—

यदाज्यमुच्छिष्यते । तस्मिन्रशनां न्युनत्ति । प्रजापतिर्वा ओदनः । रेत आज्यम् । यदाज्ये रशनां न्युनत्ति । प्रजापतिमेव रेतसा समर्धयति, इति ।

पात्र्यामुद्धृत ओदने बह्वाज्यं प्रक्षिप्य तत्राऽऽज्यविशिष्ट ओदनो यावानृत्विग्भ्यो दत्तस्तस्मादन्यद्यदाज्यमोदनविशिष्टं पात्र्यामुच्छिष्यते तस्मिन्नाज्येऽश्वबन्धनहेतुं रशनां न्युनत्ति नितरां क्लिन्नां कुर्यात् । ओदनस्य प्रजापतिसृष्टत्वेन प्रजापतिस्वरूपत्वादाज्यस्य च रेतःकारणत्वेन रेतोरूपत्वादोदनविशिष्ट आज्ये रशनाया उन्दनेन प्रजापतिमेव रेतसा समृद्धं करोति । तस्या रशनाया मौञ्जीत्वपक्षः पूर्वानुवाकेऽभिहितः ।

दर्भमयत्वपक्षमत्र विधत्ते—

दर्भमयी रशना भवति । बहु वा एष कुचरोऽमेध्यमुपगच्छति । यदश्वः । पवित्रं वै दर्भाः (३) । यद्दर्भमयी रशना भवति । पुनात्येवैनम् । पूतमेनं मेध्यमालभते, इति ।

कुचरो भूम्यां संचरन्नयमश्वो बहु वै प्रभूतमेवामेध्यमशुचिरूपमुपगच्छति । उच्छिष्टाद्युपेक्षितेषु देशेषु संचरणात् । दर्भाणां शुद्धिहेतुत्वात्तन्मयया रशनया तमेनमश्वं पुनात्येव । ततः शुद्धत्वेन यज्ञयोग्यमेनमश्वमालभते ।

१ क. °द्युपहृते° ।

'चत्वार आर्षेयाः प्राश्नन्ति' इति यदुक्तं तदेव स्पष्टी कुर्वन्प्रशंसति--

**अश्वस्य वा आलब्धस्य महिमोदक्रामत् । स महर्त्विजः प्राविशत् । तन्महर्त्विजां महर्त्विक्त्वम् । यन्महर्त्विजः प्राश्नन्ति । महिमानमेवास्मिन्तद्दधाति, इति ।**

पुरा कदाचिदालब्धादश्वादुत्क्रान्तस्तदीयो महिमा सामर्थ्यातिशयो महर्त्विजोऽध्वर्युर्ब्रह्मा होतोद्गातित्येतान्मुख्यानृत्विजः प्राविशत्, तत्तस्मान्महिम्नः प्रवेशान्महर्त्विक्त्वमेषां संपन्नम् । तत्तेन महर्त्विजां ब्रह्मौदनप्राशनेनास्मिन्यजमाने महिमानमेव संपादयन्ति ।

यदुक्तम्--' चत्वारि हिरण्यानि ददाति " इति । तदेतत्प्रशंसति--

**अश्वस्य वा आलब्धस्य रेत उदक्रामत् । तत्सुवर्णं[1] हिरण्यमभवत् । यत्सुवर्णं[1] हिरण्यं ददाति । रेत एव तद्दधाति, इति ।**

पुरा कदाचिदालब्धस्याश्वस्य रेतः सारभूतोंऽशस्तस्मादश्वादुत्क्रम्य शोभनवर्णोपेतं हिरण्यमभवत् । अश्वस्तस्य दानेन रेत एव धारयति ।

सुवर्णदानस्य फलं विधत्ते--

**ओदने ददाति । रेतो वा ओदनः । रेतो हिरण्यम् । रेतसैवास्मिन्रेतो दधाति, इति ।**

ददाति रुन्धे दर्भा अभवत्षट् च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके सप्तमाध्याये द्वितीयोऽनुवाकः ॥ २ ॥

---

हिरण्यस्य रेतःकार्यत्वादोदनस्य तत्कारणाच्चोभयोरपि रेतोरूपत्वम् । अत ओदने भुक्ते सत्यनन्तरमेव यद्दानं तेन दानेनास्मिन्यजमान ओदनरूपेण रेतसैव हिरण्यरूपं रेतो धारयति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डेऽष्टमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

1 क. ख. कार्लं ।

अथ तृतीयोऽनुवाकः।

---

द्वितीये ब्रह्मौदनोऽभिहितः। तृतीये रशनयाऽश्वबन्धनमभिधीयते। तत्राऽऽदौ ब्रह्माणं प्रत्यनुज्ञापने मन्त्रमुत्पादयितुं प्रस्तौति—

यो वै ब्रह्मणे देवेभ्यः प्रजापतयेऽप्रतिप्रोच्याश्वं मेध्यं बध्नाति। आ देवताभ्यो वृश्च्यते। पापीयान्भवति। यः प्रतिप्रोच्य। न देवताभ्य आवृश्च्यते। वसीयान्भवति, इति।

योऽश्वमेधयाजी देवार्थं प्रजापत्यर्थं च वर्तमानं यागयोग्यमश्वमृत्विग्रूपाय ब्रह्मणे स्वयमप्रतिप्रोच्यानुक्त्वा तदनुज्ञामलब्ध्वा बध्नाति सोऽयं देवताभ्य आवृश्च्यते विच्छिद्यते। तदनुग्रहाभावात्पापीयानतिशयेन दरिद्रो भवति। यस्तु ब्रह्मणे तस्मै प्रतिप्रोच्य तदनुज्ञां लब्ध्वा बध्नाति सोऽयं देवताभ्यो न विच्छिद्यते। तत एवातिशयेन धनवान्भवति।

इदानीं मन्त्रमुत्पाद्य तदीयं तात्पर्यं दर्शयति—

यदाह। ब्रह्मन्नश्वं मेध्यं भन्त्स्यामि देवेभ्यः प्रजापतये तेन राध्यासमिति। ब्रह्म वै ब्रह्मा। ब्रह्मण एव देवेभ्यः प्रजापतये प्रतिप्रोच्याश्वं मेध्यं बध्नाति (१)। न देवताभ्य आवृश्च्यते। वसीयान्भवति, इति।

हे ब्रह्मन्देवार्थं प्रजापत्यर्थं मेध्यं यागयोग्यमश्वं भन्त्स्यामि रशनया बद्धं करिष्यामि। तेनाश्वबन्धनेन राध्यासं समृद्धो भूयासम्। इत्येतं मन्त्रं यद्यध्वर्युराह तदानीं देवताभ्यो न विच्छिद्यतेऽतिशयेन धनवांश्च भवति। मन्त्रे योऽयमृत्विग्रूपो ब्रह्मा कथितः सोऽयं ब्रह्मैवातस्तस्मै परब्रह्मण एव कथयित्वा मेध्यमश्वं बध्नाति। ततो युक्तमस्य धनिकत्वादि।

अत्र रशनास्वीकारे मन्त्रः सप्तमकाण्डे समाम्नातः—"देवस्य त्वा सवितुः

प्रसवे । अश्विनोर्बाहुभ्याम् । पूष्णो हस्ताभ्यामाददे" इति । तेन मन्त्रेण स्वीकारं विदधानस्तन्मन्त्रं व्याचष्टे—

देवस्य त्वा सवितुः प्रसव इति रशनामा-
दत्ते प्रसूत्यै । अश्विनोर्बाहुभ्यामित्याह ।
अश्विनौ हि देवानामध्वर्यू आस्ताम् ।
पूष्णो हस्ताभ्यामित्याह यत्यै, इति ।

तदिदं ब्राह्मणं तत्र तत्रासकृद्व्याख्यातम् । स्वीकृताया रशनाया अभिमन्त्रणार्थो मन्त्रः सप्तमकाण्ड एवमाम्नातः—"इमामगृभ्णन्रशनामृतस्य पूर्व आयुषि विदथेषु कव्या । तया देवाः सुतमाबभूवुर्ऋतस्य सामन्त्सरमारपन्ती" इति ।

तमिमं मन्त्रं रशनाभिमन्त्रणे विनियुङ्क्ते—

व्यृद्धं वा एतद्यज्ञस्य । यदयजुष्केण क्रियते ।
इमामगृभ्णन्रशनामृतस्येत्यधिवदति यजु-
ष्कृत्यै । यज्ञस्य समृद्ध्यै ( २ ), इति ।

यज्ञस्य संबन्धि यदङ्गमयजुष्केण मन्त्ररहितेन व्यापारेण क्रियते तदिदमङ्गं व्यृद्धं समृद्धिविकलम् । यद्यप्यृगेषा तथाऽपि युज्यत इति व्युत्पत्त्या यजुर्वेदपठित्वेन च यजुरित्युच्यते । तस्मात्सयजुष्कानुष्ठानाय 'इमाम्' इति मन्त्रं पठेत्ततो यज्ञः समृद्धो भवति । प्रथमपादस्यायमर्थः—ऋतस्य यज्ञाङ्गाश्वस्य संबन्धिनीमिमां रशनां पूर्वे पुरुषा अगृभ्णन्स्वीकृतवन्त इति ।

अस्या अश्वरशनाया द्वादशारत्नित्वपक्षः प्रथमानुवाकेऽभिहितः । अत्र त्रयोदशारत्नित्वपक्षं विचारमुखेण विधत्ते—

तदाहुः । द्वादशारत्नी रशना कर्तव्या३ त्रयो-
दशारत्नी३रिति । ऋषभो वा एष ऋतु-
नाम् । यत्संवत्सरः । तस्य त्रयोदशो मासो
विष्टपम् । ऋषभ एष यज्ञानाम् । यदश्व-

मेधः । यथा वा ऋषभस्य विष्टपम् । एवमेतस्य विष्टपम् । त्रयोदशमरत्निꣳ रशनायामुपादधाति । यथर्षभस्य विष्टपꣳ सꣳस्करोति । तादृगेव तत्, इति ।

तत्र तत्र रशनाविषये परीक्षकाः परस्परमेवमाहुः—किमेषा द्वादशारत्निः कर्तव्या किंवा त्रयोदशारत्निरिति । तत्राभिज्ञः कश्चिदृष्टान्तमुखेनोत्तरं ब्रूते यथा लोके गवामृषभः पतिरेवं गोस्थानीयानामृतूनां संवत्सरः स्वामी । अतः प्रथमानुवाके मासद्वारा संवत्सरसाम्याद्द्वादशारत्नित्वपक्षः समर्थितः । इह तु तत ऊर्ध्वं त्रयोदशारत्नित्वपक्षं समर्थयितुमपरो विशेष उच्यते—यथा लोक ऋषभस्योपरि ककुदुन्नतं भवति, एवं द्वादशमासात्मकस्य संवत्सरस्यर्षभस्थानीयस्य योऽयमधिकमासस्त्रयोदशः सोऽयं विष्टपं ककुत्स्थानीय एवं ह्यत्राप्यग्निष्टोमादयो यज्ञा गोस्थानीयाः । अश्वमेध ऋषभस्थानीयः । तस्य च लौकिकस्यर्षभस्येव विष्टपं ककुदपेक्षितम् । अतो विष्टपत्वेन रशनायां त्रयोदशमरत्निं संपादयेत् । तथा सत्यृषभस्येवाश्वमेधस्य विष्टपं संस्कृतं भवति ।

अथ रशनादानमन्त्रस्य द्वितीयस्मिन्पाद आयुःशब्दतात्पर्यमाह—

पूर्व आयुषि विदथेषु कव्येत्याह । आयुरेवास्मिन्दधाति, इति ।

विदथेषु यज्ञेष्वायुषि निमित्तभूते सति कव्या कवयो विद्वांसः पूर्वे महर्षय इमां रशनां गृहीतवन्त इति मन्त्रपादस्याक्षरार्थः । तत्राऽऽयुषीति प्रयोगादायुर्यजमाने संपादयति ।

तृतीयपादे बभूवुरिति शब्दस्य तात्पर्यं दर्शयति—

तया देवाः सुतमाबभूवुरित्याह । भूतिमेवोपावर्तते, इति ।

देवाः सर्वे तया रशनयाऽश्वबन्धादिद्वारेण सुतमभिषवोपेतमश्वमेधात्मकं सोमयागमाबभूवुः सर्वतः प्राप्ता इत्यक्षरार्थः । तत्र भवतिधातोर्भूतेरभिधायकत्वात्तत्पाठेनैश्वर्यमेव प्राप्नोति ।

---

१ क. °वं सत्यप्य° ।

चतुर्थपाद ऋतशब्दस्य तात्पर्यं दर्शयति—

ऋतस्य सामन्त्सरमारपन्तीत्याह । सत्यं वा ऋतम् । सत्येनैवैनमृतेनाऽऽरभते, इति ।

ऋतस्य सत्यभूतस्य यज्ञस्याश्वमेधस्य सामन्समीचीनेऽनुष्ठाने सरं प्रवृत्तिं पारमारपन्ती कथयन्ती संपादयन्ती रशनेत्यक्षरार्थः । तत्रर्तशब्द ऋ गताविति धातुजन्यः प्राप्त्यर्थो न भवति किंत्वेव रूढः सत्यवाची । तस्मात्सत्यात्मकेनर्तेन यथावदनुष्ठानेनैनमश्वमेधं प्रारभते ।

यदुक्तं सूत्रकारेण—"अभिधा असीत्यश्वमभिदधाति" इति । तत्राश्वबन्धनमन्त्रः सप्तमकाण्ड एवमाम्नातः—"अभिधा असि भुवनमसि यन्ताऽसि धर्ताऽसि सोऽग्निं वैश्वानरं सप्रथसं गच्छ स्वाहाकृतः पृथिव्यां यन्ता राड्यन्ताऽसि यमनो धर्ताऽसि धरुणः कृष्यै त्वा क्षेमाय त्वा रय्यै त्वा पोषाय त्वा" इति ।

तस्मिन्मन्त्रे प्रतिवाक्यं तात्पर्यं दर्शयति—

अभिधा असीत्याह । तस्मादश्वमेधयाजी सर्वाणि भूतान्यभिभवति । भुवनमसीत्याह । भूमानमेवोपैति । यन्ताऽसीत्याह । यन्तारमेवैनं करोति । धर्ताऽसीत्याह । धर्तारमेवैनं करोति । सोऽग्निं वैश्वानरमित्याह । अग्नावेवैनं वैश्वानरे जुहोति । सप्रथसमीत्याह (५) । प्रजयैवैनं पशुभिः प्रथयाति । स्वाहाकृत इत्याह । होम एवास्यैषः । पृथिव्यामित्याह । अस्यामेवैनं प्रतिष्ठापयाति । यन्ता राड्यन्ताऽसि यमनो धर्ताऽसि धरुण इत्याह ।

१ क. तत्राव्युत्पन्नः स° ।

रूपमेवास्यैतन्महिमानं व्याचष्टे । कृष्यै त्वा क्षेमाय त्वा रय्यै त्वा पोषाय त्वेत्याह । आशिषमेवैतामाशास्ते, इति ।

हेऽश्व त्वमभिधा बन्धनीयोऽसि । तत्राभिशब्दप्रयोगादभिभवितृत्वं यजमानस्य युक्तम् । भुवनत्वेन स्तुतत्वाद्भूमप्राप्तिर्यजमानस्य । यन्तृधर्तृशब्दप्रयोगात्तद्रूपत्वमश्वस्य संपाद्यते । हेऽश्व स त्वमग्निं गच्छेत्युक्त्या तमेतमश्वमग्नौ हुतवान्भवति । प्रथावाचिना सप्रथसमित्यग्निविशेषणेन यजमानं प्रजादिभिः प्रथयति । स्वाहाकृत इत्युक्तत्वात्तस्याश्वस्य होम एवाग्नौ संपद्यते । पृथिव्यामित्युक्त्या तमश्वं भूमौ प्रतिष्ठापयति । हेऽश्व त्वं पृथिव्यां यन्ता मनुष्यादीनां नियामको राट्, दीप्यमानश्चासि । तथाऽन्तरिक्षेऽपि ग्रहनक्षत्रादीनां नियन्ता नियमनसमर्थश्चासि । तथा द्युलोकेऽपि देवादीनां धारको धारणसमर्थश्चासि । एतस्मिन्मन्त्रभागे पठिते सत्यस्य मन्त्रस्यैतत्प्रतीयमानं स्वरूपमेवास्याश्वस्य महिमानं विशेषेण कथयति । न चात्रास्माभिर्व्याख्यातव्यं किंचिदस्ति । अथ कृष्यादिसिद्ध्यर्थं त्वां बध्नामीत्यनयोक्त्या स्वस्याऽऽशिषमेव प्रार्थितवान्भवति ।

अथ सप्तमकाण्डानुक्तं शाखान्तरगतं मन्त्रशेषं वाक्यद्वयमनूद्य तात्पर्यं दर्शयति—

स्वगा त्वा देवेभ्य इत्याह । देवेभ्य एवैनꣳ स्वगा करोति । स्वाहा त्वा प्रजापतय इत्याह । प्राजापत्यो वा अश्वः । यस्या एव देवताया आलभ्यते । तयैवैनꣳ समर्धयति, इति ।

बध्नाति समृद्ध्या उपादधात्यसीत्याह सप्रथसमित्याह देवेभ्य इत्याह पञ्च च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टकेऽष्टमाध्याये तृतीयोऽनुवाकः ॥ ३ ॥

---

हेऽश्व त्वां देवेभ्यो देवार्थं स्वगा स्वगतं स्वाधीनं बध्नामि । अनयोक्त्यैनमश्वं देवानां स्वाधीनं करोति । हेऽश्व त्वां प्रजापतये स्वाहा समर्पयामि । एत-

स्मिन्मन्त्रांशे पठिते सत्यश्वस्य प्राजापत्यत्वाद्यद्देवतार्थोऽस्याऽऽलम्भस्तयैव देवतयाऽश्वं समृद्धं करोति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डेऽष्टमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

अथ चतुर्थोऽनुवाकः ।

---

तृतीयेऽश्वबन्धनमुक्तम् । चतुर्थे रशनया बद्धं तमश्वं नीत्वा जलेऽवगाहनमुच्यते । अत एवानुवाकस्याभिप्रेतमवगाहनं शाखान्तरपर्यालोचनया सूत्रकारः स्पष्टमाह––‘ आपोऽश्वमभ्यवगाहयन्ति ’ इति । तत्राश्वस्यावगाहनप्रदेशे श्वा कश्चिन्नेतव्यस्तन्नयनप्रकारं सूत्रकार आह––“ आनयन्ति श्वानं चतुरक्षं विष्वग्बन्धेन बद्धं पितुरनुजायाः पुत्रः पुरस्तान्नयति मातुरनुजायाः पुत्रः पश्चात्सैध्रकं मुसलं पौंश्चलेयः पेशसा जानुं वेष्टयित्वा पश्चादन्वेत्याऽऽपोऽश्वमभ्यवगाहयन्ति श्वानं च ” इति । तदेतद्विधत्ते––

यः पितुरनुजायाः पुत्रः । स पुरस्तान्नयति ।
यो मातुरनुजायाः पुत्रः । स पश्चान्नयति ।
विष्वंश्चमेवास्मात्पाप्मानं विवृहतः, इति ।

यजमानस्य राज्ञः पितृष्वसीयो मातृष्वसीयश्च गच्छतः । सर्वतो बद्ध्वा नीयमानस्य शुनः पुरस्तात्पश्चाच्चोभौ गच्छतः । तेन विष्वञ्चमेव यजमानस्य सर्वतो वर्तमानमेव पाप्मानं विवृहतो यजमानाद्वियोजयतः ।

अथाश्वस्य शुनश्चावगाहने सति जलमध्ये यत्र शुनः पादा भूमिं न स्पृशन्ति तत्र श्वानं हन्तुं दासीपुत्रस्याध्वर्युरनुज्ञां प्रयच्छति । स च दासीपुत्रो मुसलेन श्वानं हन्ति तदिदमुभयं विधत्ते––

यो अर्वन्तं जिघांसति तमभ्यमीति वरुण
इति श्वानं चतुरक्षं प्रसौति । परो मर्तः परः
श्वेति शुनश्चतुरक्षस्य प्रहन्ति । श्वेव वै पाप्मा
भ्रातृव्यः । पाप्मानमेवास्य भ्रातृव्यꣳ हन्ति, इति ।

योऽयं श्वाऽस्मदीयमश्वं हन्तुमिच्छति तं श्वानं जलाधिपतिर्वरुणोऽभ्यमीति विनाशयति । तमिमं मन्त्रं पठन्नध्वर्युश्चतुरक्षं श्वानं प्रति दासीपुत्रमनुजानीयात् । हे दासीपुत्र श्वानं जहीति ब्रूयात् । अक्ष्णोरुपरिभागेऽक्षिसदृशं बिन्दुद्वयलाञ्छनं यस्य शुनः सोऽयं चतुरक्षः । योऽयमस्याश्वस्य विरोधी मर्तो मनुष्यः स परो भवतु परस्तात्तिष्ठतु । यश्च श्वा सोऽपि परो भवतु परस्तात्तिष्ठतु । एतस्मिन्मन्त्रेऽध्वर्युणा पठ्यमाने दासीपुत्रश्चतुरक्षं श्वानं हन्यात् । सूत्रकारस्तु ब्राह्मणान्तरमनुसृत्य 'यो अर्वन्तम्' इति मन्त्रं हनने विनियुज्य 'परो मर्तः' इति मन्त्रं पादानामधः शुनोऽक्ष्णोरुपरिभागेऽक्षिसदृशं बिन्दुद्वयलाञ्छनं तत्प्रक्षेपे विनियुक्तवान् । योऽयं पापरूपः शत्रुः सोऽयं शुना सदृशः । अतः शुनो वधेन पाप्मैव हतो भवति ।

हननसाधनं विधत्ते—

सैध्रकं मुसलं भवति (१)। कर्म

कर्मैवास्मै साधयति, इति ।

सैध्रको महासारो वृक्षो यस्य वृक्षस्य मध्ये लोहसमानं सारं कृष्णारुणादिवर्णयुक्तं विद्यते तदीयं मुसलं साधनम् । तच्चास्मै यजमानायापेक्षितमवघातादिकं सर्वं कर्म साधयति ।

हन्तारं विधत्ते—

पौꣳश्चलेयो हन्ति । पुꣳश्चल्यां वै देवाः शुचं

न्यदधुः । शुचैवास्य शुचꣳ हन्ति, इति ।

बहुषु पुरुषेषु चलति न त्वेकस्मिन्भर्तरि नियता वर्तत इति पुंश्चली दासी तत्पुत्रः शुनो हन्ता । पुरा देवा दास्यामेव शोकं सर्वं स्थापितवन्तः । अतः शोकरूपेणैव दासीपुत्रेण शोकरूपस्य शुनो हननं युक्तम् ।

हतस्य शुनोऽश्वपादानामधस्तादवस्थापनं विधत्ते—

पाप्मा वा एतमीप्सतीत्याहुः । योऽश्वमे-

धेन यजत इति । अश्वस्याधस्पदमुपा-

स्यति । वज्री वा अश्वः प्राजापत्यः । वज्रे-

णैव पाप्मानं भ्रातृव्यमवक्रामति, इति ।

योऽश्वमेधमनुतिष्ठत्येतं पाप्मा प्राप्तुमिच्छति हिंसाया बहुत्वादित्येवमभिज्ञा आहुः । अतः पापप्राप्तिपरिहाराय मृतं श्वानमश्वपादानामधस्तात्प्रक्षिपेत् । अयमश्वो वज्री वज्रसमानैः खुरैर्युक्तत्वात् । अतस्तेन वज्रेण पापरूपं श्वानं वैरिणमवक्रामति ।

पादानामधस्तात्प्रक्षिप्तस्य मृतस्य शुनः पश्चादश्वस्य दक्षिणपार्श्वे जलमध्ये परित्यागं विधत्ते—

दक्षिणाऽपप्लावयति (२) । पाप्मानमेवास्माच्छमलमपप्लावयति, इति ।

दक्षिणपार्श्वे प्लावनेन मलरूपं पाप्मानं यजमानादपनयति ।

अथ जलमध्ये स्थितस्याश्वस्य तीरे प्रत्यङ्मुखत्वेनोद्गमयितुं साधनं विधत्ते—

ऐषीक उदूहो भवति । आयुर्वा इषीकाः । आयुरेवास्मिन्दधाति । अमृतं वा इषीकाः । अमृतमेवास्मिन्दधाति, इति ।

उदूह्यत ऊर्ध्वं तीरप्रदेशे प्रेर्यते येन दण्डबद्धतृणसमूहेन सोऽयमुदूहः स चेषीकाख्येन तृणविशेषेण निर्मितत्वादैषीकः । स च प्रौढः कार्यः । अत एव सूत्रकारेणोक्तम्—"तं द्वे शते दक्षिणतो धारयन्तो द्वे उत्तरतस्तेनाश्वं पुरस्तात्प्रत्यश्वमभ्युदूहन्ति" इति । इषीकाणां तृणानां गवादिभक्षत्वेनाऽऽयुर्हेतुत्वम् । अत एवामृतरूपत्वम् । तस्मादैषीकेणाऽऽयुरपमृत्युपरिहारं च यजमाने संपादयति ।

अस्मिन्नुदूहे वेतसशाखाया बन्धनं विधत्ते—

वेतसशाखोपसंबद्धा भवति । अप्सुयोनिर्वा अश्वः । अप्सुजो वेतसः । स्वादेवैनं योनेर्निर्मिमीते, इति ।

अश्वजातीयस्योच्चैःश्रवसः समुद्रादुत्पत्तेरप्सुयोनित्वम् । वेतसस्य वञ्जुलस्याप्योनित्वं प्रसिद्धम् । अतोऽश्वस्य स्वकीयादेव योनेरेनमुदूहं निर्मितवान्भवति ।

जलमध्यात्तीरं प्रत्यश्वस्य नोदनं विधत्ते—

पुरस्तात्प्रत्यञ्चमभ्युदूहति । पुरस्ता-
देवास्मिन्प्रतीच्यमृतं दधाति, इति ।

पूर्वस्यां दिशि वर्तमानश्चतुःशतसंख्याकैर्धारितोऽयमुदूहः प्रत्यङ्मुखमश्वं तीरमभिलक्ष्योदूहत्यूर्ध्वं प्रेरयति । तथा सति पुरस्तादेव पूर्वस्मादेव वयस आरभ्य प्रतीची प्रतीचीनेऽपि वयस्यस्मिन्यजमानेऽमृतममरणत्वं दधाति ।

अथ सप्तमकाण्डाम्नातौ द्वौ मन्त्रौ क्रमेण विधत्ते—

अहं च त्वं च वृत्रहन्निति ब्रह्मा यजमानस्य हस्तं
गृह्णाति । ब्रह्मक्षत्रे एव संदधाति । अभि क्रत्वेन्द्र भूर-
धज्मन्नित्यध्वर्युर्यजमानं वाचयत्यभिजित्यै(३), इति ।

भवति प्लावयति मिमीते पञ्च च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टकेऽष्टमाध्याये
चतुर्थोऽनुवाकः ॥ ४ ॥

---

स्पष्टोऽर्थः । मन्त्रयोः प्रतीकमात्रमिह निर्दिष्टं संपूर्णयोस्तत्रैवाऽऽम्नातत्वात्तदर्थोऽपि तत्रैव द्रष्टव्यः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डेऽष्टमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

अथ पञ्चमोऽनुवाकः ।

---

चतुर्थेऽश्वस्य जलावगाहनमुक्तम् । पञ्चमे महर्त्विजामश्वप्रोक्षणमुच्यते । तदेतद्विधत्ते—

चत्वार ऋत्विजः समुंक्षन्ति । आभ्य एवैनं
चतसृभ्यो दिग्भ्योऽभिसमीरयन्ति, इति ।

---

१ ग. °श्वस्योदूहनं ।

अध्वर्युब्रह्महोत्रुद्गातारश्चत्वारस्तदीयेन समुक्षणेन प्राच्यादिभ्यश्चतसृभ्यो दिग्भ्यः सकाशादेनमश्वमभिसमीरयन्त्याभिमुख्येन तत्तद्दिशि सम्यगुत्साहयन्ति ।

चतुर्णां प्रोक्षणं संगृह्योक्तत्वाद्विवरितुमादावध्वर्योः प्रोक्षणं विधत्ते—

शतेन राजपुत्रैः सहाध्वर्युः । पुरस्तात्प्रत्यङ्तिष्ठन्प्रोक्षति । अनेनाश्वेन मेध्येनेष्ट्वा । अयꣳ राजा वृत्रं वध्यादिति । राज्यं वा अध्वर्युः । क्षत्रꣳ राजपुत्रः । राज्येनैवास्मिन्क्षत्रं दधाति, इति ।

राजपुत्रा अभिषिक्तक्षत्रियपुत्राः स्वयं राज्यार्हास्तैः शतसंख्याकैः सहितोऽयमध्वर्युः पूर्वस्यां दिशि प्रत्यङ्मुखः स्थित्वा तमश्वं प्रोक्षेत् । अनेनेत्यादिवध्यादित्यन्तः प्रोक्षणमन्त्रः । स्पष्टो मन्त्रार्थः । वृत्रं वारकं पापं शत्रुं वा । राज्यस्वरूपोऽयमध्वर्युः । यजमानेन राज्यार्थमध्वर्योः परीदानात् । तथा च सूत्रकारेणोक्तम्—"ब्राह्मणा राजानश्चायं वोऽध्वर्यू राजा या ममापचितिः सा वा एतस्मिन्यद्वैष करोति तद्वः कृतमासादिति संप्रेष्य यावदाज्ञमध्वर्यू राजा भवति" इति । योऽयं राजपुत्रः स क्षत्रं बलरूपोऽतस्तत्प्रोक्षणे सत्यस्मिन्यजमाने राज्येनैव सह बलं संपादयति ।

ब्रह्मणः प्रोक्षणं विधत्ते—

शतेनाराजभिरुग्रैः सह ब्रह्मा(१) । दक्षिणत उदङ्तिष्ठन्प्रोक्षति । अनेनाश्वेन मेध्येनेष्ट्वा । अयꣳ राजाऽप्रतिधृष्योऽस्त्विति । बलं वै ब्रह्मा । बलमराजोग्रः । बलेनैवास्मिन्बलं दधाति, इति ।

क्षत्रियाः संतोऽपि राज्यानर्हा अराजानः । उग्राः शूराः । अप्रतिधृष्यः केनाप्यतिरस्कार्यः । स्पष्टमन्यत् ।

होतुः प्रोक्षणं विधत्ते—

शतेन सूतग्रामणिभिः सह होता । पश्चात्प्राङ्-

तिष्ठन्प्रोक्षति। अनेनाश्वेन मेध्येनेष्ट्वा। अयꣳ राजाऽस्यै विशः (२)। बहुग्वै बह्वश्वायै बह्वजाविकायै। बहुव्रीहियवायै बहुमाषतिलायै। बहुहिरण्यायै बहुहस्तिकायै। बहुदासपूरुषायै रयिमत्यै पुष्टिमत्यै। बहुरायस्पोषायै राजाऽस्त्विति। भूमा वै होता। भूमा सूतग्रामण्यः। भूम्नैवास्मिन्भूमानं दधाति, इति।

सूताः सारथयः। ग्रामण्यो ग्रामनेतारो ग्रामस्वामिनः। विट्प्रजा, सा विशेष्यते। बहवो गावो यस्या विशः सा बहुगुः। तथा बह्वश्वादीनि विशेषणानि। रयिमती प्रभूतधनयुक्ता। पुष्टिमती शरीरपुष्टियुक्ता। बहुरायस्पोषा बहुविधमणिमुक्तादिधनपुष्टियुक्ता। यथोक्तविशेषणविशिष्टायाः प्रजाया अयं यजमानो राजाऽस्तु। प्रतिविशेषणं पृथक्कर्तुमादरार्थं वा राजेति द्विरुक्तिः। होतुर्भूमरूपत्वं पठनीयमन्त्रबाहुल्यादवगन्तव्यम्। सूतानां ग्रामण्यां भूमरूपत्वं व्यापारबाहुल्यात्।

उद्गातुः प्रोक्षणं विधत्ते—

शतेन क्षत्तसंग्रहीतृभिः सहोद्गाता। उत्तरतो दक्षिणा तिष्ठन्प्रोक्षति (३)। अनेनाश्वेन मेध्येनेष्ट्वा। अयꣳ राजा सर्वमायुरेत्विति। आयुर्वा उद्गाता। आयुः क्षत्तसंग्रहीतारः। आयुषैवास्मिन्नायुर्दधाति, इति।

वैश्यशूद्राभ्यां मातापितृभ्यामुत्पादिताः क्षत्तारः, कोशवृद्धिकारिणः संग्रहीतारः। उद्गात्रादीनामायुष्ट्वं तद्धेतुत्वादुपचर्यते।

प्रतिदिशं राजपुत्रादीनां या शतसंख्या तां प्रशंसति—

शतꣳ शतं भवन्ति। शतायुः पुरुषः शते-

न्द्रियः । आयुष्येवेन्द्रिये प्रतितिष्ठति, इति ।

दशेन्द्रियाणां प्रत्येकं दशसु नाडीषु वृत्तेः शतेन्द्रियत्वम् ।

शतसंख्यागता या चतुःसंख्या समूहे प्रवृत्ता तां प्रशंसति—

चतुःशता भवन्ति । चतस्रो दिशः ।
दिक्ष्वेव प्रतितिष्ठति ( ४ ), इति ।

ब्रह्मा विश उंक्षति दिश एकं च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टकेऽष्टमाध्याये पञ्चमोऽनुवाकः ॥ ५ ॥

---

चतुःशता चत्वारि शतानि ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डेऽष्टमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

अथ षष्ठोऽनुवाकः ।

---

पञ्चमे महर्त्विजां प्रोक्षणमुक्तम् । षष्ठेऽश्वशरीराद्भूमौ पततां बिन्दूनामनुमन्त्रणमुच्यते । तदेतद्विधत्ते—

यथा वै हविषो गृहीतस्य स्कन्दति । एवं वा एत-
दश्वस्य स्कन्दति । यन्निक्तमनालब्धमुत्सृजन्ति ।
यत्स्तोकया अन्वाह । सर्वहुतमेवैनं करोत्यस्कन्दाय ।
अस्कन्नꣳ हि तत् । यद्धुतस्य स्कन्दति, इति ।

यद्यदि निक्तं स्नानेन शोधितमश्वमनालब्धमालम्भनरहितमुत्सृजन्ति बिन्दवः परिक्षिपन्ति तदानीं यस्य यथा यागान्तरेषु गृहीतस्य हविषः कश्चिदंशः स्कन्दति भूमौ पतित्वा विनश्यत्येवमेवाश्वस्य तद्बिन्दुजातं स्कन्दति भूमौ पतित्वा विनश्यति । तस्माद्बिन्दुस्कन्दनदोषपरिहाराय स्तोकया अन्वाह । स्तोका जलस्य लेशा बिन्दवस्तद्विषयाः "अग्नये स्वाहा" इत्यादिमन्त्रोक्तयः

---

१ क. परित्यजन्ति ।

स्तोक्यास्ता अनुब्रूयाद्भूमौ पतितस्तोकाननु तदानीमेव पठेत् । यदेतदनुवचनं तेनानुवचनेन बिन्दूनामस्कन्दाय स्कन्दनदोषपरिहारार्थमेनमश्वं सर्वहुतमेव करोति । स्वाहाकारयुक्तस्य मन्त्रस्य पाठादेव सर्वैर्बिन्दुभिः सहितोऽश्वो हुत एव भवति । तथा सति हुतस्य द्रव्यस्य यल्लेशरूपं स्कन्दति तदस्कन्दनम् । न हि तत्र स्कन्दनदोषोऽस्ति ।

अनुवचनीयानां मन्त्राणां संख्यां विधत्ते—

सहस्रमन्वाह । सहस्रसंमितः सुवर्गो लोकः ।
सुवर्गस्य लोकस्याभिजित्यै (१), इति ।

सप्तमकाण्डे प्रथमप्रपाठकस्य दशिनीषु 'अग्नये स्वाहा' इत्यनुवाकास्त्रय आम्नाताः । तत्र मध्यमानुवाके पठिता एकादश मन्त्राः । तत्रान्तिमः 'सर्वस्मै स्वाहा' इत्ययमुपसंहाररूपत्वादन्ते पठनीयः । ततः पूर्वे तु दश मन्त्राः शतकृत्व आवृत्ताः सहस्रं संपद्यन्ते । तत्सहस्रमनुब्रूयात् । स्वर्गलोकस्य बहुमूल्यत्वाभिप्रायेण सहस्रसंमितत्वमुक्तम् । न हि स्वर्गभोगोऽल्पेन मूल्येन संपादयितुं शक्यः । अतः सहस्रानुवचनेन स्वर्गाभिजयो भवति ।

अथ मन्त्रसंख्यायां पक्षान्तरं विधत्ते—

यत्परिमिता अनुब्रूयात् । परिमितमवरुन्धीत ।
अपरिमिता अन्वाह । अपरिमितः सुवर्गो लोकः ।
सुवर्गस्य लोकस्य समष्ट्यै, इति ।

सहस्रसंख्यां गणयित्वा परिमितस्यानुवचनेन भोगमपि परिमितमेव प्राप्नुयात् । अतो गणनामकृत्वैवापरिमिता अनुब्रूयात् । स्वर्गलोकभोगस्येयत्तया परिमितत्वाभावेनापरिमितवचनं तत्प्राप्तये संपद्यते ।

मन्त्राणां स्वाहाकारोपेतत्वेनानुवचनस्य होमसाम्यमभिप्रेत्य प्रशंसति—

स्तोक्या जुहोति । या एव वर्ष्याः
आपः । ता अवरुन्धे, इति ।

बिन्दुविषया मन्त्रोक्तयः स्तोक्यास्तासामनुवचनरूपेण होमेन वर्षेषु भवा अपः प्राप्नोति ।

होतव्यानां बिन्दूनां भूमौ पतनाद्भूमेरग्निसादृश्यमभिमेत्य प्रशंसति—

अस्यां जुहोति। इयं वा अग्निर्वैश्वानरः (२)। अस्यामेवैनाः प्रतिष्ठापयति, इति।

होमाधारत्वसंपादनाद्भूमेर्वैश्वानराग्निरूपत्वम्। अतस्तत्र होमे सति भूमावेवैना अपः प्रतिष्ठापयति।

स्तोक्यानुवचनस्य यज्ञसमाप्तिहेतुत्वमापद्य प्रशंसति—

उवाच ह प्रजापतिः। स्तोक्यासु वा अहमश्वमेधꣳ सꣳस्थापयामि। तेन ततः सꣳस्थितेन चरामीति, इति।

स्तोक्यासु स्तोकरूपास्वप्सु तद्विषयासु मन्त्रोक्तिषु चैनमश्वमेधक्रतुमहं प्रजापतिः संस्थापयामि। ततः संस्थितेन तावतैव समाप्तेन तेनाश्वमेधेन युक्तोऽहं चराम्यवशिष्टं सर्वं प्रतिपत्तिकर्मरूपत्वेनानुतिष्ठामीत्येवं पुरा कदाचित्प्रजापतिरुवाच किल। तस्मात्प्रशस्तमिदं स्तोक्यानुवचनम्।

तत्र प्रथममन्त्रस्य तात्पर्यं दर्शयति—

अग्नये स्वाहेत्याह। अग्नय एवैनं जुहोति, इति।

चतुर्थ्यन्तमग्निशब्दमुच्चार्य प्रदानार्थस्य स्वाहाशब्दस्य प्रयोगादेनं स्तोकमग्नये हुतवानेव भवति।

एवमुत्तरेषां नवानां मन्त्राणां तात्पर्यं दर्शयति—

सोमाय स्वाहेत्याह। सोमायैवैनं जुहोति। सवित्रे स्वाहेत्याह। सवित्र एवैनं जुहोति। (३)। सरस्वत्यै स्वाहेत्याह। सरस्वत्या एवैनं जुहोति। पूष्णे स्वाहेत्याह। पूष्ण एवैनं जुहोति। बृहस्पतये स्वाहेत्याह।

१ क. °देकं स्तो°।

बृहस्पतय एवैनं जुहोति । अपां मोदाय स्वाहेत्याह । अद्भ्य एवैनं जुहोति । वायवे स्वाहेत्याह । वायव एवैनं जुहोति (४) । मित्राय स्वाहेत्याह । मित्रायैवैनं जुहोति । वरुणाय स्वाहेत्याह । वरुणायैवैनं जुहोति, इति ।

प्रथममन्त्रवद्व्याख्येयम् ।

सर्वमन्त्रतात्पर्यं निगमयति—

एताभ्य एवैनं देवताभ्यो जुहोति, इति ।

अग्न्यादिभ्यो वरुणान्ताभ्य एव देवताभ्य उक्तमन्त्रपाठेनैनं स्तोकसंघं जुहोति ।

पूर्वत्र सहस्रमन्वाहेति यदुक्तं तत्रैकैकस्य मन्त्रस्य शतावृत्त्याऽपि क्रमेण सहस्रं संपादयितुं शक्यते । तद्व्यावर्तयितुं मन्त्रदशकस्यैवाऽऽवृत्तिं विधत्ते—

दश दश संपादं जुहोति । दशाक्षरा विराट् । अन्नं विराट् । विराजैवान्नाद्यमवरुन्धे, इति ।

एकैकस्यामावृत्तौ दशसंख्याकान्मन्त्रान्संपाद्यानुब्रूयात् । संघस्यैवानुवृत्तिर्न त्वेकैकस्य मन्त्रस्य । दशसंख्यायां संपन्नायां विराट्छन्दसो दशाक्षरत्वादन्नहेतुत्वेनान्नरूपत्वाद्विराजैव भक्ष्यमाणयोग्यमन्नं प्राप्नोति ।

दशानां मन्त्राणामावृत्तिं विधत्ते—

प्र वा एषोऽस्माल्लोकाच्च्यवते । यः पराचीराहुतीर्जुहोति । पुनः पुनरभ्यावर्तं जुहोति । अस्मिन्नेव लोके प्रतितिष्ठति, इति ।

यो यजमानो मन्त्रानुवचनरूपा एता आहुतीः पराचीरावृत्तिरहिता जुहोति एष यजमानः पुनरावृत्त्यभावाद्भूलोकात्प्रच्यवतेऽतस्तत्परिहाराय भूयो भूयो मन्त्रानावृत्त्याऽऽवृत्त्यैता जुहोति । तेन भूमौ प्रतितिष्ठति ।

योऽयमनुवाकादावुपक्रान्तः स्कन्दनदोषस्तं समाधायोपसंहरति-

एताꣳ ह वाव सोऽश्वमेधस्य सꣳस्थिति-
मुवाचास्कन्दाय । अस्कन्नꣳ हि तत् ।
यद्यज्ञस्य सꣳस्थितस्य स्कन्दति, इति ।

अभिजित्यै वैश्वानरः संवित्र एवैनं जुहोति वायव एवैनं जुहोति
च्यवते षट् च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टकेऽष्टमाध्याये
षष्ठोऽनुवाकः ॥ ६ ॥

---

स प्रजापतिरेतामेवोक्तामाहुतिं स्कन्दनदोषपरिहारायाश्वमेधस्य समाप्तिहेतु-मुवाच । संस्थितस्य यज्ञस्य संबन्धि यद्द्रव्यं स्कन्दति तदस्कन्दनमेव ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्ति-रीयब्राह्मणभाष्ये तृतीयकाण्डेऽष्टमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

अथ सप्तमोऽनुवाकः ।

---

षष्ठे स्तोकानुमन्त्रणमुक्तम् । सप्तमेऽध्वर्योरेकस्यैव चतुर्दिक्षु प्रोक्षणमुच्यते । तत्र प्राच्यां प्रोक्षणं विधत्ते-

प्रजापतये त्वा जुष्टं प्रोक्षामीति पुरस्तात्प्रत्यङ्-
तिष्ठन्प्रोक्षति । प्रजापतिर्वै देवानामन्नादो वीर्या-
वान् । अन्नाद्यमेवास्मिन्वीर्यं दधाति । तस्मादश्वः
पशूनामन्नादो वीर्यावत्तमः, इति ।

हेऽश्व प्रजापतये जुष्टं प्रियं त्वां प्रोक्षामि । अनेन मन्त्रेण पूर्वस्यां दिशि प्रत्यङ्मुखोऽवस्थितोऽध्वर्युः प्रोक्षेत् । प्रजापतिर्देवानां मध्येऽतिशयेनान्नभक्षणस-मर्थो वीर्योपेतश्च । तन्मन्त्रबलादस्मिन्नश्वेऽन्नादनसामर्थ्यं शक्त्यतिशयं च

संपादयति। तस्मात्कारणाल्लोकेऽप्यश्वः पशूनां मध्ये बह्वन्नभक्षकोऽतिशयेन वीर्यवांश्च दृश्यते।

दक्षिणस्यां प्रोक्षणं विधत्ते—

इन्द्राग्निभ्यां त्वेति दक्षिणतः। इन्द्राग्नी वै देवाना-
मोजिष्ठौ बलिष्ठौ। ओज एवास्मिन्बलं दधाति।
तस्मादश्वः पशूनामोजिष्ठो बलिष्ठः, इति।

इन्द्राग्निभ्यां त्वा जुष्टं प्रोक्षामीति वाक्यशेषः। देवानां मध्ये तावतिशयेनौजसा बलहेतुना युक्तौ बलाधिक्ययुक्तौ चातोऽश्वेऽपि तदुभयं संपादयति। तस्माल्लोकेऽप्यश्वस्तादृशो दृश्यते।

पश्चिमदिशि प्रोक्षणं विधत्ते—

वायवे त्वेति पश्चात्। वायुर्वै देवानामाशुः
सारसारितमः (१)। जवमेवास्मिन्दधाति।
तस्मादश्वः पशूनामाशुः सारसारितमः, इति।

देवानां मध्ये वायुराशुः शैघ्र्यवानत एवातिशयेन सारसार्युत्कर्षगामी। वायुमन्त्रेणास्मिन्नश्वे वेगस्थापनाल्लोकेऽप्यश्वस्तादृशो दृश्यते।

उदीच्यां प्रोक्षणं विधत्ते—

विश्वेभ्यस्त्वा देवेभ्य इत्युत्तरतः। विश्वे वै
देवा देवानां यशस्वितमाः। यश एवास्मि-
न्दधाति। तस्मादश्वः पशूनां यशस्वितमः, इति।

युद्धादावश्वस्यातिशयेन यशस्वित्वम्। स्पष्टमन्यत्।

अश्वस्याधोभागे प्रोक्षणं विधत्ते—

देवेभ्यस्त्वेत्यधस्तात्। देवा वै देवानामपचि-
ततमाः। अपचितिमेवास्मिन्दधाति। तस्मा-

दृश्वः पशूनामपचिततमः ( २ ), इति ।

सर्वलोकवर्तिनां सर्वेषां देवानां मध्ये हविर्भुजो देवा अतिशयेन पूजिताः। ऊर्ध्वभागे प्रोक्षणं विधत्ते—

सर्वेभ्यस्त्वा देवेभ्य इत्युपरिष्टात् ।
सर्वे वै देवास्त्विषिमन्तो हरस्विनः ।
त्विषिमेवास्मिन्हरो दधाति। तस्माद-
श्वः पशूनां त्विषिमान्हरस्वितमः, इति ।

त्विषिमन्तो दीप्तिमन्तो हरस्विनो हरसा कार्यक्षमत्वलक्षणेन तेजसा युक्ताः । स्पष्टमन्यत् ।

अथावशिष्टप्रोक्षणमन्त्रपूर्वभागस्य तात्पर्यं दर्शयति—

दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वेत्याह ।
एभ्य एवैनं लोकेभ्यः प्रोक्षति, इति ।

दिवे त्वा जुष्टं प्रोक्षामीत्यध्याहृत्यार्थो द्रष्टव्यः । एवमन्तरिक्षाय त्वेत्यादौ योजनीयम् । अनेन लोकत्रयप्रीतिर्भवति ।

उत्तरभागस्य तात्पर्यं दर्शयति—

सते त्वाऽसते त्वाऽद्भ्यस्त्वौषधीभ्यस्त्वा
विश्वेभ्यस्त्वा भूतेभ्य इत्याह । तस्मादश्वमे-
धयाजिनꣳ सर्वाणि भूतान्युपजीवन्ति, इति ।

सते वर्तमानवस्तुप्राप्त्यर्थमसत इदानीमप्यविद्यमानाय कालान्तरवर्तिने । यस्मात् ‘ विश्वेभ्यो भूतेभ्यः ’ इति मन्त्रेणाश्वः प्रोक्षितस्तस्मादश्वमेधयाजिनं देवादिरूपेणोत्पन्नं सर्वे प्राणिन उपजीवन्ति । संहितायां—‘पृथिव्यै त्वाऽन्तरिक्षाय त्वा दिवे त्वा ’ इति मन्त्रपाठः । अत्र तु—‘ दिवे त्वा ’ इत्यादिक इति पाठो विकल्प(ल्प्य)ते ।

अथ ‘ विश्वेभ्यस्त्वा देवेभ्यः ’ इति मन्त्रेण प्रोक्षणं प्रश्नोत्तराभ्यां प्रशंसति—

ब्रह्मवादिनो वदन्ति । यत्प्राजापत्योऽश्वः ।

अथ कस्मादेनमन्याभ्यो देवताभ्योऽपि प्रोक्ष-
तीति । अश्वे वै सर्वा देवता अन्वायत्ताः ।
तं यद्विश्वेभ्यस्त्वा भूतेभ्य इति प्रोक्षति ।
देवता एवास्मिन्नन्वायातयति । तस्मादश्वे
सर्वा देवता अन्वायत्ताः ( ३ ), इति ।

सारसारितमोऽपचिततमः प्राजापत्योऽश्वः पञ्च च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टकेऽष्टमा-
ध्याये सप्तमोऽनुवाकः ॥ ७ ॥

---

अश्वस्य प्रजापतिदेवताकत्वात्प्रजापत्यर्थं प्रोक्षणं युक्तम् । अत्र त्विन्द्रा-ग्न्यादिदेवतार्थमपि प्रोक्ष्यते तत्किंनिमित्तमिति ब्रह्मवादिनां प्रश्नः । यद्यपि प्रजापतिरेव मुख्यस्वामी तथाऽपि प्रजापतेः सर्वदेवतात्मकत्वात्तद्द्वारा सर्वासामपि देवतानामश्वेऽनुगतिरस्ति । अत एवोदीच्यां दिशि 'विश्वेभ्यस्त्वा देवेभ्यः' इति मन्त्रेणाश्वः प्रोक्षितस्तेन प्रोक्षणेन सर्वा अपि देवता अस्मिन्नश्वेऽनुगताः करोति । तस्मात्प्रजापतिद्वारा मन्त्रसामर्थ्यादप्यस्मिन्नश्वे सर्वा अपि देवता अनुगता इति तदर्थमपि प्रोक्षणं युक्तम् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरी-
यब्राह्मणभाष्ये तृतीयकाण्डेऽष्टमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

अथाष्टमोऽनुवाकः ।

---

सप्तमेऽध्वर्योरश्वप्रोक्षणमुक्तम् । अष्टमेऽश्वचरितानामश्वरूपाणां च होमा उच्यन्ते । तत्राश्वचरितहोमं विधत्ते—

यथा वै हविषो गृहीतस्य स्कन्दति । एवं वा
एतदश्वस्य स्कन्दति । यत्प्रोक्षितमनालब्धमु-
त्सृजन्ति । यदश्वचरितानि जुहोति । सर्वहुत-

मेवैनं करोत्यस्कन्दाय । अस्कन्नꣳ हि तत् ।
यद्धुतस्य स्कन्दति, इति ।

स्तोक्यानुमन्त्रणविधिवाक्यवदिदमश्वचरितहोमविधिवाक्यं व्याख्येयम् । होममन्त्राणां तात्पर्यं दर्शयति—

ईंकाराय स्वाहेंकृताय स्वाहेत्याह ।
एतानि वा अश्वचरितानि । चरितैरेवैनꣳ समर्धयति ( १ ), इति ।

अश्वो हि खाद्यं दृष्ट्वा याचितुं यं शब्दं करोति स शब्द ईंकारस्तस्मै स्वाहुतमिदमस्तु । ईंकारेण शब्देन विषयीकृतं यद्द्रव्यं तदींकृतं तस्मै स्वाहुतमिदमस्तु । ईंकारायेत्यादिकः सप्तमकाण्डोक्तो योऽनुवाकस्तस्मिन्ननुवाके प्रोक्तान्येतानि सर्वाण्येश्वचरितानि । तद्धोमेनाश्वचरितैः समृद्धं करोति ।

अश्वचरितहोममाक्षिप्य समाधत्ते—

तदाहुः । अनाहुतयो वा अश्वचरितानि ।
नैता होतव्या इति । अथो खल्वाहुः ।
होतव्या एव । अत्र वावैवं विद्वानश्वमेधꣳ
सꣳस्थापयति । यदश्वचरितानि जुहोति ।
तस्माद्धोतव्या इति, इति ।

तत्राश्वचरितहोमविषये केचिदाक्षेपवादिन एवमाहुः—यान्येतान्यश्वचरितानि, ईंकारादीनि तेषां चेष्टारूपत्वेन देवतात्वाभावाद्देवतारहितस्य च हविष्प्रदानस्याभावादश्वचरितानामाहुतियोग्यता नास्ति । तस्मादेता अश्वचरितप्रतिपादकमन्त्रैः साध्या आहुतयो न होतव्या इति । अत्र समाधानवादिन एवमाहुः—होतव्या एवैता आहुतयो देवतानां सद्भावात् । जैमिनीयमते तावद्विग्रहवती देवता नापेक्षिता । मन्त्रगतशब्दोपहितस्यैवार्थस्य देवतात्वाभ्युपगमात् । वैयासकमते तु सन्त्येव सर्वत्र तत्तदभिमानिन्यो देवताः । " अभिमा-

१ क. 'न्द्रोदित' ।

निर्व्यपदेशस्तु" इति सूत्रेण 'मृदब्रवीदापोऽब्रुवन्' इत्यादौ विग्रहवतीनां चेतनानां देवतानां प्रतिपादितत्वात्। तस्माद्धोतव्या एव। न चात्र होमे प्रयोजनाभावः शङ्कनीयः। यदश्वचरितानि जुहुयात्तदानीमेवं विद्वानेतद्धोमाभिज्ञः कृत्स्नचेष्टाविषयहोमेन कृत्स्नावयवस्याश्वस्य हुतसमानत्वादत्रैव कृत्वादोवेव सर्वमश्वमेधं समापयति। अतः प्रोक्षितस्याश्वस्याऽऽलम्भात्प्रागेवोत्सर्गेऽपि स्कन्दनदोषाभावाद्धोतव्या आहुतय इति निर्णयः।

तासामाहुतीनां देशकालौ विधत्ते—

बहिर्धा वा एनमेतदायतनाद्दधाति। भ्रातृव्यमस्मै जनयति (२)। यस्यानायतनेऽन्यत्राग्नेराहुतीर्जुहोति। सावित्रिया इष्ट्याः पुरस्तात्स्विष्टकृतः। आहवनीयेऽश्वचरितानि जुहोति। आयतन एवास्याऽऽहुतीर्जुहोति। नास्मै भ्रातृव्यं जनयति, इति।

यस्य यजमानस्याग्नेरन्यत्र प्रदेशेऽनायतन आहुतीनामयोग्ये स्थाने यद्याहुतीर्जुहोति तदानीमेनं यजमानमेतदेतेनान्यत्र होमेनाऽऽयतनाद्बहिर्धा बहिर्दधाति स्वकीयस्थानान्निःसारयति। किंचास्य यजमानस्य शत्रुं जनयति। तस्माद्येयमिष्टिः 'सावित्रमष्टाकपालं निर्वपति' इति विधास्यते तदीयास्विष्टकृतः पूर्वमाहवनीयाग्नावेतानि जुहुयात्। 'स्विष्टकृतः पुरस्तात्' इति कालविधिः। 'आहवनीये' इति देशविधिः। एवं सत्याहुतियोग्य एव स्थाने हुतवान्भवति। शत्रुश्च नोत्पद्यते।

"तत्र सावित्रिया इष्ट्याः" इति विशेषमसहमानानां केषांचिन्मतमुपन्यस्यति—

तदाहुः। यज्ञमुखे यज्ञमुखे होतव्याः। यज्ञस्य क्लृप्त्यै। सुवर्गस्य लोकस्यानुख्यात्या इति, इति।

तत्तदिष्टिप्रारम्भे सर्वत्र होतव्याः। तथा सति यज्ञस्येष्टेः सर्वस्याः स्वफ-

१ क. 'दावेनं स'।

लसामर्थ्याय स होमः संपद्यते । किंच स्वर्गलोकोऽपि नैरन्तर्येण प्रख्यापितो भवति ।

एतस्य पूर्वपक्षमतस्य निरोधकर्तॄणां सिद्धान्तिनां मतं दर्शयति—

अथो खल्वाहुः । यद्यज्ञमुखे यज्ञमुखे जुहुयात् । पशुभिर्यजमानं व्यर्धयेत् । अव सुवर्गाल्लोकात्पद्येत । पापीयान्त्स्यादिति । सकृदेव होतव्याः । न यजमानं पशुभिर्व्यर्धयति । अभि सुवर्गं लोकं जयति । न पापीयान्भवति, इति ।

तत्तदिष्ट्यारम्भे यदि जुहुयात्तदानीमेकस्मिन्होमे फलसाधकत्वविश्वासाभावेनेह लोके यजमानं पशुभिर्वियुक्तं कुर्यात् । जन्मान्तरेऽपि स्वर्गप्राप्तेश्चावपद्येत तत्प्राप्तिरहितो भवेत् । यत्रोत्पन्नस्तत्रापि पापीयानतिशयेन दरिद्रो भवेदित्येवमभिज्ञाः पूर्वमतं दूषयन्ति । तस्मात्सकृदेव होतव्याः । तथा सति तत्र विश्वाससद्भावान्नोक्तदोषाः प्रसरन्ति ।

यथोक्ताश्वचरितहोमानन्तरमेव ' अञ्ज्येताय स्वाहा कृष्णाय स्वाहा ' इत्यनुवाकद्वयोक्तानामश्वरूपाणां होमं विधत्ते—

अष्टाचत्वारिꣳशतमश्वरूपाणि जुहोति । अष्टाचत्वारिꣳशदक्षरा जगती । जागतोऽश्वः प्राजापत्यः समृद्ध्यै, इति ।

' अञ्ज्येताय स्वाहा ' इति मन्त्रोऽश्वस्य रूपं ब्रूते । अञ्जिरञ्जनवर्णः कृष्ण एतः शुक्ल उभयवर्णमेलनेन मिश्रमश्वस्य रूपमत्रोक्तम् । एवमुत्तरेष्वपि मन्त्रेषु नानाविधानि स्वरूपाण्युच्यन्ते । तद्रूपप्रतिपादकाश्च मन्त्रा अनुवाकद्वये मिलित्वाऽष्टाचत्वारिंशत्संख्याकास्तत्प्रतिपाद्यानि तावन्ति रूपाण्युद्दिश्य जुहुयात् । जगतीछन्दसस्तत्संख्यायुक्ताक्षरोपेतत्वात्पशूनां जगतीछन्दो लभ्यते । तेनाश्वस्य जागतत्वात्तादृशोऽश्वः प्रजापतिदेवताकः ।

१ ख. "निरासाथे" ।

अनुवाकद्वयेऽपि 'सर्वस्मै स्वाहा' इत्ययं मन्त्रोऽन्ते समाम्नातः । नासौ पूर्वमन्त्रवत्कंचिद्रूपविशेषं ब्रूते । तस्य समष्टिरूपवाचकत्वात् । नाप्यष्टाचत्वारिंशत्संख्यायामन्तर्भूतः । तस्मात्तद्धोमं पृथग्विधत्ते—

एकमतिरिक्तं जुहोति । तस्मा-
देकः प्रजास्वर्धुकः (४), इति ।

अर्धयति जनयति खल्वाहुर्जगती त्रीणि च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टकेऽष्टमाध्यायेऽष्टमोऽनुवाकः ॥ ८ ॥



यस्मादत्र समष्टिवाचक उक्तसंख्यातिरिक्तस्तस्माल्लोकेऽपि प्रजासु सर्वासु मध्य एक एव स्वामी समृद्धिशीलो भवति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डेऽष्टमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

अथ नवमोऽनुवाकः ।

---

अष्टमेऽश्वचरितानामश्वरूपाणां च होम उक्तः । नवमेऽश्वनामवाचनमभिधीयते । तथा च सूत्रकार आह—"विभूर्मात्रा प्रभूः पित्रेत्यश्वस्य दक्षिणे कर्णे यजमानमश्वनामानि वाचयित्वा" इति । तानि च नामानि सप्तमकाण्ड एवमाम्नातानि—"विभूर्मात्रा प्रभूः पित्राऽश्वोऽसि हयोऽस्यत्योऽसि नरोऽस्यर्वाऽसि सप्तिरसि वाज्यसि वृषाऽसि नृम्णा असि ययुर्नामाऽस्यादित्यानां पत्वाऽन्विहि" इति । तत्राऽऽद्यस्य नामद्वयस्य तात्पर्यं दर्शयति—

विभूर्मात्रा प्रभूः पित्रेत्याह । इयं वै माता ।
असौ पिता । आभ्यामेवैनं परिददाति, इति ।

अयमश्वः स्वकीयमातृसामर्थ्येन विभूर्वैभवयुक्तः । स्वकीयपितृसामर्थ्येन प्रभूः प्रभावयुक्तः । वैभवं विविधभक्षसंपत्तिः । प्रभवं युद्धादौ योद्धृत्वम् । इति मन्त्रो यदाह तेन सर्वजगन्मात्रे पृथिव्यै सर्वजगत्पितृस्थानीयद्युलोकाय चैनमश्वं समर्पितवान्भवति ।

तृतीयचतुर्थयोर्नाम्नोस्तात्पर्यं दर्शयति—

अश्वोऽसि हयोऽसीत्याह । शास्त्येवैन-
मेतत् । तस्माच्छिष्टाः प्रजा जायन्ते, इति ।

अश्वोऽसि व्याप्तिशीलोऽसि । हयोऽसि शीघ्रगतिमानसि । एतदेतेन मन्त्रेणैनमश्वं शास्त्येव व्याप्तिशीलः शीघ्रगतिशीलो भवेत्युपदिशत्येव । यस्मादत्र शासनं कृतं तस्माल्लोकेऽपि प्रजाः पुत्रादयः शिष्टा जायन्ते । एवमेवं वर्तध्वमिति मातापितृभ्यामनुशिष्टा भवन्ति ।

पञ्चमनाम्नस्तात्पर्यं दर्शयति—

अत्योऽसीत्याह । तस्मादश्वः सर्वान्प-
शूनत्येति । तस्मादश्वः सर्वेषां
पशूनाꣳ श्रैष्ठ्यं गच्छति (१), इति ।

पशुजातीयान्सर्वानपि श्रैष्ठ्येन जेतुं समर्थत्वादत्यनामाऽसि । यस्मान्मन्त्र एवमाह तस्माल्लोकेऽप्यश्वो गोमहिषादीन्सर्वान्पशूनत्येति श्रैष्ठ्यं च गच्छति । अधिककार्यकारित्वमत्ययः । बहुमूल्यार्हत्वं श्रैष्ठ्यम् ।

एतन्नामवेदनं प्रशंसति—

प्र यशःश्रैष्ठ्यमाप्नोति । य एवं वेद, इति ।

कीर्तिधनविद्यादिभिराधिक्यं यशःश्रैष्ठ्यम् ।

षष्ठादीनां चतुर्णां नाम्नां तात्पर्यं दर्शयति—

नरोऽस्यर्वाऽसि सप्तिरसि वाज्यसीत्याह ।
रूपमेवास्यैतन्महिमानं व्याचष्टे, इति ।

उपर्यारूढान्पुरुषान्नेतुं समर्थो नरः । अर्वा गमनकुशलः । सप्तिः संग्रामेषु समवायकुशलः । वाजी वेगवान् । तेषां नाम्नां स्वरूपमेवाश्वस्य महिमानं विख्यापयति । अतो नास्माभिर्वक्तव्यं किंचिदस्ति ।

दशमस्य नाम्नस्तात्पर्यं दर्शयति—

ययुर्नामाऽसीत्याह । एतद्वा अश्वस्य प्रियं

१ क. °नप्यत्येतुं श्रैष्ठ्यं च गन्तुं स° ।

नामधेयम् । प्रियेणैवैनं नामधेयेनाभिवं-
दति । तस्मादप्यांऽमित्रौ संगत्यं । नाम्ना
चेद्ध्वयेते । मित्रमेव भवतः (२), इति ।

यानशीलो ययुर्नामाऽस्येतन्नामधार्यसि । ययुरित्येतदेव सर्वेषां नाम्नां मध्येऽश्वस्य प्रियं नामधेयम् । एतदेव प्रियत्वं दर्शयितुमत्र मन्त्रे नामशब्दः प्रयुक्तः । एतन्मन्त्रपाठे सति प्रियेणैव नामधेयेनैनमश्वमभिमुखीकृत्य ब्रवीति । यस्मात्प्रियं नामोक्तं तस्मादमित्रौ परस्परवैरिणावपि क्वचिन्मार्गादौ परस्परं संगत्य हे स्वामिन्हे पितरित्यादिना प्रियेण नाम्ना परस्परमाह्वयेते चेत्तदानीमेव वैरं परित्यज्य मित्रतां प्रतिपद्येते ।

एकादशस्य नाम्नस्तात्पर्यं दर्शयति—

आदित्यानां पत्वाऽन्विहीत्याह ।
आदित्यानेवैनं गमयति, इति ।

हेऽश्व त्वमादित्यानां पत्वं पतनं गमनमन्विह्यनुगच्छ । अत्राऽऽदित्यसमानगतिरित्येतन्नामार्थतो निर्दिष्टम् । अनेन मन्त्रेणैनमश्वमादित्यानेव प्रापयति ।

एतस्मान्नामवाचनादनन्तरमनुष्ठेयान्होमान्विधत्ते—

अग्नये स्वाहा स्वाहेन्द्राग्निभ्यामिति पूर्वहोमाञ्जु-
होति । पूर्व एव द्विषन्तं भ्रातृव्यमतिक्रामति, इति ।

आहवनीयविहरणानन्तरमेवैतेषामितरहोमेभ्यः पूर्वमनुष्ठेयत्वात्पूर्वहोमाः । तत्रैते पञ्च मन्त्राः संहितायामाम्नाताः—' अग्नये स्वाहा । स्वाहेन्द्राग्निभ्याम् । स्वाहा प्रजापतये । स्वाहा विश्वेभ्यो देवेभ्यः । स्वाहा सर्वाभ्यो देवताभ्यः ' इति । अत्र प्रथममन्त्रः स्वाहान्तः । इतरे स्वाहादिकाः । तानेतान्पञ्चाभिप्रेत्य होमानिति बहुवचनमुक्तम् । अनेन होमेनेतरयजमानेभ्यः पूर्वभावी सन्द्वेषकारिणं शत्रुमतिक्रामति ।

होमादूर्ध्वमश्वोत्सर्गं विधत्ते—

भूरसि भुवे त्वा भव्याय त्वा भवि-
ष्यते त्वेत्युत्सृजति सर्वत्वाय, इति ।

हेऽश्व त्वं भूरसि नित्यं सत्तायुक्तोऽसि । अतो भुवे भूताय पूर्वं निष्पन्नाय वस्तुने त्वामुत्सृजामि । भव्याय भवते वर्तमानाय त्वामुत्सृजामि । तथा भविष्यते भाविने वस्तुने त्वामुत्सृजामि । कालत्रयवर्तिवस्तुरक्षार्थमित्यर्थः । अस्य मन्त्रस्य शेषः'–विश्वेभ्यस्त्वा भूतेभ्यः ' इत्ययमंशः संहितायामाम्नातः । अतोऽनेन मन्त्रेणोत्सर्गः सर्वत्वाय सर्ववस्तुरक्षार्थं संपद्यते ।

यदुक्तं सूत्रकारेण–' अश्वमुत्सृज्य देवा आशापाला इति त्रिभ्यः परिददाति शतं कवचिनो रक्षन्त्यपर्यावर्तयन्तोऽश्वमनुचरन्ति चतुःशता इत्येकेषाम् " इति । तं मन्त्रमनूद्य तात्पर्यं दर्शयति–

देवा आशापाला एतं देवेभ्योऽश्वं
मेधाय प्रोक्षितं गोपायतेत्याह । शतं
वै तल्प्या राजपुत्रा देवा आशा-
पालाः । तेभ्य एवैनं परिददाति, इति ।

हे आशापाला दिक्पालका देवा देवेभ्योऽश्वं मेधाय देवसंबन्धियागार्थं प्रोक्षितमेतमश्वं गोपायत । अस्मिन्मन्त्र आशापालदेवशब्देनाभिषिक्तस्य राज्ञः पुत्रास्तल्प्या राज्ञा सहैकस्मिंस्तल्पे शयनार्हाः शतसंख्याका विवक्षिताः । अतोऽनेन मन्त्रेण तेभ्य एव राजपुत्रेभ्यो रक्षार्थमेनमश्वं परिददाति ।

यदुक्तं सूत्रकारेण–' रथकारकुले वसतिर्भवतीह धृतिः स्वाहेति सायमश्वस्य चतुर्षु पत्सु चतस्रो धृतीर्जुहोति ' इति । तदिदं विधत्ते–

ईश्वरो वा अश्वः प्रमुक्तः परां परावतं गन्तोः ।
इह धृतिः स्वाहेह विधृतिः स्वाहेह रन्तिः स्वाहेह
रमतिः स्वाहेति चतुर्षु पत्सु जुहोति ( २ ) ।
एता वा अश्वस्य बन्धनम् । ताभिरेवैनं बध्नाति ।
तस्मादश्वः प्रमुक्तो बन्धनमागच्छति । तस्मादश्वः
प्रमुक्तो बन्धनं न जहाति, इति ।

स्वेच्छासंचाराय प्रमुक्तोऽश्वः परां परावतमत्यन्तं दूरं गन्तोरीश्वरो गन्तुं

समर्थः। अतो रात्रावरक्षकेषु राजपुत्रेषु यत्र क्वापि गमिष्यतीति भीत्या सायंकाले तमश्वं रथकारगृहे स्थापयित्वा तदीयेषु चतुर्षु पदेषु चतुर्भिर्मन्त्रैर्जुहुयात्। मन्त्राणामयमर्थः—इह दक्षिणपूर्वपादस्य स्थाने धृतिर्धारणं नैश्चल्यमस्तु तदर्थमिह स्वाहुतम्। इह वामपूर्वपादस्थाने विधृतिर्विशेषेण धारणमस्तु तदर्थमिदं स्वाहुतम्। इह दक्षिणपृष्ठपादस्थाने रन्तिः स्थैर्येण क्रीडाऽस्तु। एवं वामपृष्ठपादस्थानेऽपि रमतिः स्थैर्येण क्रीडाऽस्तु। इत्येता आहुतय एवाश्वस्य बन्धनम्। ताभिरेवाऽऽहुतिभिरेनमश्वं बध्नाति। तस्मादाहुतिसामर्थ्यादेव स्वेच्छासंचाराय प्रमुक्तोऽप्यश्वः सायं बन्धनस्थानं प्रत्यागच्छति। तस्मादेव सामर्थ्यात्प्रमुक्तोऽश्वो रात्रौ बन्धनस्थानं न परित्यजति।

शतं राजपुत्रा रक्षका इत्यमुं पक्षमुक्त्वा शतचतुष्टयसंख्याका रक्षका इत्यमुं पक्षं विधत्ते—

राष्ट्रं वा अश्वमेधः। राष्ट्रे खलु वा एते व्यायच्छन्ते। येऽश्वं मेध्यꣳ रक्षन्ति। तेषां य उदृचं गच्छन्ति। राष्ट्रादेव ते राष्ट्रं गच्छन्ति। अथ य उदृचं न गच्छन्ति। राष्ट्रादेव ते व्यवच्छिद्यन्ते। परा वा एष सिच्यते। योऽबलोऽश्वमेधेन यजते। यदमित्रा अश्वं विन्देरन्। हन्येतास्य यज्ञः। चतुःशता रक्षन्ति। यज्ञस्याघाताय, इति।

योऽयमश्वमेधो यागः सोऽयं राष्ट्रस्वरूपभूत एव। तत्प्राप्तिहेतुत्वात्। एवं सति यागयोग्यमश्वं ये रक्षन्ति ते राष्ट्रनिमित्तमेव तस्करैः सह कलहं कुर्वन्ति। तेषां रक्षकाणां मध्ये ये पुरुषा उदृचमुत्तममन्तपर्यन्तं रक्षणसमाप्तिपर्यन्तामित्यर्थः। तां समाप्तिं ये गच्छन्ति ते पुरुषा अस्माद्वर्तमानाद्राष्ट्रादेव कर्मफलरूपं भावि राष्ट्रं गच्छन्ति। अथ ये रक्षका उदृचं रक्षणसमाप्तिं न गच्छन्ति ते वर्तमानादेव राष्ट्राद्व्यवच्छिद्यन्ते। किं पुनर्वक्तव्यं भाविराष्ट्रात्। एवं सति यो राजा तस्करानश्वापहारिणो जेतुं बलहीनोऽश्वमेधेन यष्टुमारभत एष राजा परासिच्यते यज्ञात्पराभूतो भवति। यदि शत्रवोऽश्वं विन्देरन्लभेरन्नपहरेयुस्तदानीमस्य यज्ञो

१ ख. ग. रात्रौ र°।

हन्येत । तस्मात्तद्व्यावृत्त्यर्थं शतचतुष्टयसंख्याका मुख्याः पुरुषास्तमश्वं रक्षेयुः । तान्सूत्रकार उदाजहार—"शतं तल्प्या राजपुत्राः संनद्धाः संनद्धसारथिनः शतमुग्रा अराजानः संनद्धाः संनद्धसारथिनः शतं वैश्या विपथिनः शतं शूद्रा विमाथिनस्तेऽश्वस्य गोप्तारो भवन्ति" इति ।

प्रमादादश्वेऽपहृते सति प्रायश्चित्तं विधत्ते—

अथान्यमानीय प्रोक्षेयुः । सैव
ततः प्रायश्चित्तिः (४), इति ।

गच्छति भवतः परसु जुहोति न गच्छन्ति नव च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टकेऽष्टमाध्याये
नवमोऽनुवाकः ॥ ९ ॥

---

चतुःशतैः संरक्ष्यमाणमप्यश्वं यद्यमित्रा गृह्णीयुस्तदानीमन्यमश्वं तद्रूपवर्णवयसं तमानीय प्रोक्षणं कुर्युः । सैव प्रोक्षणक्रिया ततोऽश्वनाशदोषात्प्रायश्चित्तिविमोक्षणहेतुः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डेऽष्टमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

अथ दशमोऽनुवाकः ।

---

नवमेऽश्वनामवाचनमश्वोत्सर्गश्चेत्युभयमभिहितम् । दशमे दीक्षाऽभिधीयते । यदुक्तं सूत्रकारेण—"एतस्य संवत्सरस्य योत्तराऽमावास्या तस्यामुखां संभरति त्रैधातवीया दीक्षणीयाऽऽकूत्यै प्रयुजेऽग्नये स्वाहेति चत्वार्यौद्ग्रहणानि जुहोति स्वाहाऽऽधिमाधीताय स्वाहेति त्रीणि वैश्वदेवानि जुहोति" इति । तत्र वैश्वदेवानि विधत्ते—

प्रजापतिरकामयताश्वमेधेन यजेयेति । स
तपोऽतप्यत । तस्य तेपानस्य । सप्ताऽऽत्मनो
देवता उदक्रामन् । सा दीक्षाऽभवत् । स

---

१ क. °द्रा वरूथि° ।

एतानि वैश्वदेवान्यपश्यत् । तान्यजुहोत् । तैर्वै स दीक्षामवारुन्ध । यद्वैश्वदेवानि जुहोति । दीक्षामेव तैर्यजमानोऽवरुन्धे ( १ ), इति ।

प्रजापतिरश्वमेधं यष्टुं कामयमानस्तत्सिद्धये तपोऽकुरुत । तस्य तेपानस्य तपः कृतवतः प्रजापतेरात्मनः सकाशात्सप्त शीर्षण्या मुख्यप्राणरूपा देवता उदक्रामन् । ताश्च देवताः स्वकीयं रूपमुपसंहृत्य दीक्षारूपेणाऽऽविर्भूताः । ततः सा सप्तदेवात्मिका दीक्षाऽभवत् । तस्यां दीक्षायां स प्रजापतिरेतानि स्वाहाऽऽधिमाधीताय स्वाहेत्यादीनि वैश्वदेवनामकानि मन्त्रवाक्यानि( णि ) दृष्ट्वा तानि हुत्वा तैर्दीक्षां स्वाधीनां कृतवान् । अतो यजमानो वैश्वदेवानि जुहुयात् । तैर्दीक्षां स्वाधीनां करोति ।

संख्यां विधत्ते—

सप्त जुहोति । सप्त हि ता देवता उदक्रामन् , इति ।

देवतानां दीक्षारूपेण परिणतानां सप्तत्वादत्रापि सप्त जुहुयात् ।

तेषां सप्तानां प्रतिदिनं होमं विधत्ते—

अन्वहं जुहोति । अन्वहमेव दीक्षामवरुन्धे, इति ।

स्पष्टोऽर्थः ।

सामान्येन विहितं विशेषेण विभज्य विधत्ते—

त्रीणि वैश्वदेवानि जुहोति । चत्वार्यौद्ग्रहणानि । सप्त संपद्यन्ते । सप्त वै शीर्षण्याः प्राणाः । प्राणा दीक्षा । प्राणैरेव प्राणां दीक्षामवरुन्धे ( २ ), इति ।

स्वाहाऽऽधिमित्यादीनि त्रीणि " आकूत्यै प्रयुजे " इत्यादीन्यौद्ग्रहणसंज्ञकानि चत्वारि, एवं सप्तसंख्यया शीर्षण्यप्राणसमा एते होमाः । दीक्षा च प्राणरूपा । अतः प्राणरूपैर्होमैः प्राणरूपां दीक्षां प्राप्नोति ।

स्वाहाऽऽधिमित्यादीनां वैश्वदेवाख्यानां सप्तसु दिनेषु होतव्यानां संख्यां विधत्ते—

एकविꣳशतिं वैश्वदेवानि जुहोति । एकविꣳशतिर्वै देवलोकाः । द्वादश मासाः पञ्चर्तवः । त्रय इमे लोकाः । असावादित्य एकविꣳशः, इति ।

एकैकस्मिन्दिने त्रीणि त्रीणीत्येवं सप्तस्वपि दिनेषु मिलित्वैकविंशतिसंख्या संपद्यते । अत एव स्वाहाऽऽधिमित्यनुवाकेऽप्येकविंशतिरेव मन्त्रा आम्नाताः । भोगहेतवो देवलोकाश्चैकविंशतिसंख्याका मासर्तुलोकादित्याभिमानिभिर्देवैरधिष्ठिताः । अतस्तत्र भोगसिद्धये सा संख्या युक्ता ।

तत्राऽऽदित्यलोकं विशेषतः प्रशंसति—

एष सुवर्गो लोकः । तद्दैव्यं क्षत्रम् । सा श्रीः । तद्ब्रध्नस्य विष्टपम् । तत्स्वाराज्यमुच्यते (३), इति ।

यत्राऽऽदित्यस्तिष्ठत्येष एवोत्तमः स्वर्गो लोकः । तदेवाऽऽदित्यस्थानम् । तद्दैव्यं क्षत्रं देवसंबन्धि बलम् । तस्य बलस्याऽऽदित्यप्रकाशाधीनत्वात् । सैवाऽऽदित्यावस्थानभूमिः । श्रीर्दैवी विभूतिः । तत्र हैश्वर्यं महदस्ति । तदेवाऽऽदित्यस्थानम् । ब्रध्नस्य परिवृढस्य स्वर्गस्य लोकस्य विष्टपमुत्तमस्थानम् । उत्तमभोगानां तत्र विद्यमानत्वात् । तदेवाऽऽदित्यस्थानं स्वाराज्यं ब्रह्मलोकरूपमित्युच्यते । आदित्यमण्डलं भित्त्वा ब्रह्मलोके गन्तव्यम् । अतो वैश्वदेवानामेकविंशतिसंख्या प्रशस्ता । प्रतिदिनं त्रीणि त्रीणीत्येवमेकविंशतिसंख्यां सूत्रकारः स्पष्टी चकार—" सप्ताहमन्वहमौद्ग्रहणैर्वैश्वदेवैश्चोत्तरोत्तरैः प्रचरति षडुत्तमेऽहन्यौद्ग्रहणानि जुहोति । सर्वस्मै स्वाहेति पूर्णाहुतिमुत्तमाम् " इति ।

प्रकारान्तरेण संख्यां संपाद्य होमं प्रशंसति—

त्रिꣳशतमौद्ग्रहणानि जुहोति । त्रिꣳशदक्षरा विराट् । अन्नं विराट् । विराजैवान्नाद्यमवरुन्धे, इति ।

यानि वैश्वदेवानि स्वाहाऽऽधिमित्यादीनि तान्यप्यश्वमेधस्योद्यमनहेतुत्वादौद्ग्रहणानीत्युच्यन्ते । उद्यमनहेतुत्वं चोत्तरानुवाके वक्ष्यते—" तं वैश्वदेवान्येवोदय-

च्छन्” इति । ततो वैश्वदेवरूपाण्यौद्ग्रहणान्येकविंशतिः । प्राकृतानि त्वौद्ग्रहणानि चत्वारि । प्रकृतौ हि यत्राध्वर्युरौद्ग्रहणानि जुहोति तत्र यजमानाऽध्वर्युमन्वारभ्य पञ्च जुहोति । ‘वाचा मे वाग्दीक्षताम्’ इति सूत्रोक्ताः पञ्चाऽऽहुतयोऽत्र प्रवर्तन्ते । वक्ष्यमाणा पूर्णाहुतिरेका । तदेवं त्रिंशत्संख्यासंपत्तिः । तथा सति विराट्छन्दोद्वाराऽन्नप्राप्तिर्भवति ।

वैश्वदेवमन्त्रेषु विद्यमानं कंचिद्विशेषं प्रशंसति—

त्रेधा विभज्य देवतां जुहोति । त्र्यावतो वै
देवाः । त्र्यावृत इमे लोकाः । एषां लोका-
नामाप्त्यै । एषां लोकानां क्लृप्त्यै, इति ।

वैश्वदेवमन्त्रेष्वेकैका देवता त्रेधा विभाज्याऽऽम्नाता । तद्यथा—‘अदित्यै स्वाहाऽदित्यै मह्यै स्वाहाऽदित्यै सुमृडीकायै स्वाहा’ इत्येवमदितिरेव त्रेधोक्ता । एवमितरदप्युदाहार्यम् । अतस्त्रेधाविभागेनैकैकस्या देवताया होमः कर्तव्यः । यथा देवास्त्र्यावृतः । पूर्वोदाहृतप्रकारेण त्रिःप्रकारयुक्ताः । एवं लोका अपि पृथिव्यन्तरिक्षद्युभेदेनैते त्र्यावृतस्त्रिप्रकाराः । अतस्त्रेधाविभक्तदेवताहोमो लोकत्रयप्राप्त्यै भवति ।

दीक्षायां दिनसंख्यां विधत्ते—

अप वा एतस्मात्प्राणाः क्रामन्ति (४) ।
यो दीक्षामतिरेचयति । सप्ताहं प्रचरन्ति ।
सप्त वै शीर्षण्याः प्राणाः । प्राणा दीक्षा ।
प्राणैरेव प्राणां दीक्षामवरुन्धे, इति ।

यो यजमानो दीक्षामतिरेचयति सप्तभ्यो दिनेभ्योऽधिकां करोत्येतस्मात्प्राणाः सप्तसंख्याका अपगच्छन्ति । अतस्तत्परिहाराय सप्तैव दिनानि दीक्षां कुर्युः । तेन शीर्षण्यप्राणरूपां दीक्षां प्राप्नोति ।

अथ सर्वस्मै स्वाहेत्यनेनानुवाकसमाप्तिगतेन मन्त्रेणाऽऽहुतिं विधत्ते—

पूर्णाहुतिमुत्तमां जुहोति । सर्वं वै पूर्णा-

---

१ क. ख. °ति तद्यज° ।

हुतिः । सर्वमेवाऽऽप्नोति । अथो इयं वै पूर्णा-
हुतिः। अस्यामेव प्रतितिष्ठति (५), इति ।

रुन्धे प्राणां दीक्षामवरुन्ध उच्यते कामन्ति तिष्ठति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टकेऽष्टमाध्याये
दशमोऽनुवाकः ॥ १० ॥

पूर्णाहुतेः सर्वफलसाधनत्वात्सर्वरूपत्वम् । किंच पूर्णाहुत्या पृथिवीरूपया पृथिव्यां प्रतिष्ठा च भवति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डेऽष्टमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

अथैकादशोऽनुवाकः ।

दशमे वैश्वदेवहोमो विहितः । एकादशे तन्मन्त्रा व्याख्यायन्ते । तत्राऽऽदौ तं विधिमनूद्य प्रशंसति–

प्रजापतिरश्वमेधमसृजत । तꣳ सृष्टं न किंच-
नोदयच्छत् । तं वैश्वदेवान्येवोदयच्छन् ।
यद्वैश्वदेवानि जुहोति । यज्ञस्योद्यत्यै, इति ।

प्रजापतिरश्वमेधाख्यं यागमसृजत । सृष्टं तं वैश्वदेवान्येवोदयच्छन् । उद्यमनं नामोद्धरणमनुष्ठानयोग्यत्वापादनम् । तच्च वैश्वदेवैरेव निष्पन्नं नान्येन केनचित् । तस्माद्यज्ञस्योद्यमनहेतुत्वादयं होमः प्रशस्तः ।

तत्र प्रथमद्वितीयदिनयोर्होतव्यानां षण्णां मन्त्राणां तात्पर्यं दर्शयति–

स्वाहाऽऽधिमाधीताय स्वाहा । स्वाहाऽऽधीतं
मनसे स्वाहा । स्वाहा मनः प्रजापतये स्वाहा ।
काय स्वाहा कस्मै स्वाहा कतमस्मै स्वाहेति

१ क °शे तत्प्रशंसापूर्वकं होममन्त्रान्विधत्ते—प्र° ।

प्राजापत्ये मुख्ये भवतः । प्रजापतिमुखाभि-
रेवैनं देवताभिरुद्यच्छते (१), इति ।

तत्र प्रथमदिने प्रयोक्तव्यास्त्रयो मन्त्रा आद्यन्तयोः स्वाहाकारयुक्ताः । तेषामयमर्थः। आधीयत उत्पाद्यते जगदनेनेत्याधिः प्रजापतिः। स एव सर्वदा मनुष्यैर्ध्यायमान आधीत इत्युच्यते । स एव सर्वजगन्मननान्मन इत्यप्युच्यते । प्रजानां पालनात्प्रजापतिरित्यपि । तत्रैकैकस्मिन्मन्त्रे प्रथमः स्वाहाकारो हविःस्वीकारार्थः। द्वितीयः प्रदानार्थः । आधिं जगत्स्रष्टारं प्रजापतिमुद्दिश्य स्वाहा यद्धविः स्वीकृतं तदेतदाधीताय प्राणिभिः सर्वत्र ध्याताय प्रजापतये स्वाहुतमस्त्वित्याद्यमन्त्रस्यार्थः । आधीतं सर्वैर्ध्यातं प्रजापतिमुद्दिश्य यत्स्वीकृतं तन्मनसे मननशीलाय प्रजापतये स्वाहुतमस्त्विति द्वितीयमन्त्रस्यार्थः । यच्च मननशीलाय स्वीकृतं तत्प्रजानां पालकाय स्वाहुतमिति तृतीयमन्त्रार्थः । एतैस्त्रिभिः प्रथमदिने जुहुयात् । अकारान्तः कशब्दः प्रजापतिवाची तस्मै काय स्वाहुतमस्तु । मकारान्तः किंशब्दः सर्वनामत्वात्सर्वात्मकं प्रजापतिमाचष्टे । कस्मै तादृशाय प्रजापतये स्वाहुतमिदमस्तु । अव्यक्तरूपत्वेन प्रश्नवाचिना कतमशब्देनापि स एवोच्यते । कतमस्मै तादृशाय प्रजापतये स्वाहुतमिदमस्तु । एतैस्त्रिभिर्मन्त्रैर्द्वितीयदिने जुहुयात् । मुखयोराद्ययोर्दिनयोर्भवे होमकर्मणी मुख्ये ते च प्राजापत्ये प्रजापतिदेवताके भवतः । तथा सति प्रजापतिमेव मुखं प्रथमं कृत्वा तन्मुखाभिः सर्वाभिर्देवताभिरेनमश्वमुद्यच्छतेऽनुष्ठानं करोति ।

तृतीयदिनगतानां मन्त्राणां तात्पर्यं दर्शयति—

अदित्यै स्वाहाऽदित्यै मह्यै स्वाहाऽदित्यै
सुमृडीकायै स्वाहेत्याह । इयं वा अदितिः ।
अस्या एवैनं प्रतिष्ठायोद्यच्छते, इति ।

अदितिरखण्डनीया पृथिवी सा च स्वविस्तारेण महती । प्राणिनां धारणेन सुमृडीका सुखकरी। अखण्डनमहत्त्वसुखकरत्वविशेषणभेदैस्त्रेधा विभक्तायै स्वाहुतमिदमस्तु । अनेन होमेनास्याः पृथिव्याः प्रसादात्स्वयं प्रतिष्ठां प्राप्यैनमश्वमेधमुद्यच्छते ।

चतुर्थदिनगतानां मन्त्राणां तात्पर्यं दर्शयति—

सरस्वत्यै स्वाहा सरस्वत्यै बृहत्यै स्वाहा
सरस्वत्यै पावकायै स्वाहेत्याह । वाग्वै
सरस्वती । वाचैवैनमुद्यच्छते, इति ।

पूर्ववत्त्रेधा विभज्य व्याख्येयम् ।

पञ्चमदिनगतानां मन्त्राणां तात्पर्यं दर्शयति—

पूष्णे स्वाहा पूष्णे प्रपथ्याय स्वाहा
पूष्णे नरंधिषाय स्वाहेत्याह । पशवो
वै पूषा । पशुभिरेवैनमुद्यच्छते, इति ।

पोषको देवः पूषा स च प्रपथ्यः प्रकृष्टमार्गरक्षकः । नरंधिषो नरणां स्वानुग्रहेण धारयिता । अनेन होमेन पशूनां पोषकतया पशुरूपत्वात्पशुभिरेवाश्वमेधमुद्धृतवान्भवति ।

षष्ठदिनगतानां मन्त्राणां तात्पर्यं दर्शयति—

त्वष्ट्रे स्वाहा त्वष्ट्रे तुरीपाय स्वाहा त्वष्ट्रे
पुरुरूपाय स्वाहेत्याह । त्वष्टा वै पशूनां
मिथुनानांᳬ रूपकृत् । रूपमेव पशुषु
दधाति । अथो रूपैरेवैनमुद्यच्छते, इति ।

त्वष्टा विश्वकर्मा स च तुरीपः तूर्णपालकः । पुरुरूपो बहुविधरूपनिर्माता । एतैर्होमे सति तस्य देवस्य रूपनिर्मातृत्वात्पशुषु रूपं संपाद्य रूपैरेवैनमश्वमेधमुद्धरति ।

सप्तमदिनगतानां मन्त्राणां तात्पर्यं दर्शयति—

विष्णवे स्वाहा विष्णवे निखुर्यपाय स्वाहा
विष्णवे निभूयपाय स्वाहेत्याह । यज्ञो वै

विष्णुः, यज्ञायैवैनमुद्यच्छते, इति।

व्यापको यज्ञो विष्णुशब्दार्थः। स च निखुर्यपो खुरमर्हन्तीति खुर्या अश्वादयस्तेषां नितरां पालकः। तथा च निभूयपः। भवन्त्युत्पद्यन्त इति भूतानि भूयशब्देनोच्यन्ते। तेषामपि नितरां पालकः। अनेन होमेन यज्ञपुरुषमीत्यर्थमेवैनमश्वमेधमुद्धराति।

सर्वस्मै स्वाहेत्येतां पूर्णाहुतिं प्रशंसति—

पूर्णाहुतिमुत्तमां जुहोति। प्रत्यत्तब्ध्यै
सयत्वाय (२), इति।

यच्छते पुरुरूपाय स्वाहेत्याहाष्टौ च।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टकेऽष्टमाध्याय
एकादशोऽनुवाकः॥ ११॥

---

सर्वस्मै कृत्स्नदेवतासमूहाय स्वाहुतमित्यनेन होमेनाश्वमेधस्य प्रत्युत्तब्धिः पुनः पुनरुत्तम्भनं भवति। षिञ् बन्धन इति धातोरुत्पन्नः सयशब्दः। सयत्वमत्राश्वमेधस्य दृढबद्धत्वम्। तदर्थेयं पूर्णाहुतिः।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डेऽष्टमप्रपाठके एकादशोऽनुवाकः॥११॥

---

अथ द्वादशोऽनुवाकः।

---

एकादशे दीक्षाऽभिहिता। अस्या दीक्षायाः पूर्वं प्रमुक्तोऽश्वश्चतुःशतैः पालितः सन्स्वेच्छया संवत्सरमेकं संचरति। तस्मिन्संवत्सरे देवयजनदेशे प्रतिदिनं कर्तव्यमिष्टित्रयं द्वादशेऽभिधीयते। तत्र प्रातरनुष्ठेयामिष्टिं विधत्ते—

सावित्रमष्टाकपालं प्रातर्निर्वपति। अष्टा-
क्षरा गायत्री। गायत्रं प्रातःसवनम्। प्रातः-
सवनादेवैनं गायत्रियाश्छन्दसोऽधिनिर्मि-

मीते । अथो प्रातःसवनमेव तेनाऽऽप्नोति ।
गायत्रीं छन्दः, इति ।

यस्मिन्नहनि रक्षिभ्योऽश्वपरिदानं तदुत्तरेद्युः प्रातःकाले सेयमिष्टिः । सवितृदेवताकमष्टाकपालं पुरोडाशं प्रातःकाले निर्वपेत् । यतो गायत्र्यष्टाक्षरपादा प्रातःसवनं च गायत्रीच्छन्दःसंबन्धि । यद्यपि च्छन्दोन्तरयुक्ता अपि मन्त्राः प्रातःसवने प्रयुज्यन्ते तथाऽपि गायत्री देवतैव मदीयमिदं सवनमित्यभिमन्यते । तस्मात्तस्य गायत्रत्वम् । अनयेष्ट्या प्रातःसवनाद्गायत्रीदेवतायाश्च सकाशादेनमश्वमेधं निर्मितवान्भवति । किंच सोमयागे यत्प्रातःसवनं तदपि प्राप्नोति । गायत्रीदेवतां च प्राप्नोति-

मध्याह्ने कर्तव्यामिष्टिं विधत्ते-

सवित्रे प्रसवित्र एकादशकपालं मध्यंदिने ।
एकादशाक्षरा त्रिष्टुप् । त्रैष्टुभं माध्यंदिनꣳ
सवनम् । माध्यंदिनादेवैनꣳ सवनात्त्रिष्टुभ-
श्छन्दसोऽधिनिर्मिमीते ( १ )। अथो माध्यं-
दिनमेव सवनं तेनाऽऽप्नोति । त्रिष्टुभं छन्दः, इति ।

प्रकर्षेण स्तौति प्रेरयतीति प्रसविता । तादृशाय सवित्र इयमिष्टिः । अन्यत्पूर्ववद्व्याख्येयम् ।

अपराह्णे कर्तव्यामिष्टिं विधत्ते-

सवित्र आ सवित्रे द्वादशकपालमपराह्णे ।
द्वादशाक्षरा जगती । जागतं तृतीयसवनम् ।
तृतीयसवनादेवैनं जगत्याश्छन्दसोऽधिनिर्मि-
मीते । अथो तृतीयसवनमेव तेनाऽऽप्नोति ।
जगतीं छन्दः, इति ।

आ समन्तात्स्तौति प्रेरयतीत्यासविता । शेषं पूर्ववत् ।

द्वादशकपालेष्टेरूर्ध्वं सायंकाले धृतिहोमं विधत्ते—

ई॒श्व॒रो वा अश्वः॒ प्रमु॑क्तः॒ परां परा॒वतं॒ गन्तोः॑। इ॒ह धृ॒तिः॒ स्वाहे॒ह विधृ॑तिः॒ स्वाहे॒ह रन्तिः॒ स्वाहे॒ह रम॑तिः॒ स्वाहे॑ति चत॑स्र॒ आहु॑तीर्जुहोति। चत॑स्रो॒ दिशः॑। दि॒ग्भिरे॒वैन॒ं परि॑गृह्णाति, इति।

पूर्ववद्व्याख्येयम्। पूर्वत्राश्वरक्षका राजपुत्राः सायं यस्मिन्रथकारगृहे निवसन्ति तत्राश्वस्य पादेषु होम उक्तः। इह तु देवयजन आहवनीये होम इति विशेषः।

यदुक्तं सूत्रकारेण—“ऊर्ध्वमेकादशान्मासादाश्वत्थे व्रजेऽश्वं संबध्नन्ति तस्मै बद्धाय यवसमाहरन्ति” इति। तमेव व्रजं विधत्ते—

आश्व॑त्थो व्र॒जो भ॑वति। प्र॒जाप॑तिर्दे॒वेभ्यो॒ निला॑यत। अश्वो॑ रू॒पं कृ॒त्वा। सो॑ऽश्वत्थे सं॑वत्स॒रम॑तिष्ठत्। तद॑श्व॒त्थस्या॑श्वत्थ॒त्वम्। यदाश्व॑त्थो व्र॒जो भव॑ति। स्व ए॒वैनं॒ योनौ॒ प्रति॑ष्ठापयति (२), इति।

त्रि॒ष्टुभ॒श्छन्द॒सोऽधिनिर्मि॑मीते जु॒होति॒ नव॑ च।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टकेऽष्टमाध्याये द्वादशोऽनुवाकः ॥ १२ ॥

---

अश्वत्थकाष्ठनिर्मितः शालाविशेष आश्वत्थो व्रजः। स चाश्वबन्धनार्थं कर्तव्यः। केनापि निमित्तेन देवेभ्यः सकाशान्निगूढः प्रजापतिरश्वशरीरं धृत्वा तदीयं रूपं च समीचीनं कृत्वा संवत्सरमात्रं कस्मिंश्चिदश्वत्थेऽतिष्ठत्। ततोऽश्वस्तिष्ठत्यत्रेति व्युत्पत्त्याऽश्वत्थनाम संपन्नम्। आश्वत्थे व्रजे बन्धनेन स्वकीयस्थान एवाश्वं प्रतिष्ठापयति।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डेऽष्टमप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

अथ त्रयोदशोऽनुवाकः ।

द्वादशे दीक्षायाः प्राचीने संवत्सरे प्रतिदिनं कालत्रयेऽनुष्ठेया इष्टय उक्ताः । तस्मात्संवत्सरादूर्ध्वं दीक्षाकाल उखासंभरणं कृत्वा तस्योखाख्यस्याग्नेरा ब्रह्मन्नित्यादिमन्त्रैरुपस्थानं कर्तव्यम् । तथा च सूत्रकार आह—'आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतां जज्ञिबीजमिति जातमुख्यमुपतिष्ठते' इति । तत्राऽऽब्रह्मन्नित्यनुवाके द्वादश वाक्यानि । तेषां क्रमेण व्याख्यानं त्रयोदशानुवाकेऽभिधीयते । तत्र प्रथमं वाक्यं व्याचष्टे—

आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामि-
त्याह । ब्राह्मण एव ब्रह्मवर्चसं दधाति ।
तस्मात्पुरा ब्राह्मणो ब्रह्मवर्चस्यजायत, इति ।

ब्रह्मन्ब्राह्मणजातियुक्ते पुरुषे ब्रह्मवर्चसी वेदशास्त्राभिज्ञः पुत्रो ब्राह्मण आजायताम् । एतन्मन्त्रोपस्थानेन सर्वस्मिन्नपि ब्राह्मणे वेदशास्त्राभिज्ञत्वं संपादयति । तस्मान्मन्त्रसामर्थ्यादेव पुरा सृष्टयादौ ब्राह्मणो वेदशास्त्राभिज्ञस्तदर्थानुष्ठायी वाऽजायत ।

द्वितीयं वाक्यं व्याचष्टे—

आऽस्मिन्राष्ट्रे राजन्य इषव्यः शूरो महा-
रथो जायतामित्याह । राजन्य एव शौर्यं
महिमानं दधाति । तस्मात्पुरा राजन्य
इषव्यः शूरो महारथोऽजायत, इति ।

इषव्यो बाणेषु कुशलो धानुष्कः । स्पष्टमन्यत् ।

तृतीयादीनि चत्वारि वाक्यानि क्रमेण व्याचष्टे—

दोग्ध्री धेनुरित्याह । धेन्वामेव पयो दधाति ।
तस्मात्पुरा दोग्ध्री धेनुरजायत । वोढाऽनड्वा-
नित्याह ( १ ) । अनडुह्येव वीर्यं दधाति ।

तस्मात्पुरा वोढाऽनड्वाञ्जायत। आशुः सप्तिरि-
त्याह। अश्वं एव जवं दधाति। तस्मात्पुराऽऽशु-
रश्वोऽजायत। पुरंधिर्योषेत्याह। योषित्येव रूपं
दधाति। तस्मात्स्त्री युवतिः प्रिया भावुका, इति।

एतेषु मन्त्रेषु दोग्ध्री धेनुरित्यादिष्वाजायतामित्यनुवर्तते। पुरं सर्वगुणसंपूर्णं शरीरं धारयतीति पुरंधिः। स्पष्टमन्यत्।

सप्तमं व्याचष्टे—

जिष्णू रथेष्ठा इत्याह। आ ह वै
तत्र जिष्णू रथेष्ठा जायते (२)।
यत्रैतेन यज्ञेन यजन्ते, इति।

योद्धुं यो रथमारोहति स रथेष्ठाः। स च जयशील आजायताम्। यस्मिन्देश एतेन जिष्णुरित्यादिमन्त्रयुक्तेन यज्ञेन यजन्ते तत्र रथारूढः सर्वोऽपि जिष्णुर्जयशील एवाऽऽजायते।

अष्टमं व्याचष्टे—

सभेयो युवेत्याह। यो वै पूर्वव-
यसी। स सभेयो युवा। तस्मा-
द्युवा पुमान्प्रियो भावुकः, इति।

पूर्ववयस्कस्य यौवनोपेतत्वात्सभायोग्यत्वम्। अत एव युवतिवद्युवा सर्वेषां प्रियो भवति—

नवमं व्याचष्टे—

आऽस्य यजमानस्य वीरो जायतामि-

१ ग 'न यज'।

त्याह । आ ह वै तत्र यजमानस्य वीरो
जायते । यत्रैतेन यज्ञेन यजन्ते, इति ।

जिष्णुवाक्यवद्व्याख्येयम् ।

दशमं व्याचष्टे—

निकामे निकामे नः पर्जन्यो वर्षत्वित्याह ।
निकामे निकामे ह वै तत्र पर्जन्यो
वर्षति । यत्रैतेन यज्ञेन यजन्ते, इति ।

नोऽस्माकं निकामेऽपेक्षा यदा यदा भवति तदा तदा पर्जन्यो वर्षतु । स्पष्टमन्यत् ।

एकादशद्वादशे व्याचष्टे—

फलिन्यो न ओषधयः पच्यन्तामित्याह ।
फलिन्यो ह वै तत्रौषधयः पच्यन्ते । यत्रै-
तेन यज्ञेन यजन्ते । योगक्षेमो नः कल्प-
तामित्याह । कल्पते ह वै तत्र प्रजाभ्यो
योगक्षेमः । यत्रैतेन यज्ञेन यजन्ते(२),इति।

अनड्वानित्याह जायते वर्षति सप्त च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टकेऽष्टमाध्याये
त्रयोदशोऽनुवाकः ॥ १३ ॥

---

फलिन्यः प्रभूतफलोपेताः । अलब्धस्य लाभो योगः । लब्धस्य पालनं क्षेमः। योगसहितः क्षेमो योगक्षेमः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डेऽष्टमप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

---

अथ चतुर्दशोऽनुवाकः।

---

त्रयोदश उखाग्न्युपस्थानमन्त्रा व्याख्याताः। चतुर्दशेऽन्नहोमा उच्यन्ते। तांश्च सूत्रकार उदाजहार—" पत्नीसंयाजान्तमहः संतिष्ठते संस्थितेऽहन्यभित आहवनीयं षट्त्रिंशतमाश्वत्थानुपतल्प्यांश्चित्वंत्यस्तमित (?) आदित्ये षट्त्रिंशतमध्वर्यव उपतल्प्यानधिरुह्य खादिरस्रुवैः सर्वां रात्रिमन्नहोमाञ्जुहोति, आज्यं मधु तण्डुलान्पृथुकाल्लाँजान्करम्बान्धानाः सक्तून्मसूस्यानि प्रियङ्गुतण्डुलान्" इति। तानेतानन्नहोमान्विधत्ते—

प्रजापतिर्देवेभ्यो यज्ञान्व्यादिशत्। स आत्मन्नश्वमेधमंधत्त। तं देवा अंब्रुवन्। एष वाव यज्ञः। यदंश्वमेधः। अप्येव नोऽत्रास्त्विति। तेभ्यं एतानंन्नहोमान्प्रायंच्छत्। तानंजुहोत्। तैर्वै स देवानंप्रीणात्। यदंन्नहोमाञ्जुहोति (१)। देवानेव तैर्यजंमानः प्रीणाति, इति।

पुरा प्रजापतिरन्येभ्यो देवेभ्योऽग्न्यादिभ्योऽश्वमेधव्यतिरिक्तान्यज्ञान्विभज्य दत्त्वा स्वात्मन्यश्वमेधं स्थापितवान्। तदानीं देवाः प्रजापतिमेवमब्रुवन्योऽयमश्वमेध एष एव मुख्यो यज्ञोऽतोऽस्माकं भागोऽस्त्वेवेति। ततः प्रजापतिस्तेभ्योऽन्नहोमान्दत्त्वा तद्धोमेन तान्सर्वान्देवान्प्रीतानकरोत्। तस्मात्सर्वदेवप्रीत्यर्थमन्नहोमाः कर्तव्याः।

तेषु होमेषु यानि दश द्रव्याणि तत्रैकं द्रव्यं विधत्ते—

आज्येन जुहोति। अग्नेर्वा एतद्रूपम्। यदाज्यम्। यदाज्येन जुहोति। अग्निमेव तत्प्रीणाति, इति।

आज्यस्याग्निप्रियत्वात्तद्रूपत्वम्। अत आज्यहोमेनाग्निं प्रीतं करोति।

एवमन्यानि नव द्रव्याणि क्रमेण विधत्ते—

मधुना जुहोति। महत्यै वा एतद्देवतायै

---

१ क. °ल्प्याश्रित्वं°।

रूपम् । यन्मधु । यन्मधुना जुहोति (२)।
महतीमेव तद्देवतां प्रीणाति। तण्डुलैर्जुहोति।
वसूनां वा एतद्रूपम् । यत्तण्डुलाः । यत्तण्डु-
लैर्जुहोति । वसूनेव तत्प्रीणाति । पृथुकैर्जु-
होति । रुद्राणां वा एतद्रूपम् । यत्पृथुकाः ।
यत्पृथुकैर्जुहोति (३)। रुद्रानेव तत्प्रीणाति।
लाजैर्जुहोति । आदित्यानां वा एतद्रूपम् ।
यल्लाजाः। यल्लाजैर्जुहोति । आदित्यानेव
तत्प्रीणाति । करम्भैर्जुहोति । विश्वेषां वा
एतद्देवानाꣳ रूपम् । यत्करम्भाः । यत्करम्भै-
र्जुहोति (४) । विश्वानेव तद्देवान्प्रीणाति ।
धानाभिर्जुहोति । नक्षत्राणां वा एतद्रूपम् ।
यद्धानाः । यद्धानाभिर्जुहोति । नक्षत्राण्येव
तत्प्रीणाति । सक्तुभिर्जुहोति । प्रजापतेर्वा एत-
द्रूपम् । यत्सक्तवः । यत्सक्तुभिर्जुहोति (५)।
प्रजापतिमेव तत्प्रीणाति । मसूस्यैर्जुहोति ।
सर्वासां वा एतद्देवतानाꣳ रूपम् । यन्मसू-
स्यानि । यन्मसूस्यैर्जुहोति । सर्वा एव तद्दे-
वताः प्रीणाति । प्रियङ्गुतण्डुलैर्जुहोति ।
प्रियङ्गा ह वै नामैते । एतैर्वै देवा अश्वस्या-

ङ्गानि समदधुः। यत्प्रियङ्गुतण्डुलैर्जुहोति।
अश्वस्यैवाङ्गानि संदधाति, इति।

महती देवता शास्त्रप्रसिद्धो महादेवः। विश्वाधिक्यं तस्य महत्त्वम्। तस्य प्रियत्वान्मधुद्रव्यं तद्रूपमेव। एवं तण्डुलादीनां वस्वादिप्रियत्वाद्वस्वादिरूपत्वम्। पृथुकाश्चिपिटकाः। लाजा व्रीहिप्रभवाः पुष्पवद्विकसिताः। करम्बा आज्यमिश्रिताः सक्तवः। धाना भर्जितयवतण्डुलाः। सक्तवो भर्जिततण्डुलपिष्टानि। मसूस्यानि एतेनैव नाम्नोत्तरदेशे प्रसिद्धो धान्यविशेषः। येन सूपनिष्पत्तिः। प्रियङ्गुतण्डुलास्तु हेमसमानवर्णत्वात्प्रियाङ्गाः। एतैर्देवा अश्वाङ्गानि पुरा समाहितानि चक्रुः। स्पष्टमन्यत्।

दशद्रव्याणां मिश्रीकृत्य होमं विधत्ते—

दशान्नानि जुहोति। दशाक्षरा विराट्।
विराट्कृत्स्नस्यान्नाद्यस्यावरुद्ध्यै, (६) इति।

जुहोति मधुना जुहोति पृथुकैर्जुहोति करम्बैर्जुहोति सक्तुभिर्जुहोति प्रियङ्गुतण्डुलैर्जुहोति चत्वारि च।

अन्नहोमानाज्येनाग्नेर्मधुना तण्डुलैः पृथुकैर्लाजैः करम्बैर्धानाभिः सक्तुभिर्मसूस्यैः प्रियङ्गुतण्डुलैर्दशान्नानि द्वादश।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टकेऽष्टमाध्याये चतुर्दशोऽनुवाकः॥ १४॥

---

दशसंख्यासाम्याद्विराट्संपत्तिः।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डेऽष्टमप्रपाठके चतुर्दशोऽनुवाकः॥ १४॥

---

अथ पञ्चदशोऽनुवाकः।

---

चतुर्दशेऽन्नहोमा विहिताः। पञ्चदशे तु तत्प्रकारविशेषो विधीयते। तत्राऽऽदौ कालविशेषं विधत्ते—

प्रजापतिरश्वमेधमसृजत। तꣳ सृष्ट꣡ꣳरक्षाꣳसि-

स्यजिघाꣳसन् । स एतान्प्रजापतिर्नक्तꣳहोमानपश्यत् । तानजुहोत् । तैर्वै स यज्ञाद्रक्षाꣳस्यपाहन् । यन्नक्तꣳहोमाञ्जुहोति । यज्ञादेव तैर्यजमानो रक्षाꣳस्यपहन्ति, इति ।

प्रजापतिसृष्टमश्वमेधं यदा रक्षांसि हन्तुमैच्छन्, तदा प्रजापतिस्तत्परिहारसमर्थान्रात्रावनुष्ठेयानेतानन्नहोमान्निश्चित्य तद्धोमेन रक्षांस्यपहतवान् । अतो यजमानो रात्रावेतेषां होमेन रक्षांसि विनाशयति ।

तत्र पूर्वानुवाके विहितं प्रथमद्रव्यं सविधिकमनूद्य प्रशंसति—

आज्येन जुहोति । वज्रो वा आज्यम् । वज्रेणैव यज्ञाद्रक्षाꣳस्यपहन्ति (१), इति ।

घृतं खलु वै देवा वज्रं कृत्वेत्युक्तत्वादाज्यस्य वज्रत्वम् । तेन वज्रेण यद्रक्षांस्यपहन्ति ।

तस्य द्रव्यस्येतरद्रव्येभ्यो होमं प्रथमं विधत्ते—

आज्यस्य प्रतिपदं करोति । प्राणो वा आज्यम् । मुखत एवास्य प्राणं दधाति, इति ।

प्रतिपदं प्राथम्यम् । आज्यस्य प्राणावस्थितिहेतुत्वात्प्राणत्वम् । तस्य प्राथम्येन यजमानस्य मुख एव प्राणं स्थापयति ।

आज्यहोमादूर्ध्वमितरान्नहोमान्विधत्ते—

अन्नहोमाञ्जुहोति । शरीरवदेवावरुन्धे, इति ।

शरीरमस्यास्तीति शरीरवद्गवादिकं तत्सर्वं प्राप्नोति ।

यदुक्तं सूत्रकारेण—“ एकस्मै स्वाहेत्येतेषामनुवाकानामयुज आज्येन युजोऽन्नेनाऽऽज्येनानन्तः ” इति । तत्रायुग्मयुग्मसंख्ययोरनुवाकयोर्व्यवस्थां विधत्ते—

व्यत्यासं जुहोति । उभयस्यावरुद्ध्यै, इति ।

सप्तमकाण्डस्य द्वितीयप्रपाठके दशानामनुवाकानामियमानुपूर्वी 'एकस्मा एकस्मै द्वाभ्यां त्रिभ्यश्चतुर्भ्यः पञ्चभ्यो दशभ्यो विंशत्यै पञ्चाशते शताय' इति। तत्र प्रथमतृतीयपञ्चमसप्तमनवमानुवाका अयुजः। तानाज्येन जुहुयात्। द्वितीयचतुर्थषष्ठाष्टमदशमानुवाकास्तु युजः। तानन्नेन जुहुयात्। एवं च सत्याज्यमन्नं पुनरप्याज्यमन्नमिति व्यत्यस्य हुतं भवति। स च व्यत्यास उभयस्याऽऽज्यस्यान्नस्य च संपादनाय भवति।

पूर्वत्र "यन्नक्तंहोमाञ्जुहोति" इत्युक्तो योऽयं रात्रिरूपो होमकालस्तमिमं प्रशंसति। अथवा तत्र नक्तंहोमानिति होमविशेषसंज्ञा। अत्र तु कालं विधत्ते–

नक्तं जुहोति। रक्षसामपहत्यै, इति।

रात्रौ हि रक्षांसि संसरन्ति तानि चानेन होमेनापहतानि भवन्ति।

पूर्वोक्तव्यत्यासप्रकारेण शताय स्वाहेत्यस्यान्त्यानुवाकस्यान्नं द्रव्यं प्राप्तं तदपोद्याऽऽज्यद्रव्यं विधत्ते—

आज्येनान्ततो जुहोति (२)। प्राणो वा आज्यम्। उभयत एवास्य प्राणं दधाति। पुरस्ताच्चोपरिष्टाच्च, इति।

आज्यस्य प्रतिपदं करोतीत्येवं प्रथमानुवाकस्याऽऽज्यं द्रव्यं पूर्वं विहितम्। तत्रान्त्यस्याप्याज्ये द्रव्ये विहिते सत्यस्य यजमानस्योभयतः पुरस्ताच्चोपरिष्टाच्चाऽऽद्यन्तयोर्वयसोः प्राणं संपादयति।

तत्र होमे दशानुवाकमन्त्राणां विधीनभिप्रेत्य प्रथमानुवाके मन्त्रद्वयं व्याचष्टे—

एकस्मै स्वाहेत्याह। अस्मिन्नेव लोके प्रतितिष्ठति। द्वाभ्याꣳ स्वाहेत्याह। अमुष्मिन्नेव लोके प्रतितिष्ठति। उभयोरेव लोकयोः प्रतितिष्ठति। अस्मिꣳश्चामुष्मिꣳश्च, इति।

---

१ क. °स्यान्नद्रव्ये प्राप्ते त°।

स्वनिवासापेक्षया प्रथमत्वादेकशब्दसामर्थ्येनैतल्लोकप्रतिष्ठा । एतदपेक्षया द्वितीयत्वाद्द्वितीयशब्दसामर्थ्येन स्वर्गलोके प्रतिष्ठा । एवं लोकद्वये प्रतिष्ठा सिध्यति ॥

अन्त्यानुवाकेऽपि मन्त्रद्वयं व्याचष्टे---

शताय स्वाहेत्याह(३)। शतायुर्वै पुरुषः शतवीर्यः।
आयुरेव वीर्यमवरुन्धे । सहस्राय स्वाहेत्याह।
आयुर्वै सहस्रम् । आयुरेवावरुन्धे, इति ।

शतसंख्याकासु नाडीषु दशेन्द्रियव्यापारेण पुरुषस्य शतवीर्यत्वम् । आयुषि मासानां दिवसानां च सहस्रसंख्योपेतत्वादायुरेव सहस्रम्।

अन्त्यानुवाकेऽपि चरमं मन्त्रं व्याचष्टे---

सर्वस्मै स्वाहेत्याह । अपरिमि-
तमेवावरुन्धे ( ४ ), इति ।

एव यज्ञाद्रक्षाꣳस्यपहन्त्यन्ततो जुहोति शताय स्वाहेत्याह सप्त च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टकेऽष्टमा-
ध्याये पञ्चदशोऽनुवाकः ॥ १५ ॥

---

संख्याविशेषस्यानुपात्तत्वादपरिमितप्राप्तिः । एवमन्त्रहोमानुवाकानामाद्यन्तव्याख्यानेन ते सर्वेऽप्यनुवाका अत्र विनियुक्ता इत्यवगम्यते ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डेऽष्टमप्रपाठके पञ्चदशोऽनुवाकः ॥ १५ ॥

---

अथ षोडशोऽनुवाकः ।

---

अन्नहोमप्रकारविशेष एकदशोऽभिहितः । तत्र मन्त्रविधानायाऽऽद्यन्तावनुवाकौ संक्षेपेण व्याख्यातौ । अथ षोडशे तावेव विस्तरेण व्याख्यायेते । तत्राऽऽदौ तद्व्याख्यानोपयुक्तं प्रस्तौति---

प्रजापतिं वा एष ईप्सतीत्याहुः ।

योऽश्वमेधेन यजत इति। अथो
आहुः सर्वाणि भूतानीति, इति।

योऽश्वमेधयाजी स एष प्रजापतिं चतुर्मुखमीप्सति प्राप्तुमिच्छतीत्येवं केचिदभिज्ञा आहुः। अपि चान्य एवमाहुः—न केवलं प्रजापतिप्राप्तिरश्वमेधस्य फलं किंतु सर्वभूतप्राप्तिरिति। अतो जगति यद्यदेकत्वादिसंख्याविशिष्टं वस्तु तत्तत्प्राप्तये तत्तत्संख्याहोम इत्यभिप्रायः।

तत्र प्रथममन्त्रस्य प्रजापतिप्राप्तिहेतुतां दर्शयति—

एकस्मै स्वाहेत्याह। प्रजापतिर्वा
एकः। तमेवाऽऽप्नोति, इति।

न हि द्वितीयः प्रजापतिः कश्चिदस्ति। तथा सत्यनेकेश्वरत्वप्रसङ्गात्। ततः प्रजापतेरेकत्वात्तेन मन्त्रेण तमेव प्राप्नोति।

तस्मिन्ननुवाके संख्याविशेषा आनुपूर्व्येणाऽऽम्नातास्तदानुपूर्व्यं प्रशंसति—

एकस्मै स्वाहा द्वाभ्याꣳ स्वाहेत्यभिपूर्वमाहुती-
र्जुहोति। अभिपूर्वमेव सुवर्गं लोकमेति, इति।

एकद्वित्रिचतुष्पञ्चादिक्रमेण यदानुपूर्व्यं तदभिपूर्वमित्युच्यते। तदेवोदाहर्तुमेकस्मै स्वाहा द्वाभ्यां स्वाहेति प्रदर्शितम्। एवंविधक्रमहोमेन भोगानुपूर्व्या युक्तो यः स्वर्गस्तं प्राप्नोति।

अत्रोत्तरोत्तरसंख्यायाः पूर्वपूर्वसंख्यागर्भितत्वं यदाम्नातं तत्प्रशंसति—

एकोत्तरं जुहोति (१)। एकव-
देव सुवर्गं लोकमेति, इति।

पूर्वोक्तायाः संख्याया एकमुत्तरं यस्मिन्मन्त्रे सोऽयमेकोत्तरः। तद्यथा—प्रथममन्त्रोक्ताया एकसंख्यायाः पुनरेकस्मिन्नधिके सति द्वाभ्यां स्वाहेति मन्त्रो भवति। तस्या अपि संख्यायाः पुनरेकस्मिन्नधिके सति त्रिभ्यः स्वाहेति मन्त्रो भवति। तदिदमेकोत्तरत्वम्। एवंविधमन्त्रसामर्थ्यादेकवदेवैकत्ववत्सर्वमपि स्वर्गमेकेनैव प्रयत्नेन प्राप्नोति।

---

१ ख. ग तत्र संख्या°। २ क. °कवस्तुव°।

उत्तरेष्वनुवाकेषु तत्र तत्र काश्चित्संख्या अन्तरिताः। प्रथमे त्वनुवाके तथाविधान्तरायाभावाद्यत्सातत्यं तत्प्रशंसति---

संततं जुहोति। सुवर्गस्य लोकस्य संतत्यै, इति ।

संख्यासातत्येन भोगसातत्यं सिध्यति।

तदेवं प्रथमानुवाकव्याख्यानं प्रपञ्च्य चरमानुवाकव्याख्यानं प्रपञ्चयितुमाद्यं मन्त्रं व्याचष्टे---

शताय स्वाहेत्याह । शतायुर्वै पुरुषः शतवीर्यः।
आयुरेव वीर्यमवरुन्धे। सहस्राय स्वाहेत्याह।
आयुर्वै सहस्रम्। आयुरेवावरुन्धे, इति।

पूर्वानुवाकवद्व्याख्येयम्।

तृतीयचतुर्थपञ्चममन्त्राणां तात्पर्यं दर्शयति---

अयुताय स्वाहा नियुताय स्वाहा प्रयुताय स्वाहेत्याह (२) । त्रय इमे
लोकाः। इमानेव लोकानवरुन्धे, इति।

दशगुणितं सहस्रमयुतम्। तत्पुनर्दशगुणितं नियुतम् । तदपि पुनर्दशगुणितं प्रयुतम्। संख्यात्रयेण लोकत्रयवर्तिनो भोगान्प्राप्नोति।

षष्ठं मन्त्रं व्याचष्टे-

अर्बुदाय स्वाहेत्याह। वाग्वा
अर्बुदम्। वाचमेवावरुन्धे, इति।

पूर्वोक्तं प्रयुतं दशगुणितं सदर्बुदमित्युच्यते । वाग्देवतायाः शब्दविशेषाणां बहुविधत्वात्सैवार्बुदमित्युपचर्यते। अतो वाचमेव प्राप्नोति।

सप्तमं व्याचष्टे-

न्यर्बुदाय स्वाहेत्याह। यो वै वाचो भूमा।
तन्न्यर्बुदम्। वाच एव भूमानमवरुन्धे, इति।

अर्बुदमेव दशगुणवृद्धौ सत्यां न्यर्बुदं भवति । पूर्वोक्तसंख्याबाहुल्यविशिष्टाया वाचो यदत्यन्तबाहुल्यं तदेव न्यर्बुदम् । तस्मात्तद्बाहुल्यं प्राप्नोति ।

एवमुत्तरोत्तरदशगुणवृद्धियुक्तानां समुद्रादिसंख्यानां तत्तत्संख्येयवस्तुप्राप्तिरित्येतद्दर्शयति—

समुद्राय स्वाहेत्याह ( ३ ) । समुद्रमेवाऽऽप्नोति ।
मध्याय स्वाहेत्याह । मध्यमेवाऽऽप्नोति । अन्ताय
स्वाहेत्याह । अन्तमेवाऽऽप्नोति । परार्धाय स्वाहे-
त्याह । परार्धमेवाऽऽप्नोति, इति ।

ब्रह्माण्डाभिमानी परमेश्वरः परशब्देनोच्यते । तदीयस्याऽऽयुषोऽर्धं परार्धम् । जनैर्व्यवह्रियमाणा संख्या तत्र पर्यवसिता । तद्धोमेन तत्संख्येयवस्तुप्राप्तिः ।

संख्यामन्त्राणां पर्यवसानं व्याख्यायोत्तरं मन्त्रद्वयं व्याचष्टे—

उषसे स्वाहा व्युष्ट्यै स्वाहेत्याह । रात्रिर्वा
उषाः । अहर्व्युष्टिः । अहोरात्रे एवावरुन्धे ।
अथो अहोरात्रयोरेव प्रतितिष्ठति, इति ।

उषःशब्देन रात्र्यभिमानिनी देवतोच्यते । व्युष्टिशब्देनाहरभिमानिनी देवता । तदुभयहोमेनाहोरात्रदेवतयोः स्वाधीनत्वात्तत्कालयोरसौ प्रतितिष्ठति ।

अत्रोषसे स्वाहेत्यादिमन्त्राणां कालविशेषं विधत्ते—

ता यदुभयीर्दिवा वा नक्तं वा जुहुयात् ।
अहोरात्रे मोहयेत् । उषसे स्वाहा व्युष्ट्यै
स्वाहोदेष्यते स्वाहोद्यते स्वाहेत्यनुदिते
जुहोति । उदिताय स्वाहा सुवर्गाय

१ क. °ह्माण्डनिर्माता प° । २ क. °द्धोमेषु कृतेषु त° ।

स्वाहा लोकाय स्वाहेत्युदिते जुहोति ।

अहोरात्रयोरव्यतिमोहाय (४), इति ।

एकोत्तरं जुहोति प्रयुताय स्वाहेत्याह समुद्राय स्वाहेत्याहाह-

व्युष्टिः सप्त च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टकेऽष्टमाध्याये

षोडशोऽनुवाकः ॥ १६ ॥

---

अत्रोषसे स्वाहेत्यादयो लोकाय स्वाहेत्यन्ताः सप्ताऽऽहुतयः । ताश्चोभयविधाः । तत्र चतस्रो रात्रिपक्षपातिन्यः । तिस्रस्त्वहःपक्षपातिन्यः । एवं सत्युभयविधास्ताः सप्ताऽऽहुतयोऽपि दिवा रात्रौ वा यद्येकस्मिन्नेव काले जुहुयात्तदानीमिदमहरियं रात्रिरिति विभागस्य ज्ञातुमशक्यत्वाद्व्यामोहो भवेत् । अतस्तत्परिहाराय विभज्य जुहुयात् । तं विभागप्रकारं सूत्रकारः स्पष्टमुदाजहार—“ एकस्मै स्वाहेत्येताननुवाकान्पुनः पुनरभ्यासं रात्रिशेषं हुत्वोषसे स्वाहेत्युषसि, व्युच्छन्त्यै स्वाहेति व्युच्छन्त्यां, व्युष्टयै स्वाहेति व्युष्टौ, उदेष्यते स्वाहेत्युपोदयम्, उद्यते स्वाहेत्युद्यति, उदिताय स्वाहा सुवर्गाय स्वाहा लोकाय स्वाहेत्युदिते हुत्वा प्रज्ञातानन्नपरिशेषान्निदधाति ” इति । अत्र व्युच्छन्त्यै स्वाहेत्येष शाखान्तरमन्त्रः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डेऽष्टमप्रपाठके षोडशोऽनुवाकः ॥ १६ ॥

---

अथ सप्तदशोऽनुवाकः ।

---

षोडशेऽन्नहोममन्त्राणामाद्यन्तावेकस्मै स्वाहा शताय स्वाहेत्येतावनुवाकौ विस्तरेण व्याख्यातौ । सप्तदशाष्टादशयोरनुवाकयोः सप्तमकाण्डगतद्वितीयप्रपाठकव्यतिरिक्तप्रपाठकगता अन्नहोममन्त्रानुवाका व्याख्यायन्ते । तेषां च मन्त्राणां विविधानि श्रौतनामानि । तत्राश्वनामाख्यमन्त्रानुवाकस्य तात्पर्यं दर्शयति—

विभूर्मात्रा प्रभूः पित्रेत्यश्वनामानि जुहोति ।

उभयोरेवैनं लोकयोर्नामधेयं गमयति, इति ।

पूर्वत्र नामवाचनविधावियं वै माताऽसौ पितेति लोकद्वयपरत्वेन व्याख्यातत्वादनेन नामहोमेन लोकद्वयेऽपि यजमानं प्रसिद्धनामधेयं प्रापयति ।

उद्द्रावमन्त्रानुवाकस्य तात्पर्यं दर्शयति—

आयनाय स्वाहा प्रायणाय स्वाहेत्युद्द्रावाञ्जुहोति ।
सर्वमेवैनमस्कन्नꣳ सुवर्गं लोकं गमयति, इति ।

आयनायेत्यनुवाके कश्चिन्मन्त्र उद्द्रावाय स्वाहेत्याम्नातः । तद्योगात्सर्वेऽपि मन्त्राश्छत्रिन्यायेनोद्द्रावाः । तेषामुद्द्रवणहेतुत्वेन तद्धोमेन सर्वमपि स्वर्गमार्गमस्कन्नमविनष्टमेव यजमानस्य संपादयति ।

पूर्वहोममन्त्राणां तात्पर्यं दर्शयति—

अग्नये स्वाहा सोमाय स्वाहेति पूर्वहोमाञ्जुहोति ।
पूर्व एव द्विषन्तं भ्रातृव्यमतिक्रामति, इति ।

तस्मिन्प्रथमप्रपाठकेऽग्नये स्वाहेति त्रयोऽनुवाकाः । तेषां मध्ये प्रथमभावित्वादेतदनुवाकोक्ताः पूर्वहोमाः । अश्वहोमात्पूर्वभावित्वाद्वा पूर्वहोमत्वम् । एतद्धोमेनेतरेभ्यः पूर्वभावी सन्वैरिणं विनाशयति ।

अनुवाकान्तरतात्पर्यस्य स्पष्टतां दर्शयति—

पृथिव्यै स्वाहाऽन्तरिक्षाय स्वाहेत्याह । यथा यजुरेवैतत् , इति ।

अत्र हि पृथिव्यादिदेवतातुष्ट्यर्थकाहुतिप्रदानं यजुर्मन्त्रेणोच्यते । तत्तथैव भवति । पृथिव्यादिदेवतास्तेन तुष्यन्तीत्यर्थः । एतेऽपि पूर्वहोमा द्रष्टव्याः ।

पृथिव्यै स्वाहेत्यादेरनुवाकान्तरस्य वक्ष्यमाणत्वात्पूर्वदीक्षामन्त्राणां तात्पर्यं दर्शयति—

अग्नये स्वाहा सोमाय स्वाहेति पूर्वदीक्षा जुहोति । पूर्व एव द्विषन्तं भ्रातृव्यमतिक्रामति ( १ ), इति ।

दीक्षायाः पूर्वं स्तोक्यानुमन्त्रणस्यानुवाकस्य विहितत्वादनेनोक्ता आहुतयः पूर्वदीक्षाः। तत्फलं प्रथमत एव शत्रूणां निराकरणम्।

उत्तरानुवाकोक्तमन्त्राणां संख्यामुपजीव्य प्रशंसति—

पृथिव्यै स्वाहाऽन्तरिक्षाय स्वाहेत्येकविꣳ-
शिनीं दीक्षां जुहोति। एकविꣳशतिर्वै देव-
लोकाः। द्वादश मासाः पञ्चर्तवः। त्रय इमे
लोकाः। असावादित्य एकविꣳशः। एष सुव-
र्गो लोकः। सुवर्गस्य लोकस्य समष्ट्यै, इति।

एकविंशतिभिर्मन्त्रैरेतैः पुरुषे संस्कारस्योत्पाद्यत्वादयं मन्त्रसमूह एकविंशिनी दीक्षा। तद्धोमेन स्वर्गप्राप्तिः। एकविंशतिरित्यादिकं तु पूर्वोक्तवैश्वदेवविधौ व्याख्यातम्।

ऋतुदीक्षामन्त्राणां तात्पर्यं दर्शयति—

भुवो देवानां कर्मणेत्यृतुदीक्षा जुहोति।
ऋतूनेवास्मै कल्पयति, इति।

वसन्तेन त्वर्तुना हविषा दीक्षयामीत्याद्यभिधानादेता आहुतय ऋतुदीक्षाः। तद्धोमेन तत्तदृतूचितफलप्राप्तिः।

उत्तरानुवाकस्य तात्पर्यं दर्शयति—

अग्नये स्वाहा वायवे स्वाहेति
जुहोत्यनन्तरित्यै (२), इति।

अनेन होमेन यजमानस्य प्रजादिभिरव्यवधानं भवति। एवं प्रथमप्रपाठकोक्ता मन्त्रानुवाका व्याख्याताः। द्वितीयप्रपाठकोक्तास्त्वेकस्मै स्वाहेत्यादयः पूर्वमेव व्याख्याताः।

अथ तृतीयप्रपाठकोक्ता अनुवाका व्याख्यायन्ते। तत्राऽऽप्तिमन्त्राणां तात्पर्यं दर्शयति—

अर्वाङ्यज्ञः संक्रामत्वित्याप्तीर्जुहोति।

---

१ क न्त्रणेऽस्या°।

सुवर्गस्य लोकस्याऽऽप्त्यै, इति ।

स्वर्ग आप्यते याभिरता आप्तयः । अतस्तद्धोमः स्वर्गमाप्त्यै भवति ।

पर्याप्तिमन्त्राणां तात्पर्यं दर्शयति—

भूतं भव्यं भविष्यदिति पर्याप्तीर्जुहोति ।
सुवर्गस्य लोकस्य पर्याप्त्यै, इति ।

याभिः स्वर्गः परित आप्यते ताः पर्याप्तयः । तद्धोमेन स्वर्गः संपूर्णः प्राप्यते ।

आभूमन्त्राणां तात्पर्यमाह—

आ मे गृहा भवन्त्वित्याभूर्जुहोति ।
सुवर्गस्य लोकस्याऽऽभूत्यै, इति ।

याभिः स्वर्ग आ समन्ताद्भवति ता आहुतय आभुवः । ताभिः स्वर्गः सर्वोऽपि प्राप्यते ।

अनुभूमन्त्राणां तात्पर्यमाह—

अग्निना तपोऽन्वभवदित्यनुभूर्जुहोति ।
सुवर्गस्य लोकस्यानुभूत्यै, इति ।

यथा पूर्वेषु मन्त्रेष्वाभवन्त्वितिशब्दसद्भावादाभुवः । एवमत्राप्यन्वभवदिति-शब्दसद्भावादेता आहुतयोऽनुभुवः । ताभिः स्वर्गोऽनुभूयते ।

वैश्वदेवमन्त्राणां तात्पर्यमाह—

स्वाहाऽऽधिमाधीताय स्वाहेति समस्तानि
वैश्वदेवानि जुहोति । समस्तमेव द्विषन्तं
भ्रातृव्यमतिक्रामति (३), इति ।

सर्वदेवात्मकप्रजापतिविषयत्वादेतानि समस्तानि वैश्वदेवानि । तद्धोमेन कृत्स्न-शत्रुक्षयः ।

---

१ क. °प्तभयः ।

अङ्गमन्त्राणां तात्पर्यमाह——

दुद्भ्यः स्वाहा हनूभ्या॑ᳪ स्वाहेत्यङ्गहोमाञ्जुहोति । अङ्गेअङ्गे वै पुरुषस्य पाप्मोपश्लिष्टः । अङ्गादङ्गादेवैनं पाप्मनस्तेन मुञ्चति, इति ।

दन्ताद्यङ्गोद्देशेन हूयमानत्वादङ्गहोमाः । यजमानस्य प्रत्यवयवं यः पाप्मा संबद्धस्तस्मात्सर्वस्मात्पाप्मन एनं यजमानं तेन होमेन मुञ्चति ।

रूपमन्त्राणां तात्पर्यं दर्शयति——

अञ्ज्येताय स्वाहा कृष्णाय स्वाहा श्वेताय स्वाहेत्यश्वरूपाणि जुहोति । रूपैरेवैनᳪ समर्धयति, इति ।

अस्यानुवाकद्वयस्याश्वरूपप्रतिपादकत्वं पूर्वमेवोक्तम् । एतद्धोमेनैनं यजमानं रूपैः समीचीनैः समृद्धं करोति ।

ओषधिमन्त्राणां तात्पर्यमाह——

ओषधीभ्यः स्वाहा मूलेभ्यः स्वाहेत्योषधिहोमाञ्जुहोति । द्वय्यो वा ओषधयः । पुष्पेभ्योऽन्याः फलं गृह्णन्ति । मूलेभ्योऽन्याः । ता एवोभयीरवरुन्धे (४), इति ।

ओषधितदवयवोद्देशेन हूयमानत्वादोषधिहोमाः । तिलमाषचणकाद्योषधीनां पुष्पेभ्यः फलग्रहणम् । शृङ्गवेरसूरणादीनां मूलाभिवृद्धेरेव फलत्वान्मूलेभ्यः फलग्रहणम् । मूलेभ्यः स्वाहा पुष्पेभ्यः स्वाहेत्याद्यभिधानादुभयविधौषधिप्राप्तिः ।

वनस्पतिमन्त्रतात्पर्यं दर्शयति——

वनस्पतिभ्यः स्वाहेति वनस्पतिहोमाञ्जुहोति । आरण्यस्यान्नाद्यस्यावरुद्ध्यै, इति ।

अश्वत्थोदुम्बरादीन्वनस्पतीनुद्दिश्य हूयमानत्वाद्वनस्पतिहोमाः । तेन होमेनादनयोग्यं नीवारादिकमारण्यं प्राप्यते ।

इत्थं तृतीयप्रपाठकोक्ता अनुवाका व्याख्याताः । अथ चतुर्थप्रपाठकोक्तास्त्रयोऽनुवाका व्याख्यायन्ते । तत्रापाव्यमन्त्राणां तात्पर्यं दर्शयति——

मेषस्त्वा पचतैरवत्वित्यपाव्यानि जुहोति ।
प्राणा वै देवा अपाव्याः । प्राणानेवावरुन्धे, इति ।

आवितुं रक्षितुं योग्या अव्यास्तेभ्योऽपेतान्यपाव्यानि । स्वयमितररक्षकत्वादन्यरक्षानिरपेक्षाणीत्यर्थः । एतद्धोमेन रक्षानिरपेक्षाणां प्राप्तिर्भवति । प्राणैर्हि देहो रक्ष्यते नतु प्राणा अन्येन रक्ष्यन्ते ।

अप्संज्ञकानामनुवाकद्वयोक्तानां मन्त्राणां तात्पर्यं दर्शयति——

कूप्याभ्यः स्वाहाऽद्भ्यः स्वाहेत्यपाꣳ होमाञ्जुहोति । अप्सु वा आपः । अन्नं वा आपः । अद्भ्यो वा अन्नं जायते । यदेवाद्भ्योऽन्नं जायते । तदवरुन्धे (५), इति ।

पूर्वदीक्षा जुहोति पूर्व एव द्विषन्तं भ्रातृव्यमतिक्रामत्यनन्तरित्यै क्रामति रुन्धे जायत एकं च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टकेऽष्टमाध्याये सप्तदशोऽनुवाकः ॥ १७ ॥

---

कूपादिषूत्पन्ना अप उद्दिश्य हूयमानत्वादपां होमाः । अप्सु ह्याप उत्पद्यन्ते । आप्यत इति व्युत्पत्त्याऽन्नमेवात्राप्शब्देन विवक्षितम् । अद्भ्यो ह्यन्नं जायते । तस्मादाप्यमन्नशब्दवाच्यमन्नमप्सु वर्तत इत्युच्यते । अनेन होमेन यदद्भ्यो जायते तदाप्नोति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डेऽष्टमप्रपाठके सप्तदशोऽनुवाकः ॥ १७ ॥

---

१ क. °स्माद्द्भ्यो जायमानमन्न° ।

अथाष्टादशोऽनुवाकः ।

---

सप्तदशे संख्यानुवाकव्यतिरिक्तेष्वन्नहोमानुवाकेषु केचिद्व्याख्याताः । अष्टादशेऽवशिष्टा व्याख्यायन्ते । तत्राङ्घ्यः स्वाहेत्यनुवाकान्तेऽम्भोभ्यः स्वाहा नभोभ्यः स्वाहा महोभ्यः स्वाहेति मन्त्रत्रयमाम्नातम् । तत्र बहु प्रशंसनीयमस्तीत्यभिप्रेत्यानुवाकान्तरे पृथगुक्तिः । तत्राऽऽदावम्भोमन्त्रं प्रशंसति—

अम्भा॑ꣳसि जुहोति । अयं वै लोकोऽम्भा॑ꣳसि ।
तस्य वसवोऽधिपतयः। अग्निर्ज्योतिः। यदम्भा॑ꣳ-
सि जुहोति । इममेव लोकमवरुन्धे । वसूना॑ꣳ
सायुज्यं गच्छति । अग्निं ज्योतिरवरुन्धे, इति ।

अम्भोभ्यः स्वाहेति मन्त्रस्य बहुवचनोपेतत्वाद्विधावपि बहुवचनोक्तिः । अम्भसामाधारत्वाद्भूलोकस्य तद्रूपत्वम् । वसवश्च तस्य पालकाः । अग्निस्तस्य प्रकाशकः । अतस्तद्धोमेन भूलोकवस्वग्नीनां स्वाधीनता भवति ।

नभोमन्त्रमहोमन्त्रौ प्रशंसति—

नभा॑ꣳसि जुहोति । अन्तरिक्षं वै नभा॑ꣳसि
(१)। तस्य रुद्रा अधिपतयः । वायुर्ज्योतिः ।
यन्नभा॑ꣳसि जुहोति। अन्तरिक्षमेवावरुन्धे।
रुद्राणा॑ꣳ सायुज्यं गच्छति । वायुं ज्योति-
रवरुन्धे। महा॑ꣳसि जुहोति । असौ वै लोको
महा॑ꣳसि। तस्याऽऽदित्या अधिपतयः। सूर्यो
ज्योतिः (२)। यन्महा॑ꣳसि जुहोति । अमु-
मेव लोकमवरुन्धे। आदित्याना॑ꣳ सायुज्यं
गच्छति । सूर्यं ज्योतिरवरुन्धे, इति ।

अत्रापि पूर्ववन्मन्त्रानुसारेण बहुवचनम्। नभःशब्दस्यान्तरिक्षपर्यायत्वात्तद्वाचित्वम्। सूर्यस्य महनीयत्वान्महःशब्दाभिधेयत्वम्। अन्यत्पूर्ववद्व्याख्येयम्।

अथ यव्याख्यानां मन्त्राणां तात्पर्यं दर्शयति—

नमो राज्ञे नमो वरुणायेति यव्यानि जुहोति। अन्नाद्यस्यावरुद्ध्यै, इति।

यवो मिश्रणं तत्साधनानि यव्यानि। तेषु मन्त्रेष्वधिपतिं मा कुर्वधिपतिरहं प्रजानां भूयासमिति स्वामित्वेन प्रजासु मिश्रणमाम्नायते ततो यव्यत्वम्। प्रजास्वामित्वे ह्यन्नाद्यमधीनं भवति।

गव्यमन्त्राणां तात्पर्यं दर्शयति—

मयोभूर्वातो अभि वातूस्रा इति गव्यानि जुहोति। पशूनामवरुद्ध्यै, इति।

उस्राशब्दो गोवाचकः। तद्योगाद्गव्यत्वम्। तद्धोमेन पशुप्राप्तिः।

संतत्याख्यमन्त्रतात्पर्यं दर्शयति—

प्राणाय स्वाहा व्यानाय स्वाहेति संततिहोमाञ्जुहोति। सुवर्गस्य लोकस्य संतत्यै(३), इति।

तन्मन्त्रेषु संतनिभ्यः स्वाहेत्याम्नानात्संततिनामत्वम्। तद्धोमेन स्वर्गः संततो भवति।

प्रमुक्तिमन्त्राणां तात्पर्यमाह—

सिताय स्वाहाऽसिताय स्वाहेति प्रमुक्तीर्जुहोति। सुवर्गस्य लोकस्य प्रमुक्त्यै, इति।

प्रमुक्ताय स्वाहेति तेष्वाम्नानात्प्रमुक्तिनामत्वम्। सुवर्गस्य प्रमुक्तिर्मुक्त्यभावः सर्वदा स्वर्गेण संबन्धः। यथाऽपस्मरणमित्युक्ते स्मृत्यभावस्तद्वत्।

चतुर्थप्रपाठकोक्ता अनुवाका व्याख्याताः। अथ पञ्चमप्रपाठकोक्ता अनुवाका व्याख्यायन्ते। तत्रैकस्यानुवाकस्य स्पष्टार्थतां दर्शयति—

पृथिव्यै स्वाहाऽन्तरिक्षाय स्वाहे-

त्याह । यथा यजुरेवैतत्, इति ।

शरीरहोममन्त्राणां तात्पर्यं दर्शयति--

दत्वते स्वाहाऽदन्तकाय स्वाहेति शरीरहोमाञ्जुहोति । पितृलोकमेव तैर्यजमानोऽवरुन्धे, इति ।

दन्तादीनां शरीरसंबन्धादेते शरीरहोमाः । तद्धोमेन शरीरपातानन्तरभाविनः पितृलोकस्य प्राप्तिः ।

योगमन्त्राणां तात्पर्यं दर्शयति--

कस्त्वा युनक्ति स त्वा युनक्त्विति
परिधीन्युनक्ति । इमे वै लोकाः परि-
धयः । इमानेवास्मै लोकान्युनक्ति ।
सुवर्गस्य लोकस्य समष्ट्यै (४), इति ।

युनक्ति हस्तेन स्पृशेत् । सकृत्परिधीन्स्पृष्ट्वा पश्चादुत्तरे मन्त्रा होतव्या इत्यर्थः । परिधीनां लोकत्रयरूपत्वाल्लोका एव स्पृष्टा भवन्ति । तेन स्वर्गप्राप्तिः ।

महिममन्त्रयोस्तात्पर्यं दर्शयति--

यः प्राणतो य आत्मदा इति महिमानौ
जुहोति । सुवर्गो वै लोको महः । सुवर्ग-
मेव ताभ्यां लोकं यजमानोऽवरुन्धे, इति ।

तयोर्मन्त्रयोस्तस्य च पृथिवी महिमा तस्य तयोर्महिमेत्यभिधानान्महिमनामत्वम् । स्वर्गस्य पूज्यत्वान्महःशब्दाभिधेयत्वम् । तद्धोमेन स्वर्गप्राप्तिः ।

ब्रह्मवर्चसमन्त्राणां तात्पर्यं दर्शयति--

आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामिति
सर्वस्तानि ब्रह्मवर्चसानि जुहोति । ब्रह्मव-
र्चसमेव तैर्यजमानोऽवरुन्धे, इति ।

ब्रह्मवर्चसशब्दयोगान्मन्त्राणां तन्नामत्वम्। प्राणभृत उपदधातीति न्यायेनैकस्मिन्नेव मन्त्रे तल्लिङ्गसमवायेऽपि सर्वेषां तन्नामत्वं दर्शयितुं समस्तशब्दप्रयोगः। तेन होमेन ब्रह्मवर्चसप्राप्तिः।

अनुवाकान्तरतात्पर्यं दर्शयति—

जज्ञि बीजमिति जुहोत्यनन्तरित्यै, इति।

बीजमुत्पद्यतामित्युक्त्वा धान्यादीनां नैरन्तर्यं सिध्यति।

संनतिमन्त्राणां तात्पर्यं दर्शयति—

अग्नये समनमत्पृथिव्यै समनमदिति संनति-
होमाञ्जुहोति। सुवर्गस्य लोकस्य संनत्यै, इति।

समनमदितिशब्दसद्भावात्संनतिनामत्वम्। तद्धोमेन स्वर्गस्य संनतिः प्राप्तिर्भवति।

संहितायामनाम्नातं मन्त्रद्वयमुत्पाद्य व्याचष्टे—

भूताय स्वाहा भविष्यते स्वाहेति भूताभव्यौ
होमौ जुहोति। अयं वै लोको भूतम् (५)।
असौ भविष्यत्। अनयोरेव लोकयोः प्रति-
तिष्ठति। सर्वस्याऽऽप्त्यै। सर्वस्यावरुद्ध्यै, इति।

भूलोकस्य पूर्वमेव लब्धत्वाद्भूतत्वम्। स्वर्गस्यैतत्परं लभ्यत्वाद्भविष्यत्वम्। तद्धोमेन लोकद्वये प्रतिष्ठायां सत्यां तत्रत्यसर्वभोग्यस्य प्राप्त्यवरोधौ सिध्यतः। प्राप्तिर्लाभः। अवरोधः स्वाधीनत्वम्।

चतुर्थकाण्डोक्तस्यानुवाकत्रयस्य तात्पर्यं दर्शयति—

यदक्रन्दः प्रथमं जायमान इत्यश्वस्तोमीयं
जुहोति। सर्वस्याऽऽप्त्यै। सर्वस्य जित्यै, इति।

अश्वस्य स्तोमः स्तोत्रं तद्यस्मिन्मन्त्रजाते विद्यते तदिदमश्वस्तोमीयम्। तद्धोमेन सर्वभोगस्य प्राप्तिर्वशीकारश्च भवति।

उक्तान्नहोमसहितस्याश्वमेधस्यानुष्ठानं वेदनं च प्रशंसति--

सर्वमेव तेनाऽऽप्नोति। सर्वं जयति। योऽश्वमेधेन यजते। य उ चैनमेवं वेद, इति।

अत्राश्वमेधशब्देन तदङ्गभूतोऽन्नहोम उपलक्ष्यते।

उक्तेष्वन्नहोमेषु हुतेषु पश्चादपि रात्रिरवशिष्यते चेत्तदानीमेकस्मै स्वाहेत्यादिमन्त्राणां यावद्रात्र्यवशेषमभ्यासार्थं पुनर्विधत्ते--

यज्ञꣳ रक्षाꣳस्यजिघाꣳसन्। स एतान्प्रजापतिर्नक्तꣳहोमानपश्यत्। ताञ्जुहोत्। तैर्वै स यज्ञाद्रक्षाꣳस्यपाहन्। यन्नक्तꣳहोमाञ्जुहोति। यज्ञादेव तैर्यजमानो रक्षाꣳस्यपहन्ति, इति।

पूर्ववद्व्याख्येयम्। अत्रैकस्मै स्वाहेत्याद्यनुवाकानामादौ सकृद्धोमः। ततो विभूर्मात्रेत्यारभ्य यदक्रन्द इत्यन्तानां होमः। तत ऊर्ध्वमारात्रिसमाप्तेः पुनरप्येकस्मै स्वाहेत्यादीनां होमः।

तेष्वनुवाकेष्वन्तर्भूतानां तद्वत्पुनः पुनरभ्यासप्राप्तौ तद्वारयितुं सर्वान्ते होमं विधत्ते--

उषसे स्वाहा व्युष्ट्यै स्वाहेत्यन्ततो जुहोति। सुवर्गस्य लोकस्य समष्ट्यै (६), इति।

वै नभाꣳसि सूर्यो ज्योतिः संतत्यै समष्ट्यै भुतं यजते नव च।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टकेऽष्टमाध्यायेऽष्टादशोऽनुवाकः ॥ १८ ॥

---

सर्वान्ते प्रकाशार्थहोमेन प्रकाशितः स्वर्गः प्राप्यते।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डेऽष्टमप्रपाठकेऽष्टादशोऽनुवाकः ॥ १८ ॥

---

अथैकोनविंशोऽनुवाकः ।

---

त्रिरात्ररूपस्याश्वमेधस्य प्रथमेऽहनि संस्थिते सति गर्ता कर्तव्या येऽश्वहोमास्ते सर्वेऽप्यष्टादशानुवाके समापिताः । तस्मात्प्रथमादह्नः पूर्वस्मिन्नौपवसथ्यदिने यूपाः प्रयोक्तव्यास्तेऽस्मिन्नेकोनविंशेऽनुवाकेऽभिधीयन्ते । तत्र यूपसंख्यां विधत्ते—

एकयूपो वैकादशिनी वा । अन्येषां यज्ञानां
यूपा भवन्ति । एकविꣳशिन्यश्वमेधस्य ।
सुवर्गस्य लोकस्याभिजित्यै, इति ।

अश्वमेधव्यतिरिक्ता ये यज्ञास्तेषां सर्वेषामेक एव यूप इत्येकः पक्षः । एकादशानां यूपानां समूह इत्यपरः पक्षः । अश्वमेधस्य त्वेकविंशतिसंख्यानां यूपानां समूहः कर्तव्यः । तेन स्वर्गाभिजयः ।

तत्राग्निष्ठनामस्य मुख्ययूपस्य वृक्षविशेषं विधत्ते—

बैल्वो वा खादिरो वा पालाशो वा ।
अन्येषां यज्ञक्रतूनां यूपा भवन्ति ।
राज्जुदाल एकविꣳशत्यरत्निरश्वमेधस्य ।
सुवर्गस्य लोकस्य समष्ट्यै, इति ।

आहवनीयस्य समीपे यो यूपस्तिष्ठति स एवाग्निष्ठस्तस्याग्निष्ठस्य बैल्वादीनामन्यतमो वृक्ष इतरेषु यज्ञक्रतुषु भवति । देवतोद्देशेन द्रव्यत्यागात्मका यज्ञाः । तेष्वपि यूपवन्तः क्रतवः । तत्राश्वमेधस्य क्रतोरग्निष्ठो यूपो राज्जुदालः कर्तव्यः । श्लेष्मातकवृक्षो राज्जुदालः । स च यूप एकविंशत्यरत्निः । चतुर्विंशतिरङ्गुलयोऽरत्निः । तादृगरत्निभिरेकविंशतिभिः परिमितः कार्यः । स चात्युन्नतत्वात्स्वर्गमाप्त्यै भवति ।

अश्वमेधसंबन्धियूपविशेषपशूनामवदाने साधनविशेषं विधत्ते—

नान्येषां पशूनां तेजन्या अवद्यन्ति ।

---

१ क. ख अवद्यं ।

अवद्यन्त्यश्वस्य (१)। पाप्मा वै तेजनी। पाप्मनोऽपहत्यै, इति।

अश्वस्य रुधिरस्य धारयित्री स्रुक् तेजनीत्युच्यते। इतरेषां पशूनां रुधिरधारणाभावादवदानं तेजन्या न क्रियते। अश्वस्य तु तत्सद्भावादवदानं तेजन्या कर्तव्यम्। तस्या अश्वतेजन्याः पापरूपत्वात्तयाऽवदाने सति पापस्यापहतिर्भवति।

अन्यमपि साधनविशेषं विधत्ते—

प्लक्षशाखायामन्येषां पशूनामवद्यन्ति। वेतसशाखायामश्वस्य। अप्सुयोनिर्वा अश्वः। अप्सुजो वेतसः। स्व एवास्य योनाववद्यति, इति।

अश्ववेतसयोरब्जन्यत्वेन वेतसस्यापां चाभेदोपचारेण वेतसोऽश्वस्य स्वकीया योनिरित्युच्यते।

विहितानामेकविंशतियूपानां पशुविशेषनियोजने व्यवस्थां विधत्ते—

यूपेषु ग्राम्यान्पशून्नियुञ्जन्ति। आरोकेष्वारण्यान्धारयन्ति। पशूनां व्यावृत्त्यै, इति।

'रोहितो धूम्ररोहितः' इत्यादयः पशवो ग्राम्याः। 'इन्द्राय राज्ञे शूकरः' इत्यादय आरण्याः। तत्र ग्राम्या यूपेषु बन्धनीयाः। आरण्यास्त्वारोकेषु यूपान्तरालेषु रशनाभिर्बद्ध्वा धारणीयाः। एवं च सति ग्राम्याणामारण्यानां च परस्परव्यावृत्तिर्भवति।

तेषु पशुष्वपरमवान्तरविशेषं विधत्ते—

आ ग्राम्यान्पशूँल्लभन्ते। प्राऽऽरण्यान्सृजन्ति। पाप्मनोऽपहत्यै (२), इति।

अश्वस्य व्यावृत्त्यै त्रीणि च।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टकेऽष्टमाध्याय एकोनविंशोऽनुवाकः॥ १९॥

=

ग्राम्या रोहितादय आलम्भनीयाः । आरण्यास्तु सूकरादयः पर्यग्निकरणानन्तरं प्रकर्षेणोत्स्रष्टव्याः । तेषां परित्यागेन पापं हतं भवति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डेऽष्टमप्रपाठक एकोनविंशोऽनुवाकः ॥ १९ ॥

---

अथ विंशोऽनुवाकः ।

---

एकोनविंशे यूपा अभिहिताः । तेषां यूपानां स्था[प]नादयो विंशेऽभिधीयन्ते । तत्र प्रधानयूपस्थापनं विधत्ते—

राज्जुदालमग्निष्ठं मिनोति ।

भ्रूणहत्याया अपहत्यै, इति ।

योऽयं श्लेष्मातकवृक्षजन्यो यूपस्तमेनमग्निष्ठं मिनोत्यग्निसमीपे यथा स्थितो भवति तथा प्रक्षिपेत् । तत्प्रक्षेपेण भ्रूणहत्या गर्भादिवधदोषो विनाशितो भवति ।

तस्याग्निष्ठस्य यूपस्य पार्श्वद्वये देवदारुयूपौ विधत्ते—

पौतुद्रवावभितो भवतः । पुण्यस्य गन्धस्यावरुद्ध्यै । भ्रूणहत्यामेवास्मादपहत्य । पुण्येन गन्धेनोभयतः परिगृह्णाति, इति ।

देवदारुवृक्षस्य गन्धः सुरभिः । अतस्ताभ्यां यूपाभ्यां पुण्यगन्धप्राप्तिः । अग्निष्ठयूपप्रक्षेपेणास्माद्यजमानाद्भ्रूणहत्यादिदोषमपहत्य देवदारुयूपद्वयेन यजमानस्योभयतः सुरभिगन्धपरिग्रहो भवति ।

अथैतस्य यूपत्रयस्य पार्श्वयोर्बैल्वयूपान्विधत्ते—

षड्बैल्वा भवन्ति । ब्रह्मवर्चसस्यावरुद्ध्यै, इति ।

दक्षिणपार्श्वे त्रय उत्तरपार्श्वे त्रय इत्येवं षड्यूपाः । तदीयो बिल्ववृक्षो ब्रह्मवर्चसहेतुः ।

उक्तस्य यूपनवकस्य पार्श्वयोः षड्यूपान्विधत्ते—

षट् खादिराः । तेजसोऽवरुद्ध्यै (१), इति ।

पूर्ववद्दक्षिणतस्त्रय उत्तरतस्त्रय इत्येवं षट् खादिरवृक्षजास्तेजःप्राप्तिहेतवः।

उक्तायाः पञ्चदशयूपपङ्क्तेः पार्श्वयोः पुनः षड्यूपान्विधत्ते–

षट् पालाशाः। सोमपीथस्यावरुद्ध्यै, इति।

पूर्ववद्दक्षिणतस्त्रय उत्तरतस्त्रय इत्येवं षट्। पलाशवृक्षस्य सोमजन्यत्वात्सोमपानप्राप्तिहेतुत्वम्। तदेतत्सर्वं सूत्रकारेण संगृहीतम्–"राज्जुदालमेकविंशत्यरत्निमग्निष्ठं मिनोति पौतुद्रवावभितस्त्रयो बैल्वा दक्षिणतस्त्रय उत्तरतस्त्रयः खादिरा दक्षिणतस्त्रय उत्तरतस्त्रयः पालाशा दक्षिणतस्त्रय उत्तरतस्त्रयः" इति।

तानेतान्मिलित्वा प्रशंसति–

एकविंशतिः संपद्यन्ते। एकविंशतिर्वै देवलोकाः। द्वादश मासाः पञ्चर्तवः। त्रय इमे लोकाः। असावादित्य एकविंशः। एष सुवर्गो लोकः। सुवर्गस्य लोकस्य समष्ट्यै, इति।

स्पष्टोऽर्थः।

यूपसंख्यास्तुतिप्रसङ्गेन पशुबाहुल्यं स्तौति–

शतं पशवो भवन्ति (२)। शतायुः पुरुषः शतेन्द्रियः। आयुष्येवेन्द्रिये प्रतितिष्ठति।

अत्र शतशब्दो बाहुल्यमुपलक्षयति।

अनत्यायाः पशुसंख्यायाः शतादप्यधिकत्वादत्र संख्याविशेषानियमं वारयति–

सर्वं वा अश्वमेधयाप्नोति। अपरिमिता भवन्ति। अपरिमितस्यावरुद्ध्यै, इति।

अश्वमेधयाजिनः सर्वफलप्राप्तिरपेक्षिता। तस्मादपरिमितस्य फलस्य प्राप्त्यै पशवोऽप्यपरिमिताः संख्याविशेषनियमरहिताः कर्तव्याः।

अथ प्रश्नोत्तराभ्यां पशूनामवदानप्रदेशविशेषं विधत्ते—

ब्रह्मवादिनो वदन्ति । कस्मात्सत्यात् । दक्षिण-
तोऽन्येषां पशूनामवद्यन्ति । उत्तरतोऽश्वस्येति ।
वारुणो वा अश्वः (३) । एषा वै वरुणस्य
दिक् । स्वायामेवास्य दिश्यवद्यति । यदितरेषां
पशूनामवद्यति । शतदेवत्यं तेनावरुन्धे, इति ।

अत्र ह्यश्वतूपरगोमृगहवींषि होमाधारस्याग्नेरुत्तरतः सादितानि । इतरपशूनां हवींषि दक्षिणतः सादितानि । अतोऽवदानमपि तथैव क्रियते । तत्र ब्रह्मवादिनः पृच्छन्ति । इतरपशूनां दक्षिणस्यां दिश्यवदानम्, अश्वस्य तूत्तरस्यां दिश्यवदानमित्यत्र वैषम्ये किं कारणमिति प्रश्नः । तत्रोत्तरवादिन एवमाहुः । अश्वो हि वारुणः । 'प्रजापतिर्वरुणायाश्वमनयत्' इति श्रुतेः । एषोत्तरा च दिग्वरुणस्य संबन्धिनी । सर्वानिष्टनिवारकत्वात् । अत एवानिष्टशमनहेतुत्वमन्यत्र श्रूयते—'उदीचीनमुद्वासयति । एषा वै देवमनुष्याणाꣳ शान्ता दिक्' इति । अतस्तस्यामवदानेनाश्वस्य या स्वकीया दिक्तैनैवावदानं भवति । यत्त्वितरेषां पशूनां दक्षिणस्यामवदानं तेन बहुदेवत्यं यागफलं लभते । तस्माद्वैषम्यमुचितमित्यभिप्रायः ।

उत्तरस्यां दिश्यश्वहविषोऽवस्थापनं विधत्ते—

चितेऽग्नावधिवैतसे कटेऽश्वं चिनोति ।
अप्सुयोनिर्वा अश्वः । अप्सुजो वैतसः ।
स्व एवैनं योनौ प्रतिष्ठापयति, इति ।

योऽयं चयनेन निष्पादितश्चित्योऽग्निः स्थूलरूपस्तस्मिन्नग्निनामके स्थलेऽध्युपरि वेतसशाखाभिर्निष्पादितं कटं प्रसार्य तस्मिन्कटे हविरश्वाङ्गरूपं स्थापयेत् । अप्सुयोनिरित्यादि स्पष्टम् ।

तूपरगोमृगहविषां सादने प्रकारं विधत्ते—

पुरस्तात्प्रत्यञ्चं तूपरं चिनोति । पश्चा-

१ क. होमार्हत्वादग्ने° ।

त्प्राचीनं गोमृगम् (४)। प्राणापा-
नावेवास्मिन्त्सम्यञ्चौ दधाति, इति।

यदिदमश्वसंबन्धि हविरवस्थापितं तस्य पूर्वस्यां दिशि तूपरस्य हविः प्रत्यङ्मुखं सादयेत्। प्रतीच्यां दिशि गोमृगस्य हविः प्राङ्मुखं सादयेत्। शृङ्गहीनः पशुस्तूपरः। शृङ्गवान्मनुष्यहिंसको धूर्तो बलीवर्दो गोमृगः। यद्वा गोहरिणयोः संयोगेनोत्पन्नः संकीर्णजातिर्गोमृगः। तयोः पुरस्तात्पश्चाच्च सादने सति मध्येऽवस्थितस्याश्वस्य प्राणापानौ सम्यग्धारितौ भवतः।

आसादने विशेषमुक्त्वा होमविशेषं विधत्ते—

अश्वं तूपरं गोमृगमिति सर्वहुत एताञ्जु-
होति। एषां लोकानामभिजित्यै, इति।

अश्वादीनेतान्सर्वहुतो निरवशेषेण यथा हूयमाना भवन्ति तथा जुहुयात्। तदीयमंशमल्पमपि नावशेषयेत्।

तस्योपरि होमान्तरं विधत्ते—

आत्मनाऽभिजुहोति। सात्मा-
नमेवैन१ सतनुं करोति, इति।

अश्वस्याऽऽत्मीयावयवप्रतिपादकं स्तेगान्दंष्ट्राभ्यामिति मन्त्रजातमत्राऽऽत्मशब्देनोपलक्ष्यते। हुतमश्वमभिलक्ष्योपर्यात्मना स्तेगानीति मन्त्रजातेन जुहुयात्। तथा सत्येनमश्वं जीवात्मसहितं शरीरसहितं करोति।

एतद्वेदनं प्रशंसति—

सात्माऽमुष्मिँल्लोके भवति। य एवं वेद।
अथो वसोरिव धारां तेनावरुन्धे, इति।

एवंवेदिता स्वर्गलोके सात्मा शरीरी भवति। अपि च वसोर्धारां धनस्य परम्परां तेन होमेन लभते।

---

१ क. हविः स्था। २ क. 'णयोर्योगे'। ३ क. निःशेषेण। ४ क [illegible] ।एता अ'।

तत ऊर्ध्वमाहुतिद्वयं विधत्ते—

इ॒लु॒वर्दा॑य॒ स्वाहा॑ बलि॒वर्दा॑य॒ स्वाहेत्या॑ह ।
सं॒व॒त्स॒रो वा इ॑लु॒वर्दः॑ । प॒रि॒व॒त्स॒रो ब॑लि॒-
वर्दः॑ । सं॒व॒त्स॒रादे॒व प॑रिवत्स॒रादा॒यु॒रव॑रुन्धे ।
आयु॑रे॒वास्मि॒न्द॑धाति । तस्मा॑द॒श्वमेधया॒जी
ज॒रसा॑ वि॒स्र॒सा॒ऽमुं॒ लो॒कमे॑ति (५), इति ।

तेज॒सो॒ऽव॑रुद्ध्यै भव॒न्त्य॒श्वो गो॒मृ॒गमि॑लु॒व॒र्द॒श्च॒त्वारि॑ च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टकेऽष्टमाध्याये विंशोऽनुवाकः ॥ २० ॥

---

प्रभवादिपञ्चके प्रथमोऽब्दः संवत्सरः । द्वितीयोऽब्दः परिवत्सरः । तदीयहोमेनोभयस्मादप्यायुः प्राप्नोति । अत एवायमश्वमेधयाजी बाल्ये यौवने वा न म्रियते । किंतु जरसा युक्तः सञ्शनैर्हस्तपादादिविस्रंसनेन मृत्वा स्वर्गं प्राप्नोति। अत्रौपवसथ्येऽहनि यूपाः कृत्स्ना वर्णिताः । यूपप्रसङ्गाद्बुद्धिस्थमश्वावदानादिकमत्र प्रतिपादितम् । एतदीयानुष्ठानं तु त्रिरात्रस्य मध्यमेऽहनि द्रष्टव्यम् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डेऽष्टमप्रपाठके विंशोऽनुवाकः ॥ २० ॥

---

अथैकविंशोऽनुवाकः ।

---

विंशेऽनुवाके यूपानां स्थानादयो विहिताः । एकविंशे तु चेतव्याग्न्यादेर्विशेषोऽभिधीयते । तमिमं विशेषं विधत्ते—

एक॒वि॒ꣳ॒शो॑ऽग्निर्भ॑वति । एक॒वि॒ꣳ॒शः
स्तोमः॑ । एक॑विꣳशति॒र्यू॒पाः॑, इति ।

एकविंशतिसंख्याकैः पुरुषैः संमितोऽग्निश्चेतव्यः । तथा स्तोमेषु त्रिवृदादिषु

---

१ क. सञ्हस्त° ।

मध्य एकविंशतिस्तोमयुक्ते हविर्विशेष उक्थ्यः कार्यः। यूपाश्चैकविंशतिसंख्याकाः कर्तव्याः। एवं सिद्धान्तोऽभिहितः।

अथ पूर्वपक्षत्वेनाग्न्यादीनां द्वादशत्वविधित्सया पूर्वोक्तमेकविंशत्वं दृष्टान्तपुरःसरं दूषयति-

यथा वा अश्वा वर्षभा वा वृषाणः सꣳस्फुरेरन्। एवमेतत्स्तोमाः सꣳस्फुरन्ते। यदेकविꣳशाः। ते यत्संमृच्छेरन्। हन्येतास्य यज्ञः, इति।

यथा लोके केचिद्दुर्दान्ता ऋषभा अश्वा वा वृषाणः सेक्तुं समर्था औत्सुक्यातिशयेन गां वडवां वा वोढुं संस्फुरेरन्नतिशयेन संस्फुरेयुर्वल्गनं कुर्युरित्यर्थः। अनेनैव प्रकारेण ये प्रौढा एकविंशतिस्तोमा एते सहसा वर्तमानाः संस्फुरन्ते त्वरां कुर्वन्ति। तथा त्वर्यमाणास्ते स्तोमा यदि समृच्छेरन्स्खलिताः स्युस्तदानीमस्य यज्ञो हन्येत। स्तोमवदग्नियूपयोरप्युपघात उन्नेयः।

एवमेकविंशत्वपक्षं दूषयित्वा पूर्वपक्षवादिनां मतमुपन्यस्यति-

द्वादश एवाग्निः स्यादित्याहुः। द्वादशः स्तोमः (१)। एकादश यूपाः, इति।

द्वादशपुरुषपरिमित एवाग्निः कर्तव्यः। स्तोमोऽपि द्वादशसंख्यायुक्त एव कार्यः। यूपानां तु द्वादशसंख्यायाः क्वाप्यभावादेकादश ते कर्तव्याः।

तत्राग्नेर्द्वादशपुरुषपरिमितत्वं प्रशंसति-

यद्द्वादशोऽग्निर्भवति। द्वादश मासाः संवत्सरः। संवत्सरेणैवास्मा अन्नमवरुन्धे, इति।

स्पष्टोऽर्थः। इयमेव प्रशंसा द्वादशस्तोमेऽपि योजनीया।

यूपानामेकादशसंख्यां विभज्य प्रशंसति---

यद्दश यूपा भवन्ति। दशाक्षरा विराट्।

१ ख. °पा अप्येक°। २ क. सेचनसमर्था। ३ क. °रन्तस्त्वरां। ४ क. °च्छेरंस्त्वरिताः।

अन्नं विराट्। विराजैवान्नाद्यमव-
रुन्धे। स एकादशः। स्तनं एवास्यै
सः (२)। दुह एवैनां तेन, इति।

तत्रैकादशयूपेषु दशयूपगतया संख्यया विराट्द्वाराऽन्नप्राप्तिः। योऽयमव-शिष्ट एकादशो यूपः सोऽयमस्याः पूर्वोक्ताया धेनुरूपाया विराजः स्तनस्थानीयः। तेन स्तनस्थानीयेनैनां विराजं दुह एवाभिमतफलं दोग्ध्येव। तस्मादग्निस्तोमयो-र्द्वादशसंख्या यूपेष्वेकादशसंख्या च कर्तव्या। सोऽयं पक्षः सिद्धान्तिभि-र्दूषितः।

तदेतद्दूषणं दर्शयति—

तदाहुः। यद्द्वादशोऽग्निः स्याद्द्वा-
दशः स्तोम एकादश यूपाः। यथा
स्थूरिणा यायात्। तादृक्तत्, इति।

तत्र द्वादशयूपपक्षे केचिदभिज्ञा दूषणमेवमाहुः। यद्यग्निस्तोमयोर्द्वादशत्वं यूपेष्वेकादशत्वं स्यात्तदानीं यथा लोके स्थूरिणा स्थूलभारयुक्तेन शकटादिना सम एव देशे वृषो गन्तुं शक्नुयात्, न तु विषमे पर्वतारोहणादौ तदल्पसं-ख्यायुक्तत्वं तादृक्स्यात्। स्वल्पया द्वादशसंख्यया स्वल्पा एव क्रतवो निर्वोढुं शक्यन्ते न तु महाक्रतवोऽश्वमेधादय इत्यर्थः।

पूर्वपक्षं दूषयित्वा सिद्धान्तं निगमयति—

एकविꣳश एवाग्निः स्यादित्याहुः। एक-
विꣳशः स्तोमः। एकविꣳशतिर्यूपाः। यथा
प्रष्टिभिर्याति। तादृगेव तत् (३), इति।

प्रष्टिभिः शिरसि भारवाहिभिर्युक्तः पुरुषः समे देशे विषमेऽपि पर्वतारोह-णादौ गन्तुं शक्नुयात्। तदेकविंशत्वं तादृक् स्यात्। तया संख्यया स्वल्पा महान्तश्च क्रतवोऽनुष्ठातुं शक्याः। यत्तु दान्तवृषभादिदृष्टान्तेन स्खलनमाशङ्कितं तत्सावधानेषु पुरुषेषु न संभवतीत्यभिप्रायः।

१ क. वृषादिना। २ क. 'शे ग'।

तदेतदेकविंशतित्वं वृषभस्य ककुदं दृष्टान्तीकृत्य प्रशंसति---

यो वा अश्वमेधे तिस्रः ककुभो वेद । ककुद्ध राज्ञां भवति । एकविꣳशोऽग्निर्भवति । एकविꣳशः स्तोमः । एकविꣳशतिर्यूपाः । एता वा अश्वमेधे तिस्रः ककुभः । य एवं वेद । ककुद्ध राज्ञां भवति, इति ।

यथा वृषभस्य ककुदुन्नतावयव एवमश्वमेधस्य तिस्रः ककुभ उन्नतावयवाः । तदभिज्ञो यजमानो राज्ञां मध्ये ककुदिवोन्नतो भवति । कास्ताः ककुभ इति विवक्षायामेकविंश इत्यादिना ता उच्यन्ते ।

य एवं वेदेत्यादेः पुनरुक्तिरुपसंहारार्था तां शिरोदृष्टान्तेन प्रशंसति---

यो वा अश्वमेधे त्रीणि शीर्षाणि वेद । शिरो ह राज्ञां भवति । एकविꣳशोऽग्निर्भवति । एकविꣳशः स्तोमः । एकविꣳशतिर्यूपाः । एतानि वा अश्वमेधे त्रीणि शीर्षाणि । य एवं वेद । शिरो ह राज्ञां भवति (४), इति ।

द्वादशः स्तोमः स एव तच्छिरो ह राज्ञां भवति षट् च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टकेऽष्टमाध्याय एकविंशोऽनुवाकः ॥ २१ ॥

---

यथा पुरुषस्य शिर उन्नतोऽवयवस्तद्वदश्वमेधस्य शिरःस्थानीयान्यग्न्यादीनि । अन्यत्पूर्ववद्व्याख्येयम् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डेऽष्टमप्रपाठक एकविंशोऽनुवाकः ॥ २१ ॥

---

अथ द्वाविंशोऽनुवाकः।

---

एकविंश[ति]पुरुषपरिमिताग्न्यादय एकविंशानुवाक उक्ताः। तत्रैकविंशस्तोमयुक्तमुक्थ्याख्यं यद्द्वितीयमहस्तस्मिन्बहिष्पवमाने विशेषा द्वाविंशानुवाक उच्यन्ते। तत्र बहिष्पवमानसर्पणकालेऽश्वसाहित्यं विधत्ते—

देवा वा अश्वमेधे पवमाने। सुवर्गं लोकं न प्राजानन्। तमश्वः प्राजानात्। यदश्वमेधेऽश्वेन मेध्येनोदञ्चो बहिष्पवमानꣳ सर्पन्ति। सुवर्गस्य लोकस्य प्रज्ञात्यै। न वै मनुष्यः सुवर्गं लोकमञ्जसा वेद। अश्वो वै सुवर्गं लोकमञ्जसा वेद, इति।

पुरा कदाचिद्देवा अश्वमेधमनुतिष्ठन्तो बहिष्पवमानस्तोत्रे स्वर्गलोकं न ज्ञातवन्तः। अयमश्वः स्वर्गप्राप्तिहेतुरिति तेषां ज्ञानं नाऽऽसीत्। अश्वस्तु प्राजापत्यत्वात्तं स्वर्गलोकं प्रज्ञातवान्। तस्माद्यागयोग्येनाश्वेन सहोदङ्मुखा ऋत्विजो बहिष्पवमानमुद्दिश्य सर्पेयुः। तच्च स्वर्गलोकप्रज्ञानाय भवति। मनुष्यः शास्त्रदृष्ट्या स्वर्गं लोकं जानन्नप्यञ्जसा न वेदादृष्टपूर्वत्वात्सम्यङ्न जानाति। अश्वस्तु प्रजापतिसामर्थ्याज्जानाति। तस्मादश्वेन सहैव सर्पेयुः।

तस्याश्वस्योद्गातृस्थाने वरणं विधत्ते—

यदुद्गातोद्गायेत्। यथा क्षेत्रज्ञोऽन्येन पथा प्रतिपादयेत्। तादृक्तत् (१)। उद्गातारमपरुध्य। अश्वमुद्गीथाय वृणीते। यथा क्षेत्रज्ञोऽञ्जसा नयति। एवमेवैनमश्वः सुवर्गं लोकमञ्जसा नयति, इति।

यदि तस्मिन्बहिष्पवमान औद्गात्रमुद्गाता कुर्यात्तदानीं यथा लोके कश्चिदक्षेत्रज्ञो मार्गज्ञानरहितोऽपेक्षितं मार्गं परित्यज्यान्येन मार्गेण पुरुषान्गमयेत्तदुद्गातुरज्ञानं तादृक्स्यात्। तस्मादुद्गातारं निराकृत्याश्वमेवौद्गात्रकर्मणे वृणीते। तथा सति यथा क्षेत्रज्ञः पुरुषोऽञ्जसा सम्यङ्मार्गेण नयत्येवमयमश्वः सम्यक्स्वर्गं नयति।

अन्वारम्भणं विधत्ते—

पुच्छमन्वारभन्ते । सुवर्गस्य लोकस्य समष्ट्यै, इति ।

ये बहिष्पवमानाय सर्पन्ति ते सर्वे तस्याश्वस्य पुच्छमवलम्ब्य सर्पेयुः । तच्च स्वर्गप्राप्त्यै भवति ।

अश्वकर्तृकमुद्गानं दर्शयति—

हिं करोति । सामैवाकः । हिं करोति ।

उद्गीथ एवास्य सः ( २ ), इति ।

अश्वस्य पुरस्ताद्वडवानामवस्थापनं विधास्यते । तथा सति वडवादर्शनेनायमश्व औत्सुक्याद्यदि हिं कुर्यात्तदानीं सोऽश्वः सामैव करोति । हिंकारस्य सामोपक्रमरूपत्वात् । न केवलमुपक्रममात्रं किंतूद्गात्रा गातव्यो योऽयमुद्गीथस्तत्स्थानीयोऽप्ययं हिंकार इति दर्शयितुं पुनरपि हिं करोतीत्युक्तम् ।

तदेतद्विधत्ते—

वडवा उपरुन्धति । मिथुनत्वाय

प्रजात्यै । अथो यथोपगातारं

उपगायन्ति । तादृगेव तत्, इति ।

वडवा अश्वस्त्रिय आनीयाश्वस्य पुरस्तादवस्थापनीयाः । तच्च स्त्रीपुरुषरूपमिथुनभावाय प्रजोत्पत्तये च संपद्यते । किंचाश्वस्य हिंकारं श्रुत्वा यदि वडवाः प्रत्यभि हिं कुर्युस्तदानीमेतदुपगानसमं भवति ।

विधत्ते—

उदगासीदश्वो मेध्य इत्याह । प्राजापत्यो वा

अश्वः । प्रजापतिरुद्गीथः । उद्गीथमेवावरुन्धे ।

अथो ऋक्सामयोरेव प्रतितिष्ठति, इति ।

हिंकारानन्तरमध्वर्युरेवं ब्रूयात्, यागयोग्योऽयमश्व उद्गानमकरोदिति । अश्वस्य प्राजापत्यत्वादुद्गीथस्यापि प्रशस्तत्वेन प्रजापतिरूपत्वात्तदीयहिंकार उद्गातृवचनेनोद्गीथमेव प्राप्नोति । किंचायमृक्सामयोः प्रतिष्ठितो भवति ।

प्रकृतौ बर्हिषा स्तोत्रस्योपाकरणम् । अत्र बर्हिस्थाने हिरण्यं विधत्ते—

हिरण्येनोपाकरोति । ज्योतिर्वै हिरण्यम् ।
ज्योतिरेव मुखतो दधाति । यजमाने
च प्रजासु च । अथो हिरण्यज्योतिरेव
यजमानः सुवर्गं लोकमेति ( ३ ), इति ।

तत्स उपाकरोति चत्वारि च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टकेऽष्टमाध्याये
द्वाविंशोऽनुवाकः ॥ २२ ॥

हिरण्यस्य ज्योतीरूपत्वात्तेनोपाकरणे सति यजमाने तदीयप्रजासु च मुखतः पुरस्ताज्ज्योतिरेव संपादयति । किंचायं यजमानो हिरण्यज्योतिर्युक्तः स्वर्गं प्राप्नोति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डेऽष्टमप्रपाठके द्वाविंशोऽनुवाकः ॥ २२ ॥

अथ त्रयोविंशोऽनुवाकः ।

एकविंशोक्थ्यरूपे द्वितीयेऽह्नि बहिष्पवमानेऽश्वस्योद्गातृत्वं द्वाविंशानुवाकेऽभिहितम् । तच्च सूत्रकारेणैवं संगृहीतम्—" अश्वमन्वारभ्य बहिष्पवमानं सर्पन्त्यश्निमूर्धेत्युद्गातारमपरुध्याश्वमुद्गीथाय वृणीते तस्मै वडवा उपरुन्धन्ति ता यदभि हिं करोति स उद्गीथो यत्प्रत्यभि हिं कुर्वन्ति स उपगीथ उदगासीदश्वो मेध्यो यज्ञियः " इत्यादि । अथाश्वे पर्यग्न्यानां पशूनां नियोजनं त्रयोविंशानुवाकेऽभिधीयते । तदेतद्विधत्ते—

पुरुषो वै यज्ञः । यज्ञः प्रजापतिः । यदश्वे पशून्नियुञ्जन्ति । यज्ञादेव तद्यज्ञं प्रयुङ्क्ते, इति ।

यागकर्तुः पुरुषस्य सर्वव्यापाराधारत्वाद्यज्ञरूपत्वम् । यज्ञस्य प्रजापतिसृष्टत्वा-

१ क. ०त्रिरूपत्वात्प्र० ।

त्मजाप्रतिरेव । अश्वश्च प्रजापतिदेवताकः । तस्मात्तादृशेऽश्वे यूपस्थानीये तदवयवसंबन्धित्वेन ये पशवः पर्यग्न्यास्तान्सर्वांस्तस्मिन्नेव नियुञ्जीत । तथा सत्यश्वरूपाद्यज्ञादेवेतरपशुरूपं यज्ञं प्रयुङ्क्ते ।

प्रथमं तावदश्वादित्रयस्य नियोजनं विधत्ते—

अश्वं तूपरं गोमृगम् । तानग्निष्ठ आलभते । सेनामुखमेव तत्सꣳश्यति । तस्माद्राजमुखं भीष्मं भावुकम्, इति ।

अग्निष्ठाख्यः प्रधानभूतो यो यूपस्तस्मिन्नश्वतूपरगोमृगाणामालम्भनोपलक्षितं नियोजनं कुर्यात् । तथा सति मुख्यपशुनियोजनेन तेन राज्ञः सेनामुखं संश्यति तीक्ष्णी करोति सेनायां पुरोगामिनः पुरुषाञ्शूरान्करोति । यस्मात्सेनामुखस्य तीक्ष्णत्वं तस्माल्लोके राजमुखं भीष्मं भावुकं भयानकं भवितुं योग्यं भवति । प्रायेण हि राजानः प्रजा भीषयितुं सभायामुग्रमुखा दृश्यन्ते ।

मुख्यपशूनां नियोजनं विधायाश्वाङ्गसंबन्धिषु पशुष्वाद्यस्य नियोजनं विधत्ते—

आग्नेयं कृष्णग्रीवं पुरस्ताल्ललाटे । पूर्वाग्निमेव तं कुरुते (१)। तस्मात्पूर्वाग्निं पुरस्तात्स्थापयन्ति, इति ।

ग्रीवायां कृष्णवर्णो यस्याजस्य सोऽयमजः कृष्णग्रीवः । स चाग्निदेवताकस्तादृशमजमग्निष्ठे नियुक्तस्याश्वस्य ललाटे नियुञ्जीत बध्नीयात् । यदि ललाटे बन्धनमयोग्यं तर्हि तथा भावयेत् । तेन भावितेन ललाटबन्धनेन तमाग्नेयं पशुं पूर्वाग्निमेवाऽऽहवनीयरूपमेव कुरुते । यस्मादाहवनीयस्थानीयस्याऽऽग्नेयस्य पशोर्ललाटरूपे पूर्वभागे बन्धनं तस्मात्पूर्वाग्निमाहवनीयं पूर्वदेशे स्थापयन्ति ।

द्वितीयस्य पशोर्नियोजनं विधत्ते—

पौष्णमन्वञ्चम् । अन्नं वै पूषा । तस्मात्पूर्वामावांहार्यमाहरन्ति, इति ।

योऽयमाग्नेयः पशुर्ललाटे नियुक्तस्तमनु पश्चादश्वाति गच्छतीत्यन्वक्तमन्वञ्चं पूषदेवताकं नियुञ्जीताऽऽग्नेयस्य पश्चाद्भागे बध्नीयादित्यर्थः। योऽयं पूषदेवः सोऽयं पुष्टिहेतुत्वादन्नरूपः। यस्मात्तथाविधदेवताकः पौष्णः पशुः पूर्वभागे नियुक्तस्तस्माद्यागेष्वाहार्यमानेतव्यं सर्वं पूर्वाग्नावाहवनीय आहरन्ति।

तृतीयपशोर्नियोजनं विधत्ते—

ऐन्द्रापौष्णमुपरिष्टात्। ऐन्द्रो वै राजन्योऽन्नं पूषा। अन्नाद्येनैवैनमुभयतः परिगृह्णाति। तस्माद्राजन्योऽन्नादो भावुकः, इति।

अश्वस्योपरिष्टादूर्ध्वभागे पशुमैन्द्रापौष्णं नियुञ्जीत। योऽयं यजमानो राजन्यः सोऽयमिन्द्रदेवताकः। पूषा चान्नात्मक इत्युक्तम्। एवं च सति पूर्वत्रापि पूषदेवताकस्य पशोरुक्तत्वादत्रापि पूषदेवताकस्योच्यमानत्वादेनं राजानमुभयतोऽन्नाद्येन युक्तं करोति। यस्मादुभयतोऽन्नाद्य उक्तस्तस्माद्राजन्यः सर्वत्रान्नादो भवितुं शक्यः।

चतुर्थपञ्चमपश्वोर्नियोजनं विधत्ते—

आग्नेयौ कृष्णग्रीवौ बाह्वोः। बाह्वोरेव वीर्यं धत्ते (२)। तस्माद्राजन्यो बाहुबली भावुकः, इति।

ग्रीवायां कृष्णवर्णेन लाञ्छितावग्निदेवताकावजावश्वस्य बाह्वोर्नियुञ्जीत। तेन राजबाह्वोर्वीर्यं स्थापितं भवति। यस्मादेवं तस्माद्राजन्यः खड्गधनुरादिधारणेन बाहुबलयुक्तो भवितुं समर्थः।

षष्ठसप्तमयोः पश्वोर्नियोजनं विधत्ते—

त्वाष्ट्रौ लोमशसक्थौ सक्थ्योः। सक्थ्योरेव वीर्यं धत्ते। तस्माद्राजन्य ऊरुबली भावुकः, इति।

लोमयुक्ते सक्थिनी ययोस्तौ लोमशसक्थ्यौ तादृशौ त्वष्टृदेवताकौ पशू अश्वस्योर्वोर्नियुञ्जीत तथा सत्यूर्वोरेव वीर्यं धृतं भवति। तस्माद्राजन्योऽश्वारोहणादावूरुबलयुक्तो भवति।

---

१ क. °न्वञ्चः पशुरन्व°।

अष्टमनवमयोः पश्वोर्नियोजनं विधत्ते—

शितिपृष्ठौ बार्हस्पत्यौ पृष्ठे। ब्रह्मवर्चसमेवोप- रिष्टाद्धत्ते। अथो कवचे एवैते अभितः पर्यू- हते। तस्माद्राजन्यः संनद्धो वीर्यं करोति, इति।

उपरिभागे श्वेतवर्णो ययोस्तौ शितिपृष्ठौ तौ च बृहस्पतिदेवताकावश्वस्य पृष्ठे पार्श्वभागे नियुञ्जीत। उपरिभागे श्वेतवर्णसद्भावादयं यजमान इत ऊर्ध्वभाविनि काले ब्रह्मवर्चसमेव धारयति। अपि चाश्वस्य पुरस्तात्पश्चाच्च पशुनियोजनेन राज्ञोऽभितः कवचे एव प्रविष्ठापिते भवतः। यस्मात्कवचस्थानीयमिदं तस्मात्कवचादिभिः संनद्धो राजा युद्धे शौर्यं करोति।

दशमस्य पशोर्नियोजनं विधत्ते—

धात्रे पृषोदरमधस्तात्। प्रतिष्ठा- मेवैतां कुरुते। अथो इयं वै धाता। अस्यामेव प्रतितिष्ठति, इति।

पृषोदरं श्वेतबिन्दुचिह्नोदरं धातृदेवताकं पशुमश्वस्याधोभागे नियुञ्जीत। एतामधोभागनियोजनरूपामश्वस्य प्रतिष्ठां स्थैर्यमेव संपादयति। अपि च धाता पृथिवीरूपः। ततः पृथिव्यामेवासौ प्रतितिष्ठति।

एकादशस्य पशोर्नियोजनं विधत्ते—

सौर्यं बलक्षं पुच्छे। उत्सेधमेव तं कुरुते। तस्मादुत्सेधं भये प्रजा अभिसꣳश्रयन्ति (३), इति।

कुरुते धत्ते कुरुते पञ्च च।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टकेऽष्टमाध्याये त्रयोविंशोऽनुवाकः ॥ २३ ॥

---

बलक्षः श्वेताजस्तादृशं सूर्यदेवताकं पशुं पुच्छे नियुञ्जीत। उन्नतदेशवर्ति-

सूर्यदेवताकत्वेन तमश्वमुत्सेधमुन्नतदेशवर्तिनं करोति । यस्मादेवं तस्माल्लोकेऽपि कस्मिंश्चिद्भये प्राप्ते कंचिदुत्सेधमुन्नतपर्वतादिप्रदेशं प्रजा आश्रयन्ति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डेऽष्टमप्रपाठके त्रयोविंशोऽनुवाकः ॥ २३ ॥

---

सांग्रहण्या चतुष्टय्यो यो वै यः पितुश्चत्वारो यथा निक्तं प्रजापतये त्वा यथा प्रोक्षितं विभूराह प्रजापतिरकामयताश्वमेधेनं प्रजापतिर्न किंचन सावित्रमा ब्रह्मन्प्रजापतिर्देवेभ्यः प्रजापती रक्षाꣳसि प्रजापतिमीप्सति विभूरश्वनामान्यम्भाꣳस्येकयूपो राज्जुदालमेकविꣳशो देवाः पुरुषस्त्रयोविꣳशतिः ।

सांग्रहण्या तस्मादश्वमेधयाजी यत्परिमिता यद्यज्ञमुखे यो दीक्षां देवानेव तैस्त्रय इमे लोकाः सितायं प्राणापानावेवास्मिंस्तस्माद्राजन्य एकनवतिः ।

हरिः ॐ ।

**इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टकेऽष्टमः प्रपाठकः समाप्तः ॥ ८ ॥**

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्वीरबुक्कणसाम्राज्यधुरंधरश्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्येऽष्टमः प्रपाठकः समाप्तः ॥ ८ ॥

# अथ नवमप्रपाठकस्याऽऽरम्भः ।

तत्र प्रथमोऽनुवाकः ।

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
त्रिरात्रस्याश्वमेधस्य यदहः प्रथमं भवेत् ।
प्रपाठकेऽष्टमे तद्धि साकल्येन प्रपञ्चितम् ॥ २ ॥
नवमेऽहर्द्वयं तत्र मध्यमेऽहन्युपाकृते ।
अश्वेऽथ रोहितादीनामालम्भाद्यभिधीयते ॥ ३ ॥

तत्र प्रथमेऽनुवाकेऽष्टादशिनामालम्भोऽभिधीयते । तदेतद्विधत्ते—

हरिः ॐ ।

प्रजापतिरश्वमेधमसृजत । सोऽस्मात्सृष्टोऽपाक्रामत् । तमष्टादशिभिरनुप्रायुङ्क्त । तमाप्नोत् । तमाप्त्वाऽष्टादशिभिरवारुन्ध । यदष्टादशिन आलभ्यन्ते । यज्ञमेव तैराप्त्वा यजमानोऽवरुन्धे, इति ।

प्रजापतिना सृष्टोऽश्वमेधयागाभिमानी देवः केनापि निमित्तेनास्मात्प्रजापतेरपाक्रामदपागच्छत् । तदा तमश्वमेधमनुलक्ष्याष्टादशिभिरष्टादशसंख्यायुक्तैः 'रोहितो धूम्ररोहितः' इत्यादिभिराम्नातैः पशुभिः प्रायुङ्क्त । एकैकस्मिन्ननुवाकेऽष्टादशसंख्याका ये पशव आम्नातास्तेऽष्टादशिनः । तेषामग्नौ प्रक्षेपलक्षणं प्रयोगं कृतवान् । तेन प्रयोगेण तमश्वमेधं प्राप्य तैरेव पशुभिः स्वाधीनं कृतवान् । तस्मादष्टादशिनो रोहितो धूम्ररोहित इत्यादिभिरनुवाकैरुक्ताः प्रत्यनुवाकमष्टादशसंख्यां मिलित्वाऽशीत्यधिकशतसंख्याकाः पशव आलब्धव्याः । तैः पशुभिर्यज्ञं प्राप्य स्वाधीनं करोति ।

पशुगतामष्टादशसंख्यां प्रशंसति—

संवत्सरस्य वा एषा प्रतिमा । यदष्टादशिनः । द्वादश मासाः पञ्चर्तवः (१) । संवत्सरोऽ-

---

१ क अश्वेन ।

द्वादश। यदष्टादशिन आलभ्यन्ते। संवत्स-
रमेव तैराप्त्वा यजमानोऽवरुन्धे, इति।

य एते संख्ययाऽष्टादशिनः पशवस्त एते संवत्सरस्य प्रतिमा। संवत्सरमास-र्तुद्वारा संवत्सरेऽप्यष्टादशसंख्या विद्यते। अतः संख्यासाम्यात्तैः पशुभिः संवत्सरं प्राप्य स्वाधीनं करोति।

तेषामुपाकरणाय यूपविशेषं विधत्ते—

अग्निष्ठेऽन्यान्पशूनुपाकरोति। इतरेषु
यूपेष्वष्टादशिनोऽजामित्वाय, इति।

अष्टादशव्यतिरिक्ता येऽन्ये पशव आदिष्टदेशरहितास्तान्सर्वानग्निष्ठे बद्ध्वो-पाकुर्यात्। अत एव सूत्रकारेणोक्तम्—"अश्वतूपरगोमृगानग्निष्ठ उपाकरोति येषां चानादिष्टो देशः" इति। अष्टादशिनस्तु पशूनग्निष्ठव्यतिरिक्तेषु यूपेषूपा-कुर्यात्। एवं सति सर्वेषां पशूनामेकविधत्वाभावादालस्यं न भवति।

इतरयूपेष्वष्टादशिनामुपाकरणे विभज्य संख्यां विधत्ते—

नव नवाऽऽलभ्यन्ते सवीर्यत्वाय, इति।

एकैकस्मिन्यूपे नव नव पशवो बद्ध्वोपाकर्तव्याः। रोहितो धूम्र इत्यादिषु दश-स्वनुवाकेष्वाम्नातानां प्रत्यनुवाकमष्टादशानां पशूनां विभज्य द्वयोर्यूपयोर्बन्धने सति विंशतिसंख्याकेषु यूपेषु सर्वे पशवो बध्यन्ते। तथा सति यजमानः सवीर्यो भवति।

अथ यूपान्तरालेषु धारिता आरण्या ये पशवस्तेषां पशूनां समाप्तिपर्यन्तं प्रयोगं निन्दामुखेन निषेधति—

यदारण्यैः सꣳस्थापयेत्। व्यवस्येतां पितापुत्रौ।
व्यध्वानः क्रामेयुः। विदूरं ग्रामयोर्ग्रामान्तौ
स्याताम् (२)। ऋक्षीकाः पुरुषव्याघ्राः परिमोषिण
आव्याधिनीस्तस्करा अरण्येष्वाजायेरन्, इति।

"इन्द्राय राज्ञे सूकरः" इत्याद्यनुवाकेषूक्ता आरण्याः पशवो यूपान्तरालेषु

धारयित्वोपाकृताः । तैः पशुभिर्यद्यन्यपशुवत्पाशुकं प्रयोगं समापयेत्तदानीमेते दोषाः प्रसज्येरन् । तदेवोदाह्रियन्ते—पितापुत्रौ परस्परं व्यवस्येतां विरुद्धाध्यवसायौ कलहकारिणौ भवेताम् । अध्वानश्च विक्रामेयुः । अध्वशब्देन मार्गे गच्छन्तो जना उपलक्ष्यन्ते । ते च परस्परं विरुद्धं क्रमेयुः परस्परबाधकाः स्युः । आरण्यपशूनां तथाविधत्वात् । किंच ग्रामान्तौ ग्रामयोः सीमानौ तयोर्ग्रामयोर्विदूरं यथा भवति तथा स्याताम् । ग्रामसीम्नोरत्यन्तदूरत्वे सति मार्गमध्ये भयकारणं महारण्यमुत्पद्यत इत्यभिप्रायः । तथा सत्यारण्येषु ऋक्षीकादयः सर्वत उत्पद्येरन् । ऋक्षीका भल्लूकप्रभृतयो हिंसका मृगाः । व्याघ्रा इवातिक्रूराः पुरुषव्याघ्राः । मार्गचौराः परिमोषिणः । चोरप्रभूणां सेना आव्याधिन्यः । मायावित्वेनापहर्तारस्तस्कराः ।

एतेष्वारण्यपशुष्वाक्षेपवादिनां पूर्वपक्षिणां मतमुपन्यस्यति—

तदाहुः । अपशवो वा एते । यदारण्याः । यदारण्यैः सꣳस्थापयेत् । क्षिप्रे यजमानमरण्यं मृतꣳ हरेयुः । अरण्यायतना ह्यारण्याः पशव इति । यत्पशून्नाऽऽलभेत । अनवरुद्धा अस्य पशवः स्युः । यत्पर्यग्निकृतानुत्सृजेत् । (२) । यज्ञवेशसं कुर्यात्, इति ।

तत्रैष्वारण्यपशुष्वाक्षेपवादिन एवमाहुः । य एत आरण्यास्ते कर्मयोग्याः पशवो न भवन्ति । पशुकार्याभावात् । तथा हि किमेते पशवः समाप्तिपर्यन्तमनुष्ठेयाः किंवा तेषामालम्भ एव मा भूत् । अथवा प्रारब्धानां तेषां पर्यग्निकरणादूर्ध्वमुत्सर्ग इति विचारणीयम् । तत्र समाप्तिपर्यन्तं प्रयोगे क्षिप्रे स्वल्प एव काले मृतं यजमानं दाहार्थमरण्ये पुत्रादयो हरेयुः । आरण्यपशुवधस्याल्पायुष्ट्वहेतुत्वात् । यस्मादारण्यानां पशूनामारण्यमेवाऽऽयतनम् । अतो यजमानस्यापि तत्रैवाऽऽयतनं भवति । नापि द्वितीयः पक्षो युक्तः । आरण्यानामालम्भा[1]भावे यजमानेन पशवो न प्राप्येरन् । पर्यग्निकरणादूर्ध्वमुत्सर्गे तु पशुप्रयोगसमाप्त्यभावाद्यज्ञविघातं कुर्यात् ।

---

१ क. °मास्म्भ ।

अत्र समाधानवादिनां मतं दर्शयति—

यत्पशूनालभंते । तेनैव पशूनवंरुन्धे । यत्प-
र्यग्निकृतानुत्सृजत्ययंज्ञवैशसाय । अवंरुद्धा
अस्य पशवो भवन्ति । न यंज्ञवैशसं भंवति ।
न यजंमानमरंण्यं मृतꣳ हंरन्ति, इति ।

आरण्यान्पशूनालब्धुमुपाकरणं करोति तेनाऽऽलम्भदोषाभावात्पशुप्राप्तिर्भवति । उपाकृतेषु पर्यग्निकरणस्यानुष्ठितत्वान्न यज्ञवैशसं संपद्यते । तदेतद्दोषद्वयराहित्यमुपसंहर्तुं पुनरप्यवरुद्धा इत्यादिकमुच्यते । यत्तु यजमानस्य शीघ्रमरणमुक्तं तदपि न भविष्यति । आरण्यपशूनां वधाभावादित्यभिप्रेत्याऽऽह—न यजमानमरण्यं मृतꣳ हरन्तीति ।

अग्निष्ठयूपव्यतिरिक्तेषु यूपेषु नियुक्तानां रोहितो धूम्ररोहित इत्यनुवाकोक्तानामष्टादशिनां ग्राम्यपशूनां समाप्तिपर्यन्तं प्रयोगं विधत्ते—

ग्राम्यैः सꣳस्थांपयति । एते वै पशवः क्षेमो
नाम । सं पितापुत्रावंवस्यतः । समध्वानः
क्रामन्ति । समन्तिकं ग्रामंयोर्ग्रामान्तौ भंवतः ।
नर्क्षीकाः पुरुषव्याघ्राः परिमोषिणं आव्या-
धिनीस्तस्करा अरंण्येष्वाजायन्ते (४), इति ।

ऋतवंः स्यातामुत्सृजेत्स्यंतस्त्रीणि च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके नवमाध्याये
प्रथमोऽनुवाकः ॥ १ ॥

---

रोहितादिभिर्ग्राम्यैः पशुभिः प्रयोगं समापयेत् । एते ग्राम्याः पशवः क्षेम इत्येतन्नामार्हन्ति । तैः प्रजोपकारदर्शनात् । तस्मादारण्यपशुसंस्थापने पितृपुत्रविरोधादयो ये दोषाः पूर्वमुपन्यस्तास्तेऽत्र न भवन्ति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे नवमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

अथ द्वितीयोऽनुवाकः ।

———

प्रथमेऽनुवाके रोहितादीनां ग्राम्यपशूनां सूकरादीनामारण्यपशूनां च प्रयोगोऽभिहितः। द्वितीयेऽनुवाके चातुर्मास्यपशूनां प्रयोग उच्यते । तत्राऽऽदौ तावत्पूर्वोक्तानां ग्राम्याणामारण्यानां च पशूनां प्रशंसा क्रियते—

प्रजापतिरकामयतोभौ लोकाववरुन्धीयेति । स एतानुभयान्पशूनपश्यत् । ग्राम्या᳡श्चाऽऽरण्या᳡श्च । तानालभत । तैर्वै स उभौ लोकाववारुन्ध । ग्राम्यैरेव पशुभिरिमं लोकमवारुन्ध । आरण्यैरमुम् । यद्ग्राम्यान्पशूनालभते । इममेव तैर्लोकमवरुन्धे । यदारण्यान् (१)।अमुं तैः, इति ।

लोकद्वयप्राप्तिं कामयमानः प्रजापतिर्यथा द्विविधैः पशुभिः प्राप्तवान् । एवमन्योऽपि प्राप्नोति ।

अथ चातुर्मास्यपशून्विधत्ते—

अनवरुद्धो वा एतस्य संवत्सर इत्याहुः । य इत इतश्चातुर्मास्यानि संवत्सरं प्रयुङ्क्त इति । एतावान्वै संवत्सरः । यच्चातुर्मास्यानि । यदेते चातुर्मास्याः पशव आलभ्यन्ते । प्रत्यक्षमेव तैः संवत्सरं यजमानोऽवरुन्धे, इति ।

यो यजमानः संवत्सरादितश्चातुर्मास्यानि स्थापयित्वा संवत्सरं प्रयुङ्क्ते संवत्सरमध्येऽस्मिन्नश्वमेधकर्मणि चातुर्मास्यपशून्प्रवेश्य तान्यत्र क्वापि संवत्सराद्बहिरेवावस्थाप्य संवत्सरसाध्यमिदमश्वमेधाख्यं कर्मानुतिष्ठति । एतस्य यजमानस्य पशवोऽनवरुद्धा अप्राप्ता इत्येवमभिज्ञा आहुः । तत्रेयमुपपत्तिः—चातु-

मास्यानि, इति यदस्त्येतावानेव संवत्सरः । न हि चातुर्मास्यानुष्ठानपरिमिता-त्कालादन्यः संवत्सरो नामास्ति । तस्मादेते चातुर्मास्याः पशव आलब्धव्याः । चातुर्मास्येषु हि चत्वारि पर्वाणि विद्यन्ते वैश्वदेववरुणप्रघाससाकमेधशुनासिरीया-ख्यानि( णि ) । तत्संबन्धिनश्च पशवः सूत्रकारेणोदाहृताः—"कृष्णग्रीवा आग्नेयाः, बभ्रवः सौम्याः, उपध्वस्ताः सावित्राः, सारस्वत्यो वत्सतरीः, पौष्णाः श्यामाः, पृश्नयो मारुताः, बहुरूपा वैश्वदेवाः, वशा द्यावापृथिव्याः, इति । कृष्णग्रीवा इत्यादयस्त एते वैश्वदेवपर्वविषयाः पशवः । वैश्वदेवे हि पर्व-ण्याग्नेयमष्टाकपालं निर्वपति सौम्यं चरुमित्यादीनि यद्देवताकानि हवींष्याम्नातानि तद्देवताका एव कृष्णग्रीवाद्याः पशवः शाखान्तरोक्ताः सूत्रकारेणोदाहृताः । एवमितरपर्वसंबन्धिनोऽपि पशवः सूत्रे द्रष्टव्याः । एकैकस्य देवस्य त्रयः पशव इत्यभिप्रेत्य कृष्णग्रीवा इत्यादिबहुवचननिर्देशः । तैश्चातुर्मास्यपशुभिरेकस्मिन्नेव दिनेऽनुतिष्ठैतैरपि संवत्सरं प्रत्यक्षमेव संपूर्णमेव यजमानः प्राप्नोति ।

चातुर्मास्यपशून्विधायैकादशिनान्पशून्विधत्ते—

वि वा एष प्रजया पशुभिर्ऋध्यते । यः संव-त्सरं प्रयुङ्क्ते । संवत्सरः सुवर्गो लोकः ( २ ) । सुवर्गं तु लोकं नापराध्नोति । प्रजा वै पशव एकादशिनी । यदेत ऐकादशिनाः पशव आल-भ्यन्ते । साक्षादेव प्रजां पशून्यजमानोऽवरुन्धे, इति ।

यो यजमानश्चातुर्मास्यपशुभिः संवत्सरमनुतिष्ठत्येष यजमानः प्रजया पशुभि-र्व्यृध्यते वियुक्त एव भवति । अनुष्ठाने प्रवृत्तस्य प्रजाद्यर्थप्रयत्नाभावात् । स्वर्ग-लोकस्तु संवत्सरात्मक इति कृत्वा तं लोकं नापराध्नोति । अपराधस्तु तल्लोक-प्राप्त्यभावः सोऽस्य न भवति । तर्हि प्रजापशुप्राप्तेः क उपाय इति स उच्यते । येयं पश्वेकादशिनी सा प्रजापशुस्वरूपैव । तस्मादैकादशिनाः पशव आलब्धव्याः । ते च द्विप्रकाराः प्राकृता आश्वमेधिकाश्च । 'आग्नेयः कृष्णग्रीवः । सारस्वती मेषी' इत्याद्यनुवाकेनोक्ताः प्राकृताः । 'अग्नयेऽनीकवते रोहिताञ्जिरनड्वान्' इत्या-

ध्यनुवाकेनोक्ता आश्वमेधिकाः । अत एव सूत्रकार आह—' द्वयानैकादशिना-नालभन्ते प्राकृतानाश्वमेधिकांश्च ' इति । एतेषामालम्भनेन साक्षादेव कालविल-म्बमन्तरेणैव प्रजां पशून्यजमानः प्राप्नोति ।

ऐकादशिनान्पशून्विधाय दशिनः पशून्विधत्ते—

प्रजापतिर्विराजमसृजत । सा सृष्टाऽश्वमेधं
प्राविशत् । तां दशिभिरनु प्रायुङ्क्त ।
तामाप्नोत् । तामाप्त्वा दशिभिरवारुन्ध ।
यद्दशिन आलभ्यन्ते ( ३ ) । विराजमेव
तैराप्त्वा यजमानोऽवरुन्धे, इति ।

पुरा प्रजापतिर्विराजमन्नं सृष्टवान् । अन्नं वै विराडिति हि श्रुत्यन्तरम् । सा च सृष्टा विराट् प्रजापतेरपेता सती स्वात्मनो गोपनायाश्वमेधं प्राविशत् । तदा प्रजापतिस्तां विराजमनुलक्ष्य दशिनामकैः पशुभिरनुष्ठानं कृतवान् । ततस्तां विराजं प्राप्य तैरेव दशिभिस्तां स्वाधीनां कृतवान् । तस्माद्दशिनः पशव आल-व्धव्याः । ' इन्द्राय राज्ञे सूकरः ' इत्यादिष्वनुवाकेषूक्ता आरण्याः पशव एकैकस्मिन्ननुवाके दशसंख्याविशिष्टत्वेन दशिन इत्युच्यन्ते । तैर्दशभिरन्नं प्राप्य स्वाधीनं करोति ।

पशुवर्गसंख्यां विधत्ते—

एकादश दशत आलभ्यन्ते ।
एकादशाक्षरा त्रिष्टुप् । त्रैष्टुभाः
पशवः पशूनेवावरुन्धे, इति ।

दशानां पशूनां वर्गो दशच्छब्देनोच्यते । तादृशा वर्गा एकादशसंख्याकाः । ' इन्द्राय राज्ञे सूकरः ' इत्यारभ्य सुपर्णः पर्जन्य इत्यन्तेष्वेकादशस्वनुवाके-ष्वाम्नातत्वात् । अतो वर्गनिष्ठैकादशसंख्यया त्रिष्टुप्छन्दोद्वारा पशुप्राप्तिर्भवति । यद्यप्याद्यानुवाक एकादश पशव आम्नातास्तथाऽप्यन्येष्वनुवाकेषु दशानामे-वाऽऽम्नातत्वादहुनुरोधेन दशत इत्युक्तम् ।

एतेषु सर्वेषु पशुदेवताभेदं जातिभेदं वर्णादिरूपभेदं च क्रमेण प्रशंसति—

वैश्वदेवो वा अश्वः । नानादेवत्याः पशवो भवन्ति । अश्वस्य सर्वत्वाय । नानारूपा भवन्ति । तस्मान्नानारूपाः पशवः । बहुरूपा भवन्ति । तस्माद्बहुरूपाः पशवः समृद्ध्यै (४), इति ।

आरण्याल्लोँको दशिनं आलभ्यन्ते नानारूपाः पशवो द्वे च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके नवमाध्याये द्वितीयोऽनुवाकः ॥ २ ॥

---

विश्वे सर्वेऽपि देवा अस्याश्वस्य देवताः सोऽयं वैश्वदेवः । तच्च सर्वदेवतात्मकप्रजापतिरूपत्वादुपपन्नम् । अतोऽश्वस्य सर्वपश्वात्मकत्वात्पशवो नानादेवत्याः कार्याः । यद्देवत्योऽन्यः पशुरश्वस्यापि तद्देवत्यत्वात्तत्पश्वात्मकत्वमुपपन्नम् । 'इन्द्राय राज्ञे सूकरो वरुणाय राज्ञे कृष्णः' इत्यादौ वराहहरिणादिजातिभेदश्रवणान्नानारूपत्वम् । अत एवाद्यापि नानाजातिभेदभिन्नाः पशवो दृश्यन्ते । 'रोहितो धूम्ररोहितः' इत्यादौ वर्णभेदश्रवणाद्बहुरूपत्वम् । अत एव लोकेऽपि वर्णभेदभिन्नाः पशवो दृश्यन्ते ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे नवमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

अथ तृतीयोऽनुवाकः ।

---

द्वितीये चातुर्मास्यादिपशवोऽभिहिताः । तृतीये रोहितादीनां पशूनां वपाहोमैःसाहित्यमभिधीयते । तत्राऽऽदौ ग्राम्यारण्यपशून्बहुधा प्रशंसति—

अस्मै वै लोकाय ग्राम्याः पशव आलभ्यन्ते । अमुष्मा आरण्याः । यद्ग्राम्यान्पशूनालभते । इममेव तैर्लोकमवरुन्धे । यदारण्यान् । अमुं तैः । उभया-

न्पशूनालंभते । ग्राम्याश्श्चाऽऽरण्याश्श्च । उभयो-
र्लोकयोरवरुद्ध्यै । उभयान्पशूनालभते (१) ।
ग्राम्याश्श्चाऽऽरण्याश्श्च । उभयस्यान्नाद्यस्यावरु-
द्ध्यै । उभयान्पशूनालभते । ग्राम्याश्श्चाऽऽर-
ण्याश्श्च । उभयेषां पशूनामवरुद्ध्यै, इति ।

ग्राम्यारण्यपश्वालम्भनेन लोकद्वयजयो ग्राम्यारण्यान्नाद्यजयो ग्राम्यारण्यपशुजयश्च भवति ।

एकैकस्य देवस्याऽऽम्नातं पशुत्रित्वं प्रशंसति—

त्रयस्त्रयो भवन्ति । त्रय इमे लोकाः ।
एषां लोकानामाप्त्यै, इति ।

रोहितो धूम्ररोहितः कर्कन्धुरोहितस्ते प्राजापत्या इत्येकस्यैव त्रयः प्रजापतेः पशव आम्नाताः । तथा बभ्रुररुणबभ्रुः शुकबभ्रुस्ते रौद्रा इत्येकस्यैव रुद्रस्य त्रय आम्नाताः । एवमन्यदप्युदाहार्यम् ।

एकैकस्य बहुपशुत्वं प्रश्नोत्तराभ्यां प्रशंसति—

ब्रह्मवादिनो वदन्ति । तस्मात्सत्यात् (२) ।
अस्मिँल्लोके बहवः कामा इति । यत्संमा-
नीभ्यो देवताभ्योऽन्येऽन्ये पशव आलभ्यन्ते ।
अस्मिन्नेव तल्लोके कामान्दधाति । तस्मा-
दस्मिँल्लोके बहवः मा:, इति ।

लोके ह्येकैकस्यैव पुरुषस्य पुत्रपशुधनादिविषया बहवः कामा दृश्यन्ते । तत्कस्मात्कारणादिति ब्रह्मवादिनां प्रश्नः । यस्मादत्रैकैकस्यै देवतायै बहवः पशव आलब्धास्तच्च बहुकामसाधनम् । तस्मादेकैकस्य बहवः कामा लोके भवन्ति ।

वपानां होमसाहित्यं विधत्ते—

त्रयाणां त्रयाणाᳪं सह वपा जुहोति । त्र्यावृतो वै देवाः । त्र्यावृत इमे लोकाः । एषां लोकानामाप्त्यै । एषां लोकानां क्लृप्त्यै, इति ।

एकस्य प्रजापते रोहितादयः पशवस्तेषां त्रयाणां वपा युगपद्धोतव्याः । एवमेकैकदेवताकेषु रौद्रादिषु सर्वेषु पशुषु द्रष्टव्यम् । विधिः पशुभिः संबद्धत्वादेकैको देवस्त्रिविधः । लोकाश्च भूरादयस्त्रिविधाः । अतो लोकत्रयप्राप्त्यै वपात्रयस्य सह होमः ।

ग्राम्यपशूनामिवाऽऽरण्यानामपि वपाहोमप्रसक्तिं वारयितुं तेषां परित्यागं विधत्ते—

पर्यग्निकृतानारण्यानुत्सृजन्त्य-
हिᳪंसायै, ( ३ ) इति ।

उभयान्पशूनालभते सत्यादहिᳪंसायै ।

**इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके नवमाध्याये तृतीयोऽनुवाकः ॥ ३ ॥**

===

पर्यग्निकरणपर्यन्तान्संस्कारान्कृत्वा तानारण्यान्पशून्परित्यजेत् । स च परित्यागो हिंसाराहित्याय संपद्यते ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये ततीयकाण्डे नवमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

अथ चतुर्थोऽनुवाकः ।

---

तृतीयेऽनुवाक एकदेवत्यानां पशूनां युगपद्वपाहोमोऽभिहितः । चतुर्थेऽश्वस्य रथयोजनालंकारादयो विधीयन्ते । यदुक्तं सूत्रकारेण—“ युञ्जन्ति ब्रध्नमिति दक्षिणयुगधुर्ये तमश्वं युनक्ति” इति । सोऽयं मन्त्रः सप्तमकाण्ड एवमाम्नातः—

" युञ्जन्ति ब्रध्नमरुषं चरन्तं परितस्थुषः । रोचन्ते रोचना दिवि " इति । तत्र पूर्वार्धभागं व्याचष्टे---

युञ्जन्ति ब्रध्नमित्याह । असौ वा आदित्यो ब्रध्नः । आदित्यमेवास्मै युनक्ति । अरुषमित्याह । अग्निर्वा अरुषः । अग्निमेवास्मै युनक्ति । चरन्तमित्याह । वायुर्वै चरन् । वायुमेवास्मै युनक्ति । परितस्थुष इत्याह (१) । इमे वै लोकाः परितस्थुषः । इमानेवास्मै लोकान्युनक्ति, इति ।

स्वप्रकाशेन जगत्युपबृंहणादादित्यो ब्रध्न इत्युच्यते । यागपरेषु रोषराहित्यादग्निररुषः । सर्वदा चरणस्वभावत्वाद्वायुश्चरन् । परितोऽवस्थानात्पृथिव्यादयस्त्रयो लोकाः परितस्थिवांसः । आदित्यादित्रयेणायमश्वः स्तूयते । तादृशमश्वं रथयुगस्य दक्षिणभागे देवा ऋत्विजो वा युञ्जन्ति ।

उत्तरार्धं व्याचष्टे---

रोचन्ते रोचना दिवीत्याह । नक्षत्राणि वै रोचना दिवि । नक्षत्राण्येवास्मै रोचयति, इति ।

दीप्तियुक्तानि नक्षत्राणि रोचना इत्युच्यन्ते । ताश्च रोचना दिवि दीप्यन्ते । अनेनार्धद्वयकथनेन यजमानायाऽऽदित्यादयो रथे योजिता भवन्ति । नक्षत्राणि चैतदर्थं दीपयन्ति ।

यदुक्तं सूत्रकारेण-'युञ्जन्त्यस्य काम्येति प्रष्टी ' इति । तस्याश्वस्य पार्श्ववर्तिनावश्वौ प्रष्टी इत्युच्यते । युञ्जन्तीत्यनुवर्तते । मन्त्रस्तु तत्काण्ड एवं पठ्यते- " युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे । शोणा धृष्णू नृवाहसा" इति। तत्र प्रथमपादस्य तात्पर्यं दर्शयति ।

युञ्जन्त्यस्य काम्येत्याह । कामानेवास्मै युनक्ति, इति ।

अस्य यजमानस्य रथे काम्या कामप्रदानसमर्थावश्वौ देवा युञ्जन्ति । अनेन मन्त्रपाठेन यजमा[१]नार्थं कामानेव संपादयति ।

---

१ क. 'मानस्य का' ।

द्वितीयपादस्य तात्पर्यं दर्शयति—

हरी विपक्षसेत्याह। इमे वै हरी विपक्षसा।
इमे एवास्मै युनक्ति (२), इति।

विपक्षसा तस्य प्रधानस्याश्वस्य विविधपार्श्ववर्तिनौ हरी द्वावश्वौ युञ्जन्तीत्यन्वयः। इमे द्यावापृथिव्यावेव पार्श्ववर्तिनौ तावश्वौ। अतस्तयोर्योगेन द्यावापृथिव्यावेव युनक्ति।

तृतीयपादस्य तात्पर्यं दर्शयति—

शोणा धृष्णू नृवाहसेत्याह। अहोरात्रे वै
नृवाहसा। अहोरात्रे एवास्मै युनक्ति, इति।

शोणवर्णौ धाष्टर्ययुक्तौ मनुष्यवाहकाविति मन्त्रो ब्रूते। तत्राहोरात्रे एव मनुष्याणां निर्वाहके। अतस्ते एवाश्वरूपेण युनक्ति।

उक्तमन्त्रद्वयतात्पर्यं संगृह्य दर्शयति—

एता एवास्मै देवता युनक्ति।
सुवर्गस्य लोकस्य समष्ट्यै, इति।

आदित्यं ब्रध्नशब्दवाच्यमारभ्याहोरात्रपर्यन्ता या देवता उक्ता एताः सर्वा एवास्मै यजमानार्थं रथे युनक्ति।

रथे ध्वजस्थापनं विधत्ते—

केतुं कृण्वन्नकेतव इति ध्वजं प्रतिमु-
ञ्चति। यश एवैनꣳ राज्ञां गमयति, इति।

सप्तमकाण्डोक्तस्य मन्त्रस्य केतुमित्यादिकं प्रतीकम्। मन्त्रस्य पाठार्थौ तु तत्रैव द्रष्टव्यौ। अनेन ध्वजस्थापनेन सर्वेषां राज्ञां मध्य एनमेव राजानं यशः प्रापयति।

यदुक्तं सूत्रकारेण—'जीमूतस्येति कवचमध्यूहते, धन्वनाऽगा इति धनुरा-

दत्ते " इत्यादि च । तत्र चतुर्थकाण्डे समाम्नातस्य जीमूतस्येत्यनुवाकस्य स्पष्टार्थतां दर्शयति-

जीमूतस्येव भवति प्रतीकमि-
त्याह । यथा यजुरेवैतत्, इति ।

तस्मिन्यजुषि मन्त्रेऽनाविद्धया तनुवा जयेति विजयः प्रतीयते स च तथैव भवति ।

रथमारुह्योत्तरस्यां दिशि यजमाने जलसमीपं गते सति तत्राध्वर्युणा सप्तमकाण्डोक्तमन्त्रवाचनं विधत्ते-

ये ते पन्थानः सवितः पूर्व्यास इत्यध्वर्यु-
र्यजमानं वाचयत्यभिजित्यै (३), इति ।

तदेतद्वाचनं यजमानस्य जयाय भवति ।

यदुक्तं सूत्रकारेण-" अपोऽश्वमवघ्राप्य यद्वातो अपो अगमदिति प्रदक्षिणमावर्तते " इति । तत्र यद्वात इति मन्त्रगतस्योत्तरार्धस्येमꣳ स्तोतरित्यादेस्तात्पर्यं दर्शयति-

परा वा एतस्य यज्ञ एति । यस्य पशुरुपाकृ-
तोऽन्यत्र वेद्या एति । एतꣳ स्तोतरेतेन पथा
पुनरश्वमावर्तयासि न इत्याह । वायुर्वै स्तोता ।
वायुमेवास्य परस्ताद्दधात्यावृत्त्यै, इति ।

यस्य यजमानस्योपाकरणसंस्कृतः पशुर्वेद्या अन्यत्र गच्छत्येतस्य यजमानस्य यज्ञः परैति विनश्यति । अतो विनाशाभावार्थमेतमित्यादिमन्त्रार्धं पठेत् । हे स्तोतर्वायो नोऽस्मदीयमेतमश्वमेतेन यथा वेदिमार्गेण पुनरप्यावर्तय । अस्मिन्मन्त्रे स्तोतृशब्देन वायुर्विवक्षितः । वायुर्हि ताल्वादिवर्णस्थानाभिघातेन स्तोत्रमुत्पादयति । तमेव वायुमस्याश्वस्य पृष्ठभागे स्थापयति । तच्चाश्वस्याऽऽवर्तनाय संपद्यते ।

अथ तस्याश्वस्य रथयोजनात्पूर्वं मणिभिः शृङ्गारं विधत्ते-

यथा वै हविषो गृहीतस्य स्कन्दति । एवं वा

एतदश्वस्य स्कन्दति । यदस्योपाकृतस्य लोमानि शीर्यन्ते । यद्वालेषु काचानावयन्ति । लोमान्येवास्य तत्संभरन्ति (४), इति ।

यद्युपाकरणादिसंस्कृतस्याश्वस्य लोमानि भूमौ पतेयुस्तदानीं गृहीतस्य हविषः स्कन्दनं यथा तथैवाश्वस्य स्कन्दनं भवति । तन्निवारणार्थमश्वस्य लोमसु काचोपलक्षितान्सौवर्णराजतसामुद्रमणीनावयन्त्योतान्कुर्वन्ति । तेन पतितानि लोमानि पुनः संपादयति ।

तत्र सप्तमकाण्डोक्तव्याहृतित्रयरूपान्मन्त्रान्विधत्ते—

भूर्भुवः सुवरिति प्राजापत्याभिरावयन्ति । प्राजापत्यो वा अश्वः । स्वयैवैनं देवतया समर्धयन्ति, इति ।

प्रजापतिशरीरभूतलोकत्रयवाचित्वाद्व्याहृतयः प्राज्यापत्याः । अश्वश्च प्राजापत्यः । तस्मादेनमश्वं स्वकीयदेवतया समृद्धं करोति ।

व्याहृतित्रयं पत्नीभेदेन व्यवस्थापयति—

भूरिति महिषी । भुव इति वावाता । सुवरिति परिवृक्ती । एषां लोकानामभिजित्यै, इति ।

राज्ञः पत्न्य उत्तममध्यमाधमा महिष्यादिशब्दैरुच्यन्ते । तत्र व्याहृतयो व्यवस्थिताः । तथा च सूत्रकार आह—" भूरिति सौवर्णान्महिषी प्राग्वहात्, भुव इति राजतान्वावाता प्रत्यग्वहात्प्राक्श्रोणेः, सुवरिति सामुद्रान्परिवृक्ती प्रत्यक्श्रोणेः, बालेषु कुमार्यः शङ्खमणीनुपग्रथन्ति " इति । तदेतन्महिष्यादिभिस्तिसृभिर्मणिग्रथनं लोकानां जयाय भवति ।

तत्र महिष्या ग्रथनीयानां मणीनां कारणद्रव्यं विधत्ते—

हिरण्ययाः काचा भवन्ति । ज्योतिर्वै हिरण्यम् । राष्ट्रमश्वमेधः (५) । ज्योति-

श्रियैवास्मै राष्ट्रं च सधीचीं दधाति, इति।

काचा मणयो हिरण्मयाः सुवर्णेन निर्मातव्याः। हिरण्यस्य ज्योतिष्ट्वादश्वमेधस्य राष्ट्रप्रदत्वेन तद्रूपत्वादुभयमप्यस्यानुकूलं संपादयति।

मणिसंख्यां विधत्ते—

सहस्रं भवन्ति। सहस्रसंमितः सुवर्गो लोकः। सुवर्गस्य लोकस्याभिजित्यै, इति।

स्वर्गस्थानां भोग्यद्रव्याणां बहुमूल्यार्हत्वात्स्वर्गस्य सहस्रतुल्यत्वम्।

यदुक्तं सूत्रकारेण—"अथास्य स्ववेशानाज्येनाभ्यञ्जन्ति। वसवस्त्वाऽञ्जन्तु गायत्रेण छन्दसेति गौल्गुलस्तम्बेन, महिषी रुद्रा इति काशस्तम्बेन वावाता, आदित्यास्त्वा इति मौञ्जस्तम्बेन परिवृक्ती" इति। तदिदं विधत्ते—

अप वा एतस्मात्तेज इन्द्रियं पशवः श्रीः क्रामन्ति। योऽश्वमेधेन यजते। वसवस्त्वाऽञ्जन्तु गायत्रेण छन्दसेति महिष्यभ्यनक्ति। तेजो वा आज्यम्। तेजो गायत्री। तेजसैवास्मै तेजोऽवरुन्धे (६)। रुद्रास्त्वाऽञ्जन्तु त्रैष्टुभेन छन्दसेति वावाता। तेजो वा आज्यम्। इन्द्रियं त्रिष्टुप्। तेजसैवास्मा इन्द्रियमवरुन्धे। आदित्यास्त्वाऽञ्जन्तु जागतेन छन्दसेति परिवृक्ती। तेजो वा आज्यम्। पशवो जगती। तेजसैवास्मै पशूनवरुन्धे, इति।

तेजः शरीरकान्तिः। इन्द्रियं चक्षुरादिपाटवम्। पशवो गवाश्वादयः। श्रीर्धनादिसमृद्धिः। अश्वमेधयाजिनो बहुद्रव्यव्ययेन शरीरप्रयासेन च तेज-

---

१ क. °श्वर°।

आदिकमपगच्छति। अतस्तत्समाधानाय वसवस्त्वेत्यादिभिर्मन्त्रैर्महिष्यादयोऽभ्यञ्जनं कुर्युः। तत्र गौल्गुलाद्याज्यस्य तेजोरूपत्वान्मन्त्रोक्तानां गायत्रीत्रिष्टुब्जगतीच्छन्दसां क्रमेण तेजइन्द्रियपशुहेतुत्वात्सर्वमनेन प्राप्तं भवति।

अथाभ्यञ्जनस्य पत्नीकर्तृकत्वं प्रशंसति—

पत्नयोऽभ्यञ्जन्ति। श्रिया वा एतद्रूपम् (७)।
यत्पत्नयः। श्रियमेवास्मिन्तद्दधति। नास्मा-
त्तेज इन्द्रियं पशवः श्रीरपक्रामन्ति, इति।

यत्पत्नीबहुत्वं श्रियाः स्वरूपम्। धनवान्हि बह्वीः पत्नीरुद्वहति। अतः श्रीस्वरूपाः पत्न्योऽश्वमभ्यञ्जन्त्यस्तेनाभ्यञ्जनेन यजमाने श्रियमेव संपादयन्ति। अतोऽस्मात्तेजआदयो नापक्रामन्ति।

उक्तक्रमेणालंकृतेष्वश्वेष्ववगाहनं कृत्वा समागतेष्वनन्तरं मुख्यायाश्वाय पूर्वं प्रजापतित्वेन निहितानामन्नशेषाणामुपहरणं विधत्ते—

लाजी३ञ्छाची३न्यशोममाँ३ इत्यतिरिक्तमन्न-
मश्वायोपाहरन्ति। प्रजामेवान्नादीं कुर्वते, इति।

उपलालनपूर्वकमश्वसंबोधनार्थं लाज्यादिशब्दजातम्। हे लाजिन्, लाजोपलक्षितान्नवन्, हे शाचिञ्छक्तिमन्, हे यशोमन्यशसः संपादक, इत्यादिमन्त्रेणान्नहोमे त्ववशिष्टमन्नमानीयाश्वाय समर्पयेयुः। तेन स्वकीयां प्रजामन्नादनयुक्तां कुर्वन्ति।

अस्मिन्मत्र उत्तरभागस्य तात्पर्यं दर्शयति—

एतद्देवा अन्नमत्तैतदन्नमद्धि प्रजापत
इत्याह। प्रजायामेवान्नाद्यं दधते, इति।

हे देवा अश्वे प्रविश्य तदेतदन्नं भक्षयत। हे प्रजापते विशेषतस्तदन्नमद्धि। अनेन मन्त्रपाठेन पुत्रादिरूपायां प्रजायामेवान्नाद्यं संपादयन्ति।

अथ पञ्चमकाण्डोक्तं मन्त्रमेतदन्नावघ्राणे विनियुङ्क्ते—

यदि नावजिघ्रेत्। अग्निः पशुरासीदि-

१ क. 'त्वात्तैस्ते प्राप्ता भवन्ति। अ' २ क. 'श्वेषु रथवहनं।

त्यर्वघ्रापयेत् । अर्वं हैव जिंघ्रति, इति ।

स्वयमेवावाजिघ्रति चेत्तदा नायं मन्त्रः प्रयोक्तव्यः । अन्यथाऽनेन मन्त्रेणावघ्रापयेत् । ततः स्वयमेवाऽऽघ्राणं कृतं भवति ।

अथ सप्तमकाण्डगतमन्त्रेण पञ्चमकाण्डगतमन्त्राभ्यां चानुमन्त्रणं विधत्ते—

आक्रान्वाजी क्रमैरत्यंक्रमीद्वाजी द्यौस्ते पृष्ठं पृंथिवी सधस्थमित्यश्वमनुमन्त्रयते । एषां लोकानामभिजित्यै, इति ।

मन्त्रत्रयेण लोकत्रयजयो भवति ।

पञ्चमकाण्डोक्तमनुवाकं प्रयाजयाज्यारूपेण विनियुङ्क्ते—

समिद्धो अञ्जन्कृदंरं मतीनामित्यश्वस्याऽऽप्रियो भवन्ति सरूपत्वाय (८), इति ।

परितस्थुष इत्याहेमे एवास्मै युनक्त्यभिजित्यै भरन्त्यश्वमेधो रुन्धे रूपं जिंघ्रति त्रीणि च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके नवमाध्याये चतुर्थोऽनुवाकः ॥ ४ ॥

---

आ समन्तात्प्रीतिहेतव आप्रियः । तेषु मन्त्रेषु देवानां वक्षि प्रियमित्युच्यते । अश्वश्च तथा करोति । अतो मन्त्राणां सरूपत्वम् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे नवमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

अथ पञ्चमोऽनुवाकः ।

---

चतुर्थे रथयोजनाश्वालंकारावुक्तौ । पञ्चमे ब्रह्मोद्यनामको(के) होतृब्रह्मणोरुत्तरकथितप्रश्नोत्तररूपाः संवादा उच्यन्ते । यदुक्तं सूत्रकारेण—“ उत्तरौ महिमानपरिवप्यौ हुत्वा चात्वाले मार्जयित्वाऽभितोऽग्निष्टं ब्रह्मोद्याय पर्युपविशतो दक्षिणतो ब्रह्मोत्तरतो होता किंस्विदासीत्पूर्वचित्तिरित्येतस्यानुवाकस्य पृष्टानि होतुः प्रति-

ज्ञातानि ब्रह्मणः” इति । पृष्ठानि प्रश्नवाक्यानि प्रतिज्ञातान्युत्तरवाक्यानि(णि) । तदिदं ब्रह्मोद्यं विधत्ते—

तेजसा वा एष ब्रह्मवर्चसेन व्यृध्यते । योऽश्वमेधेन यजते । होता च ब्रह्मा च ब्रह्मोद्यं वदतः । तेजसा चैवैनं ब्रह्मवर्चसेन च समर्धयतः, इति ।

अश्वमेधयाजिनः शरीरप्रयासेन तेजोव्यृद्धिः । मन्त्रवैकल्यसंभवाद्ब्रह्मवर्चसव्यृद्धिः । तदुभयपरिहाय होतृब्रह्माणौ ब्रह्मोद्यं ब्रूयाताम् । जगत्स्थितिहेतोः परब्रह्मणो विषये संवादो ब्रह्मोद्यम् । तेन यजमानस्य तेजोब्रह्मवर्चससमृद्धिर्भवति ।

अग्निष्ठस्य यूपस्य दक्षिणभागे ब्रह्मण उपवेशनं विधत्ते—

दक्षिणतो ब्रह्मा भवति । दक्षिणतआयतनो वै ब्रह्मा । बार्हस्पत्यो वै ब्रह्मा । ब्रह्मवर्चसमेवास्य दक्षिणतो दधाति । तस्माद्दक्षिणोऽर्धो ब्रह्मवर्चसितरः, इति ।

आहवनीयस्य दक्षिणभागो ब्रह्मणः प्रतिनियतं स्थानम् । अतोऽत्रापि दक्षिणभाग उपविशेत् । बृहस्पतिदेवताकश्चायं ब्रह्मा । अतोऽयं यजमानस्य दक्षिणभागे ब्रह्मवर्चसं संपादयति । यस्मात्तत्संपत्तिस्तस्माद्दक्षिणभागोऽतिशयेन ब्रह्मवर्चसयुक्तो दृश्यते । दक्षिणहस्तेन हि होमपूजादिकं क्रियते ।

होतुर्यूपस्योत्तरभाग उपवेशनं विधत्ते—

उत्तरतो होता भवति (१) । उत्तरतआयातनो वै होता । आग्नेयो वै होता । तेजो वा अग्निः । तेज एवास्योत्तरतो दधाति । तस्मादुत्तरोऽर्धस्तेजस्वितरः, इति ।

---

१-क. 'भाते ब्रह्म°' ।

सामिधेन्यनुवचनादौ वेद्या उत्तरश्रोणिर्होतुर्नियतं स्थानम् । अतोऽत्रापि यूपस्योत्तरभाग उपविशेत् । दैविकेष्वृत्विक्षु होतृत्वमग्नेराम्नातम्--"अग्निर्होता अश्विनाऽध्वर्यू" इति । तत्संबन्धादयं मानुषो होताऽऽग्नेयः । अतोऽस्य यजमानस्योत्तरभागे तेजः संपादयति । यस्मादेवं तस्मात्केषुचित्पुरुषेषूत्तरोऽर्धो वामभागः शक्तिमत्तरः ।

दक्षिणोत्तरदेशौ द्वयोर्विहितौ । कस्य दक्षिणोत्तरावित्याकाङ्क्षितत्वादग्निष्ठं यूपं तत्प्रतियोगित्वेन विधत्ते--

यूपमभितो वदतः । यजमानदेवत्यो वै यूपः । यजमानमेव तेजसा च ब्रह्मवर्चसेन च समर्धयतः, इति ।

यजमानवद्यूपस्य पशुप्रयोगनिर्वाहकत्वाद्यजमानदेवत्यत्वम् । तस्य पार्श्वयोः स्थित्वा ब्रह्मवदने सति यजमानमेव तेजोब्रह्मवर्चसाभ्यां समृद्धं कुरुतः ।

तत्रोत्तरतोऽवस्थितो होता 'किंस्वित्' इत्यादीनि प्रश्नवाक्यानि पठति । दक्षिणतोऽवस्थितो ब्रह्मा 'द्यौरासीत्' इत्याद्युत्तरवाक्यानि(णि) पठति । तत्र प्रश्नवाक्यानि यथासमाम्नातमनूद्य तद्व्याख्यानव्याजेनोत्तरवाक्यानां(णां) तात्पर्यं प्रदर्श्यते । तत्र प्रथमप्रश्नवाक्यं दर्शयति--

किँस्विदासीत्पूर्वचित्तिरित्याह । द्यौर्वै वृष्टिः पूर्वचित्तिः (२) । दिवमेव वृष्टिमवरुन्धे, इति ।

पूर्वचित्तिः प्रथमतश्चेतयमाना किं नामाऽऽसीदिति प्रश्नः । या वृष्टिकारणभूता द्यौः सैव प्रथमतश्चेतयमाना । प्रथमतो वृष्टौ सत्यां पश्चादोषधिद्वारा सर्वे प्राणिनो जीवन्ति । एताभ्यां प्रश्नोत्तराभ्यां वृष्टिहेतुं दिवमेव प्राप्नोति वृष्टिं लभत इत्यर्थः ।

द्वितीयं वाक्यं दर्शयति--

किँस्विदासीद्बृहद्वय इत्याह । अश्वो वै बृहद्वयः । अश्वमेवावरुन्धे, इति ।

युद्धे जयद्वारा वीरजीवनहेतुत्वादश्वो बृहद्वयः ।

---

१ क. °श निर°।

तृतीयं दर्शयति—

किꣳस्विदासीत्पिशङ्गिलेत्याह । रात्रिर्वै पिशङ्गिला । रात्रिमेवावरुन्धे, इति ।

अतिशयेन रूपवती पिशङ्गिला रात्रिश्च तादृशी चन्द्रिकया नक्षत्रैश्च रूपवत्त्वप्रतिभासात् ।

चतुर्थं दर्शयति—

किꣳस्विदासीत्पिलिप्पिलेत्याह । श्रीर्वै पिलिप्पिला । अन्नाद्यमेवावरुन्धे (३), इति ।

प्रजासमूहनिमित्तस्य ध्वनिविशेषस्य पिलिप्पिलेत्यनुकरणम् । श्रीश्च तथाविधध्वनियुक्ता । यस्मिन्गृहे धनसमृद्धिस्तत्र जनबाहुल्यान्निरन्तरं तथाविधः शब्दो भवति ।

पञ्चमं दर्शयति—

कःस्विदेकाकी चरतीत्याह । असौ वा आदित्य एकाकी चरति । तेज एवावरुन्धे, इति ।

आदित्यस्य हि सहायनैरपेक्ष्येण जगद्भ्रमणं प्रसिद्धम् ।

षष्ठं दर्शयति—

क उ स्विज्जायते पुनरित्याह । चन्द्रमा वै जायते पुनः । आयुरेवावरुन्धे, इति ।

कृष्णपक्षे क्षीणश्चन्द्रः शुक्लपक्षे पुनर्जायत इति हि प्रसिद्धम् ।

सप्तमं दर्शयति—

किꣳस्विद्धिमस्य भेषजमित्याह । अग्निर्वै हिमस्य भेषजम् । ब्रह्मवर्चसमेवावरुन्धे, इति ।

अग्निसेवया हि शैत्योपद्रवो निवर्त्यते ।

अष्टमं दर्शयति--

किꣳस्विदावपनं महदित्याह ( ४ )। अयं वै लोक आवपनं महत्। अस्मिन्नेव लोके प्रतितिष्ठति, इति।

व्रीह्यादिबीजानां सर्वत आवापस्थानं भूमिः।

नवमं दर्शयति--

पृच्छामि त्वा परमं तं पृथिव्या इत्याह। वेदिर्वै परोऽन्तः पृथिव्याः। वेदिमेवावरुन्धे, इति।

यागसंबन्धिनी या वेदिः सा पृथिव्या उत्कृष्टप्रदेशः। न हि ततोऽन्य उत्कृष्टदेशः कश्चिद्विद्यते।

दशमं दर्शयति--

पृच्छामि त्वा भुवनस्य नाभिमित्याह। यज्ञो वै भुवनस्य नाभिः। यज्ञमेवावरुन्धे, इति।

यथा शरीरस्य नाभिर्मध्यप्रदेशस्तथा यज्ञः सर्वस्य लोकस्य मध्यस्थानीयः। कर्माधीनत्वात्सर्वजगद्व्यवहारस्य।

एकादशं दर्शयति--

पृच्छामि त्वा वृष्णो अश्वस्य रेत इत्याह। सोमो वै वृष्णो अश्वस्य रेतः। सोमपीथमेवावरुन्धे, इति।

वृष्णः सेक्तृत्वेन बलवतोऽश्वस्य संबन्धी सारभूतः पदार्थः सोमः। एवं सति ह्यश्वे त्रिरात्ररूपोऽश्वमेधाख्यः सोमयागो निष्पद्यते।

द्वादशं दर्शयति--

पृच्छामि वाचः परमं व्योमेत्याह। ब्रह्म वै वाचः परमं व्योम।

ब्रह्मवर्चसमेवावरुन्धे ( ५ ), इति ।

होता भवति वै वृष्टिः पूर्वचित्तिरन्नाद्यमेवावरुन्धे महदित्याह सोमो वै वृष्णो अश्वस्य रेतश्चत्वारि च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके नवमाध्याये पञ्चमोऽनुवाकः ॥ ५ ॥

---

जगत्कारणं ब्रह्मैव वाचो वेदरूपायाः परमं व्योम पर्यवसानभूमिः । 'सर्वे वेदा यत्पदमामनन्ति' इति श्रुतेः । तदेवं ब्रह्मकार्यभूतकृत्स्नजगद्व्यवहारविषयप्रश्नोत्तररूपाभ्यां होतृब्रह्मणोः संवादरूपं ब्रह्मोद्यं प्रसिद्धम् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे नवमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

अथ षष्ठोऽनुवाकः ।

---

पञ्चमे ब्रह्मोद्यमुक्तम् । षष्ठसप्तमयोर्मृताश्वोपचारोऽभिधीयते । तत्राऽऽदावश्वसंज्ञपनकालीनानुष्ठेयान्होमान्विधत्ते—

अप वा एतस्मात्प्राणाः क्रामन्ति ।
योऽश्वमेधेन यजते । प्राणाय स्वाहा
व्यानाय स्वाहेति संज्ञप्यमान आहु-
तीर्जुहोति । प्राणानेवास्मिन्दधाति ।
नास्मात्प्राणा अपक्रामन्ति, इति ।

अश्वमेधयाजिनोऽश्ववधदोषेणाऽऽयुःसमाप्तेः पूर्वमेवाकस्मात्प्राणा अपक्रामन्ति । अतस्तत्परिहाराय सप्तमकाण्डे चतुर्थप्रपाठके प्राणाय स्वाहेति योऽनुवाकस्तत्रत्यैर्मन्त्रैर्जुहुयात् । तेन यजमाने प्राणानवस्थापयति । ततोऽकाले प्राणा अस्मान्नापक्रामन्ति ।

यदुक्तं सूत्रकारेण—"अम्बे अम्बाल्यम्बिक इति प्रतिप्रस्थाता पत्नीरुदान-

यति ता दक्षिणान्केशपक्षानुद्ग्रथ्य सव्यान्प्रस्रस्य दक्षिणानूरूनाघ्नानाः समिन्द्धि-स्त्रिप्रदक्षिणमश्वमभिधन्वन्त्यः(त्यः)। परियन्त्यवन्ती स्थेति सव्यानुद्ग्रथ्य दक्षिणा-न्प्रस्रस्य सव्यानूरूनाघ्नाना अनभिधून्वन्त्य(त्य)स्त्रिः प्रतिपरियन्ति प्रदक्षिणमन्ततो यथा पुरस्तान्नवकृत्वः संपादयन्ति" इति । तत्रावन्ती स्थेति मन्त्रं पठित्वा तस्य तात्पर्यं दर्शयति—

अवन्ती स्थावन्तीस्त्वाऽवन्तु । प्रियं त्वा
प्रियाणाम् । वर्षिष्ठमाप्यानाम् । निधीनां
त्वा निधिपतिꣳ हवामहे वसो ममेत्याह ।
अपैवास्मैतद्ध्नुवते (१)। अथो ध्रुवन्त्येवै-
नम् । अथोऽन्यै वास्मै ह्नुवते, इति ।

हे राजपत्न्यो यूयमवन्ती स्थाश्वं रक्षयन्त्यः स्थ । हेऽश्व, अवन्तीः पाल-यित्र्यः पत्न्यस्त्वाऽवन्तु । *मम वसो वासयितस्तादृश हेऽश्व प्रियाणां वस्तूनां मध्येऽत्यन्तं प्रियं त्वां हवामहे वयं पत्न्य आह्वयामः । कीदृशं त्वामाप्यानामा-प्व्यानां वस्तूनां मध्ये वर्षिष्ठमतिशयेन प्रवृद्धम् । किंच निधिपतिं शङ्खपद्मा-दिनिधिविशेषाणां पालकम् । अथवा किमनेन विशेषणेन सर्वनिधीनां पालकं त्वामाह्वयाम इति मन्त्रार्थः । तत्तेन मन्त्रेणास्मा अश्वायापह्नुवत एव, एनमश्वम-पलपन्त्येव । न हि मृतोऽश्वः परमार्थत आह्वातुं शक्यते । किंचानेनाऽऽह्वानेना-श्वमेनं ध्रुवन्ति चालयन्त्युत्थापयन्ति । अपि चानेन चालनेनाश्वमेनं निह्नुवत एव, उत्थापनमपि मृतस्याश्वस्यापलाप एव । तस्मादश्वस्योपचार इत्यभिप्रायः ।

प्रदक्षिणत्रयं विधत्ते—

त्रिः परियन्ति । त्रय इमे लोकाः ।
एभ्य एवैनं लोकेभ्यो ध्रुवते, इति ।

पत्न्यः प्रदक्षिणत्रयेणैनमश्वं लोकत्रयव्यवहारार्थं ध्रुवते चालयन्त्युत्थापयन्ति ।

---

* ममेत्येकवचनं पत्नीसंघाभिप्रायम् । अर्थस्तु—अस्माकं पत्नीनां वसो, इति ।

---

१ क. °ह्नुवते स° ।

त्रिवारं पुनरप्रदक्षिणावृत्तिं विधत्ते—

त्रिः पुनः परियन्ति । षट्संपद्यन्ते । षड्वा ऋतवः । ऋतुभिरेवैनं धुवते, इति ।

पूर्वेण प्रदक्षिणावृत्तित्रयेण सहितस्य विपरीतावृत्तित्रयस्य षट्संख्योपपत्तिः ।

पुनरपि त्रिः प्रदक्षिणावृत्तिमभिप्रेत्य मिलित्वा नवसंख्यां विधत्ते—

अप वा एतेभ्यः प्राणाः क्रामन्ति (२) । ये यज्ञे धुवनं तन्वते । नवकृत्वः परियन्ति । नव वै पुरुषे प्राणाः । प्राणानेवाऽऽत्मन्दधते । नैभ्यः प्राणा अपक्रामन्ति, इति ।

ये पुरुषा यज्ञे धुवनं कम्पनं कुर्वत एतेभ्यः प्राणा अपक्रामन्त्येव । अतस्तत्परिहाराय नवकृत्वः परिभ्रमणं कुर्यात् । पुरुषशरीरे नवसु द्वारेषु नवसंख्याकाः प्राणा वर्तन्ते । तानात्मनि संपादयन्ति । ततश्च प्राणा एतेभ्यो नापक्रामन्ति ।

यथोक्तस्य मृतोपचारस्यानुष्ठानार्थं प्रतिप्रस्थातृकर्तृकं पत्न्यानयनं विधत्ते—

अम्बे अम्बाल्यम्बिक इति पत्नीमुदानयति । अह्वतैवैनाम्, इति ।

अम्बादिशब्दैः प्रतिप्रस्थाता महिषीं संबोधयति । तेन तामाह्वयत्येव । एतच्चान्यासामप्युपलक्षणम् ।

यदुक्तं सूत्रकारेण—"सुभगे काम्पीलवासिनीति क्षौमे(ण) वाससाऽध्वर्युर्महिषीमश्वं च प्रच्छाद्य" इति । तस्मिन्मन्त्रे प्रथमभागस्य तात्पर्यं दर्शयति—

सुभगे काम्पीलवासिनीत्याह । तप एवैनामुपनयति, इति ।

अत्र प्रतिप्रस्थाता महिषीं संबोधयति । हे सुभगे सौभाग्ययुक्ते हे काम्पी-

---

१ क. शोणेन ।

लवासिनि शृङ्गारार्थं विचित्रदुकूलवस्त्रोपेते । अनेन संबोधनेन महिषीमेनां तप एव प्रापयति । मृतेनाश्वेन सह भोगार्थमाह्वानं संतापहेतुत्वात्तपःस्थानीयम् ।

द्वितीयभागस्य तात्पर्यं दर्शयति—

सुवर्गे लोके संप्रोर्ण्वाथामित्याह ( ३ ) ।
सुवर्गमेवैनां लोकं गमयति, इति ।

हे महिषि त्वमश्वश्चेत्येतौ युवां स्वर्गलोकसदृशसुखनिमित्तमिदं वस्त्रं सम्यगाच्छादयतम् । अनेन मन्त्रभागेन(ण) महिषीं स्वर्गमेव प्रापयति ।

तृतीयभागस्य तात्पर्यं दर्शयति—

आऽहमजानि गर्भधमा त्वमजासि
गर्भधमित्याह । प्रजा वै पशवो
गर्भः । प्रजामेव पशूनात्मन्धत्ते, इति ।

हेऽश्व गर्भधारणहेतुं त्वामहं महिष्य(ष्या)जानि प्राप्नवानि । त्वं च गर्भधं गर्भधारकं कलत्ररूपं महिषीशरीरम(मा)जासि प्राप्नुहि । यद्यप्ययं भागो महिष्यैव पठितुं युक्तस्तथाऽपि तदभिप्रायानुवादरूपेणाध्वर्युः पठतीत्यविरोधः । गर्भस्य प्रजापशुरूपत्वादेतस्मिन्मन्त्रे पठिते सति प्रजां पशुं चाऽऽत्मनि स्थापयति ।

यदुक्तं सूत्रकारेण—"गायत्री त्रिष्टुबिति द्वाभ्यां सौवर्णाभिः सूचीभिर्महिष्यश्वस्यासिपथान्कल्पयति प्राक्क्रोडात् । एवमुत्तराभ्यां राजतीभिर्वावाता प्रत्यक्क्रोडात्प्राङ्नाभेः । एवमुत्तराभ्यां लौहीभिः सीसाभिर्वा परिवृक्ती शेषम् " इति । तत्रासिपथान्विधत्ते—

देवा वा अश्वमेधे पवमाने । सुवर्गं
लोकं न प्राजानन् । तमश्वः प्राजा-
नात् । यत्सूचीभिरसिपथान्कल्पयं-
न्ति । सुवर्गस्य लोकस्य प्रज्ञात्यै, इति ।

पुरा कदाचिद्देवा अश्वमेधे बहिष्पवमानस्तोत्रे प्रवृत्ते सति तत्र स्वर्गहेतुमश्वं न ज्ञातवन्तः । तमश्वस्तु ज्ञातवान् । अतः स्वर्गज्ञानाय मृतस्याश्वस्य शरीरे

सूचीभिरसिपथाः कल्पनीयाः। यथा लोके सूकरः खड्गेन च्छिद्यत एवमश्वोऽपि च्छेदनीयः। अतः खड्गप्रहारस्थानलाञ्छनानि सूचीभिः कर्तव्यानि। त एतेऽसिपथा इत्युच्यन्ते।

तस्मिन्नसिपथकल्पने पञ्चमकाण्डोक्तेन गायत्री त्रिष्टुबित्यनुवाकेन मन्त्रा आम्नातास्तेषां स्पष्टार्थतां दर्शयति—

गायत्री त्रिष्टुब्जगतीत्याह (४)। यथा यजुरेवैतत्, इति।

तेषु मन्त्रेषु गायत्र्यादिदेवताः सूचीभिः शिम्यन्त्विति सूचीवेधनमाम्नातम्। तत्तथैव क्रियते।

सूचीनामवान्तरभेदं विधत्ते—

त्रय्यः सूच्यो भवन्ति। अयस्मय्यो रजता
हरिण्यः। अस्य वै लोकस्य रूपमयस्मय्यः।
अन्तरिक्षस्य रजताः। दिवो हरिण्यः। दिशो
वा अयस्मय्यः। अवान्तरदिशा रजताः।
ऊर्ध्वा हरिण्यः। दिश एवास्मै कल्पयति, इति।

तत्र परिवृक्त्या लोहमय्यः सूच्यः। वावातया रजतमय्यः। महिष्याः सुवर्णमय्यः। ताश्च क्रमेण लोकत्रयरूपा दिगादिरूपाश्च। अतोऽस्य यजमानस्य दिशः स्वव्यापारक्षमाः करोति। एवं लोकत्रयमपीति द्रष्टव्यम्।

यदुक्तं सूत्रकारेण—"कस्त्वा छ्यति कस्त्वा विशास्तीत्यश्वस्य त्वचमाच्छ्यति चन्द्रनाममेदस्तदुद्धरति नाश्वस्य वपा विद्यते" इति। तत्र पञ्चमकाण्डोक्तमन्त्रस्य कस्त्वेत्यनुवाकोक्तस्य तात्पर्यं दर्शयति।

कस्त्वा छ्यति कस्त्वा विशास्ती-
त्याहाहिंस्सायै (५), इति।

हनुवते कामन्त्पूर्णवाथामित्याह जगतीत्याह कल्पयत्येकं च।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके नवमाध्याये
षष्ठोऽनुवाकः॥ ६॥

हेऽश्व त्वां कः प्रजापतिश्छ्यति खड्गेन च्छिनत्ति । तथा कः प्रजापतिरेव त्वां विशास्ति विशसनमवयवविभागेन च्छेदनं करोति । अत्र मन्त्रे प्रजापत्युक्तिरहिंसार्था । स हि जगद्विधातृत्वाद्यथा हिंसा न भवति तथा छेत्तुं जानाति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे नवमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

अथ सप्तमोऽनुवाकः ।

---

षष्ठेऽश्वस्य मृतोपचारः संज्ञपनप्रकारश्चोक्तः । सप्तमे मृतोपचारविषया अवशिष्टा मन्त्रा व्याख्यायन्ते । अश्वेन सह वस्त्राच्छादिता महिषी यदा सोऽश्वो निद्रातीत्येवं क्लिश्नाति तदा पत्न्य इतरास्तां महिषीं प्रोत्साहयन्ति । प्रोत्साहनमन्त्राश्च "ऊर्ध्वामेनाम्" इत्यादयः । तत्र प्रथममन्त्रे प्रथमपादस्य तात्पर्यं दर्शयति—

अप वा एतस्माच्छ्री राष्ट्रं क्रामति । योऽश्वमेधेन यजते । ऊर्ध्वामेनामुच्छ्रयतादित्याह । श्रीर्वै राष्ट्रमश्वमेधः । श्रियमेवास्मै राष्ट्रमूर्ध्वमुच्छ्रयति, इति ।

अश्वमेधयाजिनः सकाशाच्छ्रियो राष्ट्रस्य चापगमो भवति । बहुधनव्ययेन श्रियोऽपगमः । अत एव राष्ट्रं पालयितुमशक्तत्वाद्राष्ट्रस्याप्यपगमः । तत्परिहारार्थमितराः पत्न्य ऊर्ध्वामिति पादं पठन्ति । तस्यायमर्थः—हेऽश्व, एनां महिषीं प्रति स्वकीयां पुंलिङ्गव्यक्तिमूर्ध्वच्छ्रयताद्यथोर्ध्वा व्यवतिष्ठते तथोच्छ्रितां कुर्विति । एवं सत्यश्वमेधस्य श्रीरूपत्वाद्राष्ट्ररूपत्वाच्च तदवयवस्योच्छ्रितत्वप्रार्थनया श्रियं राष्ट्रं चोर्ध्वं यथा भवति तथैवोन्नतं करोति ।

द्वितीयपादस्य तात्पर्यं दर्शयति—

वेणुभारं गिराविवेत्याह । राष्ट्रं वै भारः । राष्ट्रमेवास्मै पर्यूहति, इति ।

व्यक्तेरौन्नत्ये दृष्टान्तोऽस्मिन्पादेऽभिधीयते । यथा वेणुभारवाही कश्चिद्गिरौ वेणूञ्छित्त्वा भारं बद्ध्वा स्वशिरस्यारोपयितुं सौकर्याय वृक्षाद्यवष्ट-

म्भेन तं भारमूर्ध्वाग्रमवस्थापयति तद्वत्। अत्र राष्ट्रस्य भारस्थानीयत्वात्। यजमानार्थं राष्ट्रमेव परितः समादधाति।

तृतीयपादस्य तात्पर्यं दर्शयति—

**अथास्या मध्यमेधतामित्याह। श्रीर्वै राष्ट्रस्य मध्यम् (१)। श्रियमेवावरुन्धे, इति।**

अश्वस्य पुंलिङ्गव्यक्तावुच्छ्रितायामथानन्तरमस्या महिष्याः शरीरमध्यं स्त्रीलिङ्गमेधतामुत्साहेन वर्धताम्। अतो धनादिसमृद्धिरूपायाः श्रिय एव राष्ट्रमध्यरूपत्वाच्छ्रियमेव प्राप्नोति।

चतुर्थपादस्य तात्पर्यं दर्शयति—

**शीते वाते पुनन्निवेत्याह। क्षेमो वै राष्ट्रस्य शीतो वातः। क्षेममेवावरुन्धे, इति।**

पक्वानां धान्यानां खले यदा शोधनं क्रियते तदा प्रातःकाले शीते वाते प्रवृत्ते सति धान्यं पुनन्, शोधयन्पुरुष उत्साहेन यथाऽभिवृद्धिं गच्छति तद्वत्। अत्र शीतवातस्य तापनिवारकत्वेन क्षेमरूपत्वाद्यजमानः क्षेममेव प्राप्नोति।

प्रोत्साहनमन्त्रेषु प्रथमं व्याख्याय द्वितीयमन्त्रे प्रथमपादस्य तात्पर्यं दर्शयति—

**यद्धरिणी यवमत्तीत्याह। विड्वै हरिणी। राष्ट्रं यवः। विशं चैवास्मै राष्ट्रं च समीचीं दधाति, इति।**

अत्र महिषीं सान्त्वयितुमनेनोत्तरेण च पादद्वयेन दृष्टान्तोऽभिधीयते। यदा हरिणी काचिद्रात्रौ समागत्य क्षेत्रे फलितं यवं भक्षयति। तत्र यथा स्वामी न जानाति। तथा हे महिषि त्वमपि देवतारूपेण त्वामनुभूयान्तर्हितमश्वं न जानासीति पादद्वयस्याभिप्रायः। तत्र हरिणीयवशब्दाभ्यां प्रजा राष्ट्रं चेत्युभयं सूच्यते। तत्र प्रजा हरिणीस्थानीया। यद्वा राजस्वामिकायां भूमावुत्पन्नधान्यभक्षणाद्धरिणीसादृश्यम्। राष्ट्रस्य भोग्यत्वाद्यवसादृश्यम्।

अत एतत्पाठेन प्रजाया राष्ट्रस्य च सम्यगानुकूल्यं संपादयति—

**न पुष्टं पशुमन्यत इत्याह। तस्मा-**

---

१ क. °म्यक्कर्मानुकू°।

द्राजा प॒शून्न पुष्य॑ति ( २ ), इति ।

हरिण्या यवे भक्षितेऽपि हरिणीरूपं पशुं पुष्टं क्षेत्रिको न जानाति । यस्मादेवं तस्मात्क्षेत्रस्वामिवत्कृत्स्नभूमिस्वामी राजा पशून्न पुष्यति । पशुपुष्टिं स्ववृत्तितया न गणयति । वैश्यस्य वृत्त्यन्तराभावात्पशुपुष्टिमसौ बहु मन्यते । राजा तु प्रभूतधनसमृद्धत्वान्न गणयति ।

द्वितीयतृतीयपादयोस्तात्पर्यं दर्शयति—

शू॒द्रा यद॑र्यजा॒रा न पोषा॑य धना॒यती॒-

त्या॑ह । तस्मा॑द्वैशीपु॒त्रं नाभिषि॑ञ्चन्ते, इति ।

यद्यदा कदाचिद्दासी स्वकीयस्वामिना जारेण युक्ता भवति तदा सा दासी स्वामिस्वीकारमात्रेणात्यन्तं हृष्यति न तु स्वकीयकुटुम्बपोषणाय धनमात्मन इच्छति । न हि स्वामिस्वीकाराद्धनमधिकं मन्यते । तथा हे महिषि मनुष्यशरीरा त्वमपि देवतारूपस्याश्वस्य स्वीकारादेव परितुष्टा भव । न तु तुच्छमिमं मानुषं भोगमपेक्षस्वेति मन्त्राभिप्रायः । यस्मादत्र दास्या धनराहित्यं सूचितं तस्माद्दासीवन्नीचजातेर्वैश्यास्त्रियाः पुत्रं धनानर्हं राज्यार्थं नाभिषिञ्चन्ते ।

तृतीयमन्त्रे प्रथमपादस्य तात्पर्यं दर्शयति—

इ॒यं य॒का श॑कुन्ति॒केत्या॑ह । विड्वै श॑कु॒न्ति॒का । रा॒ष्ट्रम॑-

श्वमे॒धः । विशं॑ चै॒वास्मै॑ रा॒ष्ट्रं च॑ स॒मीची॑ दधाति, इति ।

इयं प्रत्यक्षतो दृश्यमाना यका शकुन्तिका या काचित्पक्षिस्त्री विद्यते सा च पक्षिणं पृष्ठतो गच्छत्येव न तु पृष्ठे क्वचिदवतिष्ठते । हे महिषि, एवं त्वमपि न तृप्यसि तदेतदयुक्तमिति मन्त्राभिप्रायः । अत्र शकुन्तिकाशब्देन पक्षिस्त्रीसदृशी प्रजा सूच्यते । अयमश्वमेधश्च राष्ट्रसदृशः । तथा सत्येतत्पादपाठेन प्रजाराष्ट्रयोर्यजमानानुकूल्यं संपादयति ।

द्वितीयपादस्य तात्पर्यं दर्शयति—

आ॒ह॒ल॒मि॒ति॒ सर्प॑ती॒त्या॑ह । तस्मा॑-

द्रा॒ष्ट्राय॒ विशः॑ सर्पन्ति, इति ।

आहलमिति पक्षिशब्दानुकरणम् । तथाविधं शब्दं कुर्वती पक्षिस्त्री पुमांसं पक्षिणं सर्पति । यस्मान्मन्त्र एवमाह तस्माल्लोकेऽपि राष्ट्रार्थं शकुन्तिकास्थानीयाः प्रजाः प्रवर्तन्ते ।

तृतीयपादस्य तात्पर्यं दर्शयति—

आहंतं गभे पस इत्याह । विड्वै गर्भः (३) । राष्ट्रं पसः । राष्ट्रमेव विश्याहंन्ति । तस्माद्राष्ट्रं विशं घातुकम्, इति ।

अत्र गभशब्दो वर्णविपर्यासेन स्त्रीव्यञ्जनं भगमाचष्टे । पसशब्दोऽपि वर्णव्यत्यासेन सपमावापयोग्यं पुरुषव्यञ्जनमाचष्टे । स्त्रीव्यञ्जने पुंव्यञ्जनमाहतमिति मन्त्रार्थः । अत्र स्त्रीव्यञ्जनवाचिना गभशब्देन प्रजोपलक्षिता । पुंव्यञ्जनवाचिना पसशब्देन राष्ट्रं सूचितम् । ततः प्रजायां राष्ट्रमाहन्ति संयोजयति । यस्मादेवं तस्माल्लोकेऽपि यद्राष्ट्रं तद्विशं +घातुकं प्रजां प्रति गमनशीलम् । उभयमपि परस्परं संबध्य वर्तत इत्यर्थः । चतुर्थपादः स्पष्टत्वबुद्ध्या ब्राह्मणेनोपेक्षितः ।

चतुर्थमन्त्रे प्रथमपादस्य तात्पर्यं दर्शयति—

माता चं ते पिता चं त इत्याह । इयं वै माता । असौ पिता । आभ्यामेवैनं परिददाति, इति ।

हे महिषि तव या माता यश्च तव पिता तावुभौ सह शयनं कुरुत इति मन्त्रार्थः । अत्र पृथिवी द्यौश्च मातापितृशब्दाभ्यामुपलक्ष्येते । तथा सति द्यावापृथिवीभ्यामेवैनं यजमानं रक्षार्थं परिददाति ।

द्वितीयपादस्य तात्पर्यं दर्शयति—

अग्रं वृक्षस्य रोहत इत्याह । श्रीर्वै वृक्षस्याग्रम् । श्रियमेवावरुन्धे, इति ।

---

+ गत्यर्थकोऽत्र हन् धातुः ।

---

१ क. सगर्न ।

वृक्षस्य कस्यचिदग्रं शाखया निर्मितं तल्पं माता पिता चाऽऽरोहत इति मन्त्रार्थः। वृक्षाग्रशब्देनोत्कर्षसाम्याच्छ्रीर्विवक्षिता। अतो यजमानः श्रियमेव प्राप्नोति।

उत्तरार्धस्य तात्पर्यं दर्शयति---

प्रसुलामीति ते पिता गभे मुष्टिमतꣳसयदि-
त्याह। विड्वै गभः। रा[ष्ट्रं] मुष्टिः। राष्ट्रमेव
विश्याहन्ति। तस्माद्राष्ट्रं विशं घातुकम्, इति।

हे महिषि ते पिता प्रसुलामि प्रवेशयामीत्येवमुक्त्वा गभे योनौ मुष्टिं मुष्टिसदृशं मेढ्रमतंसयत्प्रावेशयत्। एवमयमश्वश्चकार। अतो हे महिषि त्वमुत्तिष्ठेति मन्त्राभिप्रायः। तत्र गभमुष्टिशब्दाभ्यां प्रजाराष्ट्रयोरुपलक्षितत्वात्तयोः संबन्धः पूर्ववदत्र संपादितो भवति। एवमत्र महिष्या आह्वानार्था इतरपत्नीवचनरूपा मन्त्रा व्याख्याताः।

यदुक्तं सूत्रकारेण--" दधिक्राव्णो अकारिषमिति सर्वाः सुरभिमतीमृचमन्ततो जपित्वा " इति। तदिदं विधत्ते---

अप वा एतेभ्यः प्राणाः क्रामन्ति। ये
यज्ञेऽपूतं वदन्ति। दधिक्राव्णो अका-
रिषमिति सुरभिमतीमृचं वदन्ति।
प्राणा वै सुरभयः। प्राणानेवाऽऽत्मन्द-
धते। नैभ्यः प्राणा अपक्रामन्ति, इति।

यज्ञे यागप्रयोगमध्ये ये मनुष्या अपूतमपवित्रं ग्राम्योक्तिरूपं वदन्त्येतेभ्यो जनेभ्यः प्राणा अपक्रामन्ति। अतस्तन्निवारणार्थं सर्वा(र्वे) अपि सुरभिमतीं ब्रूयुः। सुरभि नो मुखाकरदित्येवं सुरभिशब्दो यस्यामृच्यस्ति सेयं सुरभिमती। प्राणानां सुरभिगन्धवत्प्रियत्वात्तन्मन्त्रपाठेन प्राणानात्मनि संपादयन्ति। तत एभ्यः स्त्रीजनेभ्यः प्राणा नापक्रामन्ति।

---

१ क पि ।वारो॰।

यदुक्तं सूत्रकारेण—"आपोहिष्ठीयाभिर्मार्जयित्वा" इति। तदिदं विधत्ते—

आपो हि ष्ठा मयोभुव इत्यद्भिर्मार्जयन्ते। आपो वै सर्वा देवताः। देवताभिरेवाऽऽत्मानं पवयन्ते, इति।

राष्ट्रस्य मध्यं पुष्यति गर्भो रुन्धे दधते चत्वारि च।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके नवमाध्याये सप्तमोऽनुवाकः॥ ७॥

देवतादिजगदुत्पत्तेः प्राक्तत्कारणत्वेनाऽऽपः समाम्नाताः 'आपो वा इदमासन्सलिलमेव' इति। अतः कारणत्वात्सर्वदेवतारूपा आपः। ततोऽब्रूपाभिर्देवताभिरेवाऽऽत्मानं शोधयन्ति।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे नवमप्रपाठके सप्तमोऽनुवाकः॥ ७॥

---

अथाष्टमोऽनुवाकः।

---

सप्तमे-मृताश्वोपचारे येऽवशिष्टा मन्त्रास्ते व्याख्याताः। अष्टमेऽश्वमेधतदीयपशुविधयः प्रशस्यन्ते। तत्राऽऽदावश्वमेधविधिप्रशंसां दर्शयति—

प्रजापतिः प्रजाः सृष्ट्वा प्रेणाऽनुप्राविशत्। ताभ्यः पुनः संभवितुं नाशक्नोत्। सोऽब्रवीत्। ऋध्नवदित्सः। यो मेतः पुनः संभरदिति। तं देवा अश्वमेधेनैव समभरन्। ततो वै त आर्ध्नुवन्। योऽश्वमेधेन यजते। प्रजापतिमेव संभरत्यृध्नोति, इति।

पुरा प्रजापतिः प्रजाः सृष्ट्वा तासु प्रजासु प्रेणा प्रेम्णाऽनुप्रविश्य पुनस्ताभ्यः

प्रजाभ्यः सकाशात्संभवितुं स्वेन रूपेणाऽऽविर्भवितुमशक्तः सन्निदमब्रवीत्—यः कश्चिन्मामितः प्रजासमूहात्पुनरपि संभरत्स्वेन रूपेण संभूतं करोति स ऋध्नवद्धि-त्समृद्धिं प्राप्नोत्येवेति। ततो देवा अश्वमेधानुष्ठानेनैव तं प्रजापतिं पुनः संभूतं कृत्वा स्वयमृद्धिं प्राप्ताः। ततोऽन्योऽप्यश्वमेधेनेष्ट्वा प्रजापतिमेव संपाद्य समृद्धिं प्राप्नोति।

अथ पशुविधिषु मनुष्यविधिं प्रशंसति—

पुरुषमालभते। वैराजो वै पुरुषः।
विराजमेवाऽऽलभते। अथो अन्नं
वै विराट्। अन्नमेवावरुन्धे, इति।

सोमाय स्वराज्ञेऽनोवाहावित्यनुवाके वैराजी पुरुषीति विराड्देवताका मनुष्यस्त्री पशुत्वेनाऽऽम्नाता। तदत्र पुरुषमालभत इत्युच्यते। मनुष्यजातिमालभत इत्यर्थः। मनुष्यशरीरस्य विराट्पुरुषशरीरसमानाकारत्वादयं वैराजः। अतो विराजमेवाऽऽलब्धवान्भवति। अपि चान्नस्यापि विराट्शब्दाभिधेयत्वादन्नमपि प्राप्नोति।

अश्वविधिं प्रशंसति—

अश्वमालभते। प्राजापत्यो वा अश्वः।
प्रजापतिमेवाऽऽलभते। अथो श्रीर्वा एक-
शफम्। श्रियमेवावरुन्धे, इति।

प्रजापत्यक्षिजन्यत्वादश्वः प्राजापत्यः। तदालम्भेन प्रजापतिमेवाऽऽलब्धवान्भवति। अपि चैकशफमश्वाश्वतरगर्दभरूपं श्रीस्वरूपम्। धनिकानां गृहेषु मनुष्यधनादिवहनायाश्वादीनां दर्शनात्। तस्माच्छ्रियमेव प्राप्नोति।

गोविधिं प्रशंसति—

गामालभते (२)। यज्ञो वै गौः। यज्ञमेवाऽऽलभते।
अथो अन्नं वै गौः। अन्नमेवावरुन्धे, इति।

द्वे धेनू भौमी इत्यादौ पशुत्वेन गौर्विहिता। सा च यज्ञनिष्पादकत्वाद्यज्ञ-

१ क. °णावस्थातुम°।

स्वरूपा। अतो गवालम्भेन यज्ञ एवाऽऽलब्धो भवति। अपि च क्षीरादिद्वारेण गोरन्नत्वादन्नमेव प्राप्नोति।

अजविधिमविविधिं च प्रशंसति—

अजावी आलभते भूम्ने। अथो पुष्टिर्वै भूमा। पुष्टिमेवावरुन्धे, इति।

अग्नयेऽनीकवत इत्यनुवाक आग्नेयः कृष्णोऽजः सारस्वती मेषीत्यजाव्योः पशुत्वमाम्नातम्। तदालम्भो भूम्ने बाहुल्याय संपद्यते। तस्माद्द्वौ त्रीनजा जनयत्यथावयो भूयसीः, इति बाहुल्यसंभावनायाः श्रुतत्वात्। अपि च बाहुल्यस्य पुष्टिरूपत्वात्पुष्टिमेव प्राप्नोति।

उत्सर्गविधिं प्रशंसति—

पर्यग्निकृतं पुरुषं चाऽऽरण्यांश्चो-त्सृजन्त्यहिंसायै, इति।

यद्यप्यारण्योत्सर्ग एवान्यत्राऽऽम्नातो न तु पुरुषोत्सर्गस्तथाऽप्यप्राप्तांशे विधित्वं प्राप्तांशस्य त्वनुवादेन प्रशंसेति सर्वत्र द्रष्टव्यम्।

अथ मिलित्वा संगृह्य प्रशंसति—

उभौ वा एतौ पशू आलभ्येते। यश्चावमो यश्च परमः। तेऽस्योभये यज्ञे बद्धाः। अभीष्टा अभिप्रीताः। अभिजिता अभिहुता भवन्ति, इति।

तत्रोक्तेषु पुरुषमालभत इत्यारभ्याजावी आलभत इत्यन्तेषु पशूत्तमाधमभावो विद्यते। पुरुषः सर्वोत्तमः। तदपेक्षयाऽश्वोऽधमः। अश्वापेक्षया गौरधमा। गवापेक्षयाऽजावी अधमौ। एवं योऽधमो यश्च परमस्तावुभौ पशू आलभ्येते। अस्य यजमानस्य यज्ञ उभयविधास्ते सर्वे पशवो बद्धा नियोजिताः। ते च देवतानामभीष्टा अपेक्षिताः। अत एवाभिप्रीता अत्यन्तप्रीतिविषयाः। अभिजिता वशीकृताः। अभिहुता देवार्थमग्नौ प्रक्षिप्ता भवन्ति।

---

१ क. प्राप्ता।

अश्वमेधानुष्ठानं तद्वेदनं च प्रशंसति-

नैनं दंक्ष्णवः पशवो यज्ञे बद्धाः। अ-
भीष्टां अभिप्रीताः। अभिजिंता अभि-
हुता हिꣳसन्तिं। योऽश्वमेधेन यजते।
य उं चैनमेवं वेद (३), इति।

लभते गामालंभते परमोऽष्टौ च।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके नवमाध्यायेऽष्टमोऽनुवाकः ॥ ८ ॥

---

एनमश्वमेधयाजिनमश्वमेधवेदिनं च दङ्क्ष्णवः स्वभावतो दंशनशीला अपि पशवो नियोजनादिक्रियाविषयाः सन्तोऽपि न हिंसन्ति।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे नवमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

अथ नवमोऽनुवाकः।

---

अष्टमेऽश्वमेधस्य तत्पशूनां च प्रशंसाऽभिहिता। नवमे तु त्रिरात्रस्योत्तमेऽहनि पशवोऽभिधीयन्ते। तत्राऽऽद्यौ तावत्प्रथमद्वितीये अहनी प्रशंसति-

प्रथमेन वा एष स्तोमेन राद्ध्वा। चतु-
ष्टोमेन कृतेनायानामुत्तरेऽहन्। एकविꣳशे
प्रतिष्ठायां प्रतितिष्ठति, इति।

एषोऽश्वमेधयाजी प्रथमेनाह्ना राद्ध्वा समृद्धिं प्राप्योत्तरेऽहन्द्वितीयेऽहानि प्रतितिष्ठति। कीदृशेन प्रथमेन स्तोमेन स्तोत्रयुक्तेन चतुष्टोमेन त्रिवृत्पञ्चदशसप्तदशैकविंशाख्यैश्चतुर्भिः स्तोमैर्युक्तेन। तत्र दृष्टान्तः—अयानां कालानां मध्ये कृतेन कृतयुगेनेव। यथा कृतयुगं चतुर्भिर्धर्मपादैर्युक्तमेवमिदं प्रथममहश्चतुर्भिः स्तोमैर्युक्तमित्यर्थः। कीदृश उत्तर एकविंश एकविंशस्तोमयुक्ते। अत एव प्रतिष्ठायां प्रतिष्ठाहेतौ।

अथ तस्मिन्द्वितीयेऽहनि पृष्ठस्तोत्रे शाक्करं साम विधत्ते—

एकवि॒ꣳशात्प्र॒ति॑ष्ठायाः॑ ऋ॒तून॒न्वारो॑हति। ऋ॒तवो॒ वै पृ॒ष्ठानि॑। ऋ॒तवः॑ संवत्स॒रः। ऋ॒तु॒ष्वे॒व सं॑वत्स॒रे प्र॑ति॒ष्ठाय॑। दे॒वता॑ अ॒भ्यारो॑हति। शक्व॑रयः पृ॒ष्ठं भ॑वन्त्य॒न्यद॑न्य॒च्छन्दः॑। अ॒न्येऽन्ये वा ए॒ते प॒शव॑ आ॒लभ्य॑न्ते (१)। उ॒तेव॑ ग्रा॒म्याः। उ॒तेवा॑ऽऽर॒ण्याः। अह॑रे॒व रू॒पेण॒ सम॑र्धयति। अथो॒ अह्न॑ ए॒वैष॒ बलि॒र्ह्रि॑यते, इति।

यदिदमेकविंशस्तोमयुक्तं प्रतिष्ठाकारणं द्वितीयमहस्तत्सकाशादयमृत्वभिमानिदेवान्प्राप्नोति। पृष्ठस्तोत्राण्यत्रर्तुप्राप्तिहेतुत्वादृतव इत्युच्यन्ते। तैर्ऋतुभिः साध्यत्वात्संवत्सर ऋत्वात्मकः। अतोऽयं पृष्ठस्तोत्रबलादृत्वात्मके संवत्सरे प्रतिष्ठां प्राप्य तद्देवताः प्राप्नोति। तस्मिन्पृष्ठस्तोत्रे शक्वर्यो भवन्ति शाक्करं साम गातव्यम्। सामाधारभूतास्वृक्ष्वन्यदन्यच्छन्दो भवति न त्वेकच्छन्दस्काः सर्वा ऋचः। यस्मादेते पशवो नानाविधा आलभ्यन्ते केचिद्ग्राम्याः केचिदारण्याश्चेति तस्मात्पशुवच्छन्दसां नानाविधत्वं युक्तम्। तेन च नानाविधत्वेनेदं द्वितीयमहरेव स्वरूपेण समृद्धं कृतं भवति। अपि च तस्मादह्न एव सकाशादेष बलिर्ह्रियते। इयं लोकप्रसिद्धा पूजा यजमानस्य संपद्यते।

अथ तृतीयेऽहनि पशुविशेषान्विधत्ते—

तदा॑हुः। अप॑शवो॒ वा ए॒ते। यद॒जाव॒यश्चा॑ऽऽर॒ण्याश्च॑। ए॒ते वै सर्वे॑ प॒शवः॑। यद्गव्या॒ इति॑। गव्या॒न्प॒शून॒त्त॒मेऽह॒न्नाल॑भते (२)। तेनै॒वो॒भया॒न्प॒शून॑वरुन्धे, इति।

तत्र पशुविषये रहस्याभिज्ञा एवमाहुः—अजजातीया अविजातीया आरण्याश्च ये सन्ति ते मुख्याः पशवो न भवन्ति। किंतु ये गोजातीया एत एव

सर्वे पशवः सर्वपशुस्थाने प्रयोक्तव्या इति । तस्मादुत्तमेऽहनि गोजातीयान्पशूनालभेत । तेनैव गवालम्भनेन ग्राम्यानारण्यांश्चोभयान्प्राप्नोति ।

गव्यानां पशूनां देवतां विधत्ते--

प्राजापत्या भवन्ति । अनभिजितस्याभिजित्यै, इति ।

सर्वेषां प्राजापत्यत्वे सति प्रजापत्यनुग्रहात्पूर्वमवशीकृतमपि राष्ट्रं वशीकृतं भवति ।

अथ त्रिरात्रावसाने पशून्विधत्ते--

सौरीर्नव श्वेता वशा अनूबन्ध्या भवन्ति ।
अन्तत एव ब्रह्मवर्चसमवरुन्धे, इति ।

सूर्यदेवताका नवसंख्याकाः श्वेतवर्णा वन्ध्या गावोऽनूबन्ध्याख्याः पशवः कर्तव्याः । तेनाश्वमेधस्यान्तत एव काले ब्रह्मवर्चसं प्राप्नोति ।

अनूबन्ध्यानन्तरं पश्वन्तराणि विधत्ते--

सोमाय स्वराज्ञेऽनोवाहावनड्वाहाविति द्वंद्विनः
पशूनालभते । अहोरात्राणामभिजित्यै, इति ।

सोमायेत्यनुवाके द्विवचनान्तैः शब्दैरभिहिता द्वंद्विनस्तदालम्भेनाहोरात्राभिजयो भवति ।

द्वंद्विभ्य ऊर्ध्वं पश्वन्तराणि विधत्ते--

पशुभिर्वा एष व्यृध्यते । योऽश्वमेधेन यजते । छगलं
कल्माषं किकिदीविं विदीगयमिति त्वाष्ट्रान्पशूनाल-
भते । पशुभिरेवाऽऽत्मानꣳ समर्धयति, इति ।

अश्वमेधयाजी बहुपशुमारणात्पशुभिर्वियुक्तो भवति । अतः पशुसमृद्धये त्वष्टृदेवताकान्पशूनालभेत । त्वष्टा हि रूपनिर्माता पशून्संपादयति । छगलश्छागार्भकः । कल्माषः कृष्णबिन्दुमान् । किकिदीविस्तित्तिरिः । विदीगयः श्वेतबकः । एते चैकादश प्रातर्गव्याः पशव आलभ्यन्त इत्यनुवाके समाम्नाताः ।

१ क. °गलोऽजार्भ° ।

पश्वन्तराणि विधत्ते—

ऋतुभिर्वा एष व्यृध्यते । योऽश्वमेधेन यजते ।
पिशङ्गास्त्रयो वासन्ता इत्यृतुपशूनालभते ।
ऋतुभिरेवाऽऽत्मान्ँ समर्धयति, इति ।

अश्वमेधयाजिनश्चिरकालं नियमे वर्तमानस्य तत्तदृतुप्रयुक्तभोगाभावादृतुभिर्वियोगो भवति । तत्परिहाराय पिशङ्गा इत्याद्यनुवाकोक्तानृतुदेवताकान्पशूनालभते । ततस्तुष्टैर्ऋतुभिरात्मानं समृद्धं करोति ।

तेषामुत्सर्गं विधत्ते—

आ वा एष पशुभ्यो वृश्च्यते । योऽश्वमेधेन यजते ।
पर्यग्निकृता उत्सृजन्त्यनाव्रस्काय ( ३ ), इति ।

लभ्यन्ते लभते त्वाष्ट्रान्पशूनालभतेऽष्टौ च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके नवमाध्याये
नवमोऽनुवाकः ॥ ९ ॥

अश्वमेधयाजी बहुपशुमारणात्पशुभ्यो विच्छिद्यते । तत्परिहाराय पर्यग्निकरणानन्तरमुत्सृजेत् । अनाव्रस्कायाविच्छेदायेत्यर्थः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे नवमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

अथ दशमोऽनुवाकः ।

नवमे गव्यादयः पशवोऽभिहिताः । दशमे महिमाख्यौ ग्रहावुच्येते । तावेतौ विधत्ते—

प्रजापतिरकामयत महानन्नादः स्यामिति ।
स एतावश्वमेधे महिमानावपश्यत् । ताव-

१ क. °त्सृजन्ति। अ° ।

गृह्णीत । ततो वै स महानन्नादोऽभवत् । यः काम-
येत महानन्नादः स्यामिति । स एतावश्वमेधे
महिमानौ गृह्णीत । महानेवान्नादो भवति, इति ।

पुरा कदाचित्प्रजापतिरैश्वर्यादिभिर्गुणैर्महान्रोगाभावेन यथेच्छमन्नादश्च स्यामिति कामयित्वा तत्साधनं महिमाख्यौ ग्रहौ निश्चित्य तौ गृहीत्वा महानन्नादश्चाभवत् । ततोऽन्योऽपि तौ गृहीत्वा तथा भवति ।

तद्ग्रहणप्रकारश्च सूत्रकारेण स्पष्टीकृतः—"अन्तरेणाऽऽग्रयणोक्थ्यौ प्राक्तन सोममभिषुत्य यः प्राणतो य आत्मदा इति महिमानौ गृह्णाति राजतेन पूर्वं सौवर्णेनोत्तरम्" इति । तयोर्ग्रहयोर्यागं विधत्ते—

यजमानदेवत्या वै वपा । राजा महिमा ।
यद्वपां महिम्नोभयतः परियजति । यजमा-
नमेव राज्येनोभयतः परिगृह्णाति, इति ।

वपाया यजमानवन्मुख्यत्वात्तद्देवत्यत्वम् । महिमाख्ययोर्ग्रहयोर्महत्त्वयोगाद्राजत्वम् । तस्माद्वपामभितः पुरस्तात्पश्चाच्च महिम्ना ग्रहेण यजेत । तेन यजमानमेवोभयत इह लोके परलोके च राज्ययुक्तं करोति ।

तमेवं महिमयागं पुनः प्रशंसति—

पुरस्तात्स्वाहाकारा वा अन्ये देवाः । उप-
रिष्टात्स्वाहाकारा अन्ये । ते वा एतेऽश्व एव
मेध्य उभयेऽवरुध्यन्ते । यद्वपां महिम्नोभ-
यतः परियजति । तानेवोभयान्प्रीणाति
( १ ), इति ।

परियजति पट् च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके नवमाध्याये
दशमोऽनुवाकः ॥ १० ॥

---

प्रकृता स्वाहा देवेभ्यो देवेभ्यः स्वाहेत्यभितो वपां जुहोति, इति पुरस्ता-

त्स्वाहाकारोपरिष्टात्स्वाहाकाराश्च द्विविधा देवा उक्ताः। ते द्विविधा अत्रापि यागयोग्येऽश्वे प्राप्यन्ते। अत एव सूत्रकारेणोक्तम्—"पूर्वानपचित्य वप्यमहिमानौ हुत्वा" इति। एवं सति वपाया उभयतो महिमयोगेन द्विविधानपि देवान्प्रीणयति।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे नवमप्रपाठके दशमोऽनुवाकः॥ १०॥

---

अथैकादशोऽनुवाकः।

---

दशमे महिमानाख्यौ ग्रहावुक्तौ। एकादशे शरीरहोमाः स्विष्टकृदाहुतयश्चोच्यन्ते। यदुक्तं सूत्रकारेण—"हविषा प्रचर्याऽऽज्यमवदानं कृत्वा स्तेगान्दꣳष्ट्राभ्यां मण्डूकाञ्जम्भ्येभिरित्येतैश्चतुर्दशभिरनुवाकैः प्रतिमन्त्रं शरीरहोमाञ्जुहोति दिवाकीर्त्यं पञ्चदशम्" इति। तत्र शरीरहोमान्विधत्ते—

वैश्वदेवो वा अश्वः। तं यत्प्राजापत्यं कुर्यात्। या देवता अपिभागाः। ता भागधेयेन व्यर्धयेत्। देवताभ्यः समदं दध्यात्। स्तेगान्दꣳष्ट्राभ्यां मण्डूकाञ्जम्भ्येभिरिति। आज्यमवदानं कृत्वा प्रतिसंख्यायमाहुतीर्जुहोति। या एव देवता अपिभागाः। ता भागधेयेन समर्धयति। न देवताभ्यः समदं दधाति (१), इति।

अयमश्वो वैश्वदेवः सर्वदेवसाधारणः। "अश्वे वै सर्वा देवता अन्वायत्ताः" इत्युक्तत्वात्। तादृशमश्वं यदि प्रजापतिदेवताकमेव कुर्यात्तदानीमस्मिन्या देवता अपिभागाः संभावितभागार्थास्ताः सर्वा देवता होमरहितत्वात्स्वभागेन वियोजिताः स्युः। तदानीं प्रजापतेरन्यासां देवतानां च परस्परं समदं कलहं संपादयेत्। मदेन सह वर्तत इति समदः कलहः। अतस्तत्परिहारायाऽऽज्यद्रव्यमवदाय विस्मृतिपरिहाराय प्रतिमन्त्रं गणयित्वा स्तेगानित्याद्यनुवाकोक्तमन्त्रैराहुतीर्जुहुयात्।

ततः संभावितभागा देवतास्तत्तद्भागेन समृद्धाः करोति। तेन च देवतानां परस्परं कलहं न संपादयति। स्तेगान्दꣳष्ट्राभ्यामित्येको मन्त्रः। मण्डूकाञ्जम्भ्येभिरिति द्वितीयो मन्त्रः। एवं प्रतिमन्त्रं हस्तेन गणयेत्।

अनुवाकसंख्यां विधत्ते—

चतुर्दशैताननुवाकाञ्जुहोत्यनन्तरित्यै, इति।

स्तेगानित्यारभ्य क्रमैरत्यक्रमीदित्यन्ताश्चतुर्दशानुवाकाः। अयं च होमः सर्वासां देवतानामन्तरायराहित्याय भवति।

आरण्यकाण्डोक्तमनुवाकान्तरं विधत्ते—

प्रयासाय स्वाहेति पञ्चदशम्। पञ्च-
दश वा अर्धमासस्य रात्रयः।
अर्धमासशः संवत्सर आप्यते, इति।

पञ्चदशरात्रीणामर्धमासत्वाच्चतुर्विंशत्यर्धमासानां संवत्सरत्वाच्च तदर्धमासद्वारा संवत्सरप्राप्तिः।

अथ स्विष्टकृदाहुतीर्विधत्ते—

देवासुराः संयत्ता आसन्। तेऽब्रुवन्नग्नयः
स्विष्टकृतः। अश्वस्य मेध्यस्य वयमु-
द्धारमुद्धरामहै। अथैतानभिभवामेति।
ते लोहितमुदहरन्त। ततो देवा अभ-
वन् (२)। पराऽसुराः। यत्स्विष्टकृद्भ्यो
लोहितं जुहोति भ्रातृव्याभिभूत्यै। भव-
त्यात्मना। पराऽस्य भ्रातृव्यो भवति, इति।

देवेष्वसुरेषु च युद्धार्थमुद्युक्तेषु ते स्विष्टकृतोऽग्नयो देवा इतरदेवान्प्रत्येवमब्रु-वन्। यागयोग्यस्याश्वस्य संबन्धिनमुद्धारं सर्वदेवसाधारणेभ्यो भागेभ्य उत्क-र्षेण हरणीयं भागमश्वादुद्धृत्य वयं संपादयामः। अनन्तरमेतानसुरान-

भिभवितुं शक्नुम इति। तथोक्त्वा तेऽग्नयोऽश्वस्य सकाशाल्लोहितमुदहरन्त। तता देवा विजयिनोऽभवन्। असुराः पराभूताः। एवमन्योऽपि यजमानः स्विष्टकृद्भ्योऽग्निभ्योऽश्वस्य लोहितं जुहोति चेत्स होमः शत्रूणामाभिभवाय भवति।

अत्र जुहूं बाधितुं साधनान्तरं विधत्ते—

गोमृगकण्ठेनं प्रथमामाहुतिं जुहोति। पशवो वै गोमृगः। रुद्रोऽग्निः स्विष्टकृत्। रुद्रादेव पशूनन्तर्दधाति। अथो अत्रैषाऽऽहुतिर्हूयते। न तत्र रुद्रः पशूनभिमन्यते (३), इति।

अश्वं तूपरं गोमृगमित्युक्तेषु मध्ये यो गोमृगस्तस्य कण्ठप्रदेशो विशसनकाले पृथगवस्थापनीयः। अत एव सूत्रकारेणोक्तम्—"प्रजापतयेऽश्वस्य तूपरस्य गोमृगस्यास्थिलोमत्वचमसंभिन्दतः सूकरविशसनं विशसतेति संप्रैषवत्कुर्वन्ति। अश्वस्य लोहितं स्विष्टकृदर्थं निदधाति शफं गोमृगकण्ठं च" इति। तेन गोमृगकण्ठेन प्रथमा स्विष्टकृदाहुतिर्होतव्या। गोमृगस्य पशुरूपत्वात्स्विष्टकृदग्नेश्चोग्रत्वेन रुद्ररूपत्वादनेन कण्ठहोमेन तस्माद्रुद्रात्सर्वान्पशूनन्तर्हितान्करोति। अपि च यस्मिन्देश एषा स्विष्टकृदाहुतिर्हूयते तस्मिन्देशे पशून्रुद्रो न हिनस्ति।

द्वितीयाहुतेः साधनान्तरं विधत्ते—

अश्वशफेनं द्वितीयामाहुतिं जुहोति। पशवो वा एकशफम्। रुद्रोऽग्निः स्विष्टकृत्। रुद्रादेव पशूनन्तर्दधाति। अथो यत्रैषाऽऽहुतिर्हूयते। न तत्र रुद्रः पशूनभिमन्यते, इति।

एकशफमश्वशरीरम्। अन्यत्पूर्ववद्व्याख्येयम्।

तृतीयाहुतेः साधनान्तरं विधत्ते—

अयस्मयेन कमण्डलुना तृतीयाम्। आहुतिं जुहोत्यायास्यो वै प्रजाः। रुद्रोऽग्निः स्विष्ट-

१ क. °मतिर्यगसं°।

कृत् । रुद्रादेव प्रजा अन्तर्दधाति । अथो
यत्रैषाऽऽहुतिर्हूयते । न तत्र रुद्रः प्रजा अभि-
मन्यते (४), इति ।

दधात्यभवन्मन्यते प्रजा अन्तर्दधाति द्वे च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके नवमाध्याय
एकादशोऽनुवाकः ॥ ११ ॥

---

अयसा लोहेन निर्मितः कमण्डलुरयस्मयः । अयास्यनामकेन महर्षिणा सृष्टत्वात्प्रजा आयास्यः । अन्यत्पूर्ववद्व्याख्येयम् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरी-
यब्राह्मणभाष्ये तृतीयकाण्डे नवमप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

अथ द्वादशोऽनुवाकः ।

---

एकादशे शरीरहोमाः स्विष्टकृद्धोमाश्चाभिहिताः । द्वादशे तदुभयहोममध्यवर्त्यश्वस्तोमीयहोम उच्यते । तमिमं विधत्ते—

अश्वस्य वा आलब्धस्य मेध उदक्रामत् ।
तदश्वस्तोमीयमभवत् । यदश्वस्तोमीयं
जुहोति । स मेधमेवैनमालभते, इति ।

योऽयमश्व आलब्धस्तस्य संबन्धी मेधः सार उदक्रामत् । स च सारोऽश्वस्तोमीयनामकं मन्त्रजातमभवत् । अश्वस्य स्तुतिर्येषु यदक्रन्द इत्यादिषु त्रिष्वनुवाकेषु श्रूयते तेऽनुवाका अश्वस्तोमास्तेषु श्रूयमाणं मन्त्रजातमश्वस्तोमीयम् । तद्धोमेन सारसहितमेवाश्वमालब्धवान्भवति ।

तत्र द्रव्यं विधत्ते—

आज्येन जुहोति । मेधो वा आज्यम् । मेधोऽ-

१ क. °र्तिनोऽश्व° । २ क. °होमान्विधत्ते ।

श्वस्तोमीयम्। मेधेनैवास्मिन्मेधं दधाति, इति।

द्रव्यमन्त्रयोः सारत्वात्तेनैव सारेण यजमाने सारं संपादयति।

मन्त्रसंख्यां विधत्ते—

षट्त्रिंशतं जुहोति। षट्त्रिंशदक्षरा बृहती (१)। बार्हताः पशवः। सा पशूनां मात्रा। पशूनेव मात्रया समर्धयति, इति।

यद्यपि यदक्रन्द इत्याद्यनुवाकेषु, ऋचः पञ्चत्रिंशदेवा आम्नातास्तथाऽपि क्रमैरत्यक्रमीदित्यनेन षट्त्रिंशत्संख्या पूरणीया। अत एव सूत्रकार आह—"क्रमैरत्यक्रमीदित्येतां षट्त्रिंशतम्" इति। बृहतीच्छन्दसोऽक्षराणां षट्त्रिंशत्संख्या पशवश्च तेन च्छन्दसा लभ्यत्वाद्बार्हताः। अतः सा संख्या पशूनां मात्रा प्रमाणम्। ततः षट्त्रिंशन्मन्त्रहोमेन पशून्सर्वान्स्वयोग्येन प्रमाणेन समर्धयति।

तासामाहुतीनां न्यूनाधिकसंख्यानिराकरणेन पूर्वोक्तां संख्यां प्रशंसति—

ता यद्भूयसीर्वा कनीयसीर्वा जुहुयात्। पशून्मात्रया व्यर्धयेत्। षट्त्रिंशतं जुहोति। षट्त्रिंशदक्षरा बृहती। बार्हताः पशवः। सा पशूनां मात्रा। पशूनेव मात्रया समर्धयति (२), इति।

पूर्ववद्व्याख्येयम्।

इमा नुकमित्यादीनां द्विपदामृचां होमं विधत्ते—

अश्वस्तोमीयꣳ हुत्वा द्विपदा जुहोति। द्विपाद्वै पुरुषो द्विप्रतिष्ठः। तदेनं प्रतिष्ठया समर्धयति, इति।

द्वौ पादौ यस्या ऋचः सा द्विपदा। तादृशीस्तिस्र ऋचो जुहुयात्। ता ऋचः सूत्रकार उदाजहार—"इमा नुकं भुवना सीषधेमेति द्विपदा अन्ततो हुत्वा"। एताश्चारण्यकाण्डे समाम्नाताः। पुरुषस्य पादद्वयोपेतत्वाद्द्वाभ्यामेव पादाभ्यां स्थैर्येण प्रतिष्ठातुं शक्यत्वाच्चैनं यजमानं तेन होमेन प्रतिष्ठापयति।

अत्र विचारेण होमयोः पौर्वापर्यं निश्चिनोति——

तदा॑हुः । अश्वस्तो॒मीयं॑ पूर्वँ॑ होत॒व्या॑ँ३ द्वि॒प- दा३ इति॑ । अश्वो॒ वा अ॑श्वस्तो॒मीय॑म् । पुरु॑षो द्वि॒पदाः॑ । अ॒श्व॒स्तो॒मीयँ॑ हु॒त्वा द्वि॒पदा॑ जु॒होति । तस्मा॑द्द्वि॒पाच्चतु॑ष्पादमत्ति । अथो॑ द्वि॒पद्ये॒व चतु॑ष्प॒दः प्रति॑ष्ठापयति, इति ।

तत्र होमपौर्वापर्यविषये विचारकाः कस्य होमस्य पूर्वत्वं युक्तमित्येवं विचार्याश्वस्तोमीयस्य पूर्वत्वं निश्चिन्वन्ति । तस्याश्वसंबन्धेनाश्वरूपत्वात्, द्विपदानां च पुरुषसंबन्धेन तद्रूपत्वादश्वस्तोमीयस्य पूर्वभावित्वे सति चतुष्पादमश्वं भोग्यं प्रथमतः संपाद्य द्विपात्पुरुषो भुङ्क्ते । द्विपदानां पश्चाद्भावित्वेन द्विपदि पुरुषे चतुष्पदः पशून्प्रतिष्ठापयति ।

यथाऽश्वस्तोमीयहोमादूर्ध्वं द्विपदाहोमस्तथा तद्धोमादप्यूर्ध्वं शरीरहोमादिशङ्कां वारयितुं निषेधति——

द्वि॒पदा॑ हु॒त्वा । नान्यामुत्त॑रा॒माहु॑तिं जुहुयात् । यद॒- न्यामुत्त॑रा॒माहु॑तिं जुहुयात् । प्र प्रति॑ष्ठायां॒श्च्यवेत । द्वि॒पदा॑ अ॒न्ततो॒ जु॑होति॒ प्रति॑ष्ठित्यै (३), इति ।

बृ॒हत्यर्धयति स्थापयति॒ पश्वं च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके नवमाध्याये द्वादशोऽनुवाकः ॥ १२ ॥

---

द्विपदाहोमादूर्ध्वं स्विष्टकृद्धोमात्पुरा नान्या काचिदाहुतिर्होतव्या । तस्मादुपहोमानामन्ते द्विपदाहुतय एव ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे नवमप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

अथ त्रयोदशोऽनुवाकः ।

द्वादशेऽश्वस्तोमीयहोमोऽभिहितः । त्रयोदशे तु सावित्रमष्टाकपालं प्रातर्निर्वपतीत्याद्यनुवाकोक्तास्विष्टिषु संवत्सरानुष्ठानरूपविशेषोऽभिधीयते । यदुक्तं सूत्रकारेण—"एवमेतानि सावित्रादीनि संवत्सरं कर्माणि क्रियन्ते" इति। तदिदं विधत्ते—

प्रजापतिरश्वमेधमसृजत । सोऽस्मात्सृष्टोऽपाक्रामत् । तं यज्ञक्रतुभिरन्वैच्छत् । तं यज्ञक्रतुभिर्नान्वविन्दत् । तमिष्टिभिरन्वैच्छत् । तमिष्टिभिरन्वविन्दत् । तदिष्टीनामिष्टित्वम् । यत्संवत्सरमिष्टिभिर्यजते । अश्वमेव तदन्विच्छति, इति।

पुरा प्रजापतिरश्वमेधसाधनमश्वमसृजत। स च सृष्टोऽश्वो मरणभीत्या प्रजापतेरपाक्रामत् । तमपक्रान्तमश्वं यूपवद्भिर्यज्ञक्रतुभिः प्राप्तुमन्वेषणं कृतवान् । बन्धनहेतोर्यूपाद्भीतं तमश्वं यूपवद्भिर्नाऽऽलभत । ततः प्रजापतिर्विचार्य यूपराहिताभिरिष्टिभिरन्विष्य लब्धवान् । इष्यत इच्छापूर्वकं लभ्यत आभिरितीष्टिनाम संपन्नम् । तस्माद्दीक्षायाः पूर्वमेकं संवत्सरं निरन्तरमिष्टिभिर्यजते । तेनाश्वमन्विष्य लभते ।

तास्विष्टिषु देवतां प्रशंसति—

सावित्रियो भवन्ति (१) । इयं वै सविता । यो वा अस्यां नश्यति यो निलयते । अस्यां वाव तं विन्दन्ति । न वा इमां कश्चनेत्याहुः । तिर्यङ्नोर्ध्वोऽत्येतुमर्हतीति । यत्सावित्रियो भवन्ति । सवितृप्रसूत एवैनमिच्छति, इति ।

तिस्रोऽपीष्टयः सवितृदेवताकाः । तथा च पूर्वप्रपाठके समाम्नातम्—"सावित्रमष्टाकपालं प्रातर्निर्वपति । सवित्रे प्रसवित्र एकादशकपालं मध्यंदिने । सवित्र

आसवित्रं द्वादशकपालमपराह्णे" इति। तासु यः सविता देवः सोऽयं भूमिस्वरूपः। तत्कथमिति तदेवोपपाद्यते—यः कश्चित्पदार्थो भूम्यां नश्यति पलाय्य दृष्टिगोचरतां न प्राप्नोति यश्च निलयते स्वदेश एव निलीनो भवति। अत एव रथ्यादौ सुरक्षितस्तिष्ठति। तिर्यग्देहो गवादिरूर्ध्वदेहो मनुष्यो वा. तत्सर्वं नष्टं विलीनं च पुनरन्विष्य भूम्यामेव लभते। कश्चिदपि तिर्यगिमां भूमिमत्येतुं नार्हति कश्चिद-प्यूर्ध्वदेहो मनुष्य इमां भूमिमत्येतुं नार्हतीत्येवमभिज्ञा आहुः। तस्माद्भूमिस्वरूप-सवितृदेवताकास्विष्टिषु कृतासु तेन सवित्राऽनुज्ञात एव सन्नेनमश्वं भूम्यामिच्छति प्राप्नोति।

पूर्वप्रपाठके विहितसायंधृतिहोममनूद्य प्रशंसति—

ईश्वरो वा अश्वः प्रमुक्तः परां परावतं
गन्तोः। यत्सायंधृतीर्जुहोति। अश्वस्य
यत्यै धृत्यै (२), इति।

योऽयं संवत्सरमात्रं स्वेच्छासंचारार्थमुत्सृष्टोऽश्वः सोऽयं परां परावतमत्यन्तं दूरं गन्तुं समर्थः। तस्मादिह धृतिः स्वाहेत्यादिभिः सायंधृतिभिराहुतिभिरश्वः क्वचिन्नियतो धृतो भवति

इष्टीर्धृतीश्च पुनः प्रशंसति—

यत्प्रातरिष्टिभिर्यजते। अश्वमेव तद-
न्विच्छति। यत्सायंधृतीर्जुहोति।
अश्वस्यैव यत्यै धृत्यै। तस्मात्सायं
प्रजाः क्षेम्या भवन्ति, इति।

याः प्रातरिष्टयस्ताभिरश्वो लभ्यते। याः सायंधृतयस्ताभिरश्वः क्वचिद्रक्ष-काणां निवासगृहे नियतो धृतो भवति। यस्मादेवं तस्माल्लोकेऽपि प्रजाः सायं-काले गोमहिषादीन्स्वगृहेषु बद्ध्वा प्रजाः क्षेम्याः क्षेमयोग्या न क्वापि गवादयो गता इत्येवं निश्चिता भवन्ति।

इष्टिं पुनः प्रशंसति—

यत्प्रातरिष्टिभिर्यजते। अश्वमेव तदन्वि-

च्छति। तस्माद्दिवा नष्टैष एति, इति ।

यस्मादश्वान्वेषणार्था इष्टयो दिवा प्रातःकाले क्रियन्ते तस्माल्लोकेऽपि नष्टैषो नष्टस्य गवादेरन्वेष्टा पुरुषो दिवैवान्वेषणार्थं संचरति ।

पुनरपि मिलित्वा प्रशंसति—

यत्प्रातरिष्टिभिर्यजते सायंधृतीर्जुहोति । अहो-
रात्राभ्यामेवैनमन्विच्छति । अथो अहोरात्रा-
भ्यामेवास्मै योगक्षेमं कल्पयति ( ३ ), इति ।

भवन्ति धृत्या एनमन्विच्छन्त्येक च ।

**इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके नवमाध्याये त्रयोदशोऽनुवाकः ॥ १३ ॥**

कालद्वयेऽनुष्ठानादहोरात्रयोरन्वेषणसाधनत्वम् । अत एवास्मै यजमानायाहोरात्राभ्यां योगक्षेमकल्पनम् । अलब्धस्य लाभो योगः । लब्धस्य रक्षणं क्षेमः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे नवमप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

अथ चतुर्दशोऽनुवाकः ।

त्रयोदशे संवत्सरानुष्ठानमिष्टीनां विहितम् । तास्विष्टिषु गानं चतुर्दशेऽभिधीयते । तदेतद्विधत्ते—

अप वा एतस्माच्छ्री राष्ट्रं क्रामति । योऽश्वमे-
धेन यजते । ब्राह्मणौ वीणागाथिनौ गायतः ।
श्रिया वा एतद्रूपम् । यद्वीणा । श्रियमेवास्मि-
न्तद्धत्तः । यदा खलु वै पुरुषः श्रियमश्नुते ।
वीणाऽस्मै वाद्यते, इति ।

नियमं स्वीकृतवतो राज्ञश्चिरकालं राजोपचाराभावेन श्रीरस्मादपगच्छति ।

क्रतुसमाप्तिपर्यन्तमध्वर्योरेव राजत्वात् । राष्ट्रमप्यस्मादपगच्छति । तदुभयपरिहारार्थं वीणया गातुं कुशलौ द्वौ ब्राह्मणौ गायेताम् । वीणा हि श्रियः स्वरूपम् । तस्माद्दस्मिन्राज्ञि तौ श्रियमेव संपादयतः । वीणायाः श्रीरूपत्वं लोके प्रसिद्धम् । दरिद्रोऽपि यदा श्रियं प्राप्नोति तदानीमस्य सुखार्थं गायकैर्वीणा वाद्यते ।

अत्र ब्राह्मणद्वयपक्षं दूषयित्वा द्वितीयगायकं क्षत्रियं विधत्ते––

तदाहुः । यदुभौ ब्राह्मणौ गायेताम् (१) ।
प्रभ्रꣳशुकाऽस्माच्छ्रीः स्यात् । न वै ब्राह्मणे
श्री रमत इति । ब्राह्मणोऽन्यो गायेत् ।
राजन्योऽन्यः । ब्रह्म वै ब्राह्मणः । क्षत्रꣳ
राजन्यः । तथा हास्य ब्रह्मणा च क्षत्रेण
चोभयतः श्रीः परिगृहीता भवति, इति ।

तत्र गानविषये केचिदभिज्ञा एवमाहुः । ब्राह्मणयोरेव गाने श्रीर्भ्रंष्टा स्यात् । ब्राह्मणो हि तपःस्वाध्यायादौ प्रवृत्तः श्रियं पालयितुं न क्षमते । तस्मादेको ब्राह्मण इतरो राजन्यश्च गायेत् । तत्र ब्राह्मणो ब्रह्ममन्त्रात्मकः । राजन्यः क्षत्रबलात्मकः । तथा सति ब्राह्मणो मन्त्रसामर्थ्येन क्षत्रियः शौर्येण चोभयेनापि प्रकारेण च श्रीः स्वीकृता भवति ।

अथ कालविशेषं विधत्ते––

तदाहुः । यदुभौ दिवा गायेताम् । अपास्माद्राष्ट्रं
क्रामेत् (२) । न वै ब्राह्मणे राष्ट्रꣳ रमत इति ।
यदा खलु वै राजा कामयते । अथ ब्राह्मणं
जिनाति । दिवा ब्राह्मणो गायेत् । नक्तꣳ
राजन्यः । ब्रह्मणो वै रूपमहः । क्षत्रस्य
रात्रिः । तथा हास्य ब्रह्मणा च क्षत्रेण

चोभयतो राष्ट्रं परिगृहीतं भवति, इति।

तत्र गानविषये केचिदभिज्ञा एवमाहुः। ब्राह्मणराजन्यावुभावपि दिवैव यदि गायेतां तदानीं रात्रौ रक्षकाभावाद्राष्ट्रमस्माद्यजमानाद्भ्रश्येत्। तत्रेयमुपपत्तिः। न हि ब्राह्मणे राष्ट्रं क्रीडते। कुत एतदिति चेदुच्यते। ब्राह्मणे राष्ट्रं पालयति सति यदा राजा राष्ट्रं मे भूयादिति कामयते तदानीमेव ब्राह्मणं जित्वा तत्स्वाधीनं करोति। अह्नः प्रथमभावित्वात्तत्र गानकर्तृत्वं ब्राह्मणस्य मुख्यम्। अतो ब्राह्मणस्य योग्य एक एव कालो गानस्य पर्याप्त इति द्वयोः कालयोर्द्वाभ्यां गातव्यम्। तत्रोज्ज्वलत्वादग्रिमभवत्वाच्च ब्राह्मणस्य रूपमहः। अन्धकारावृतत्वाच्चोरादिभयुक्तत्वाच्च रक्षायामधिकृतस्य क्षत्रस्य स्वरूपं रात्रिः। तथा कालद्वये गाने सति मन्त्रेण बलेन चोभयविधेन कालद्वये राष्ट्रं परिगृहीतं भवति।

तत्र दिवसे सावित्रीष्टिसंबन्धिनः स्विष्टकृतः पुरा ब्राह्मणेन गातव्यमर्थं दर्शयति—

इत्यददा इत्ययजथा इत्यपच इति ब्राह्मणो

गायेत्। इष्टापूर्तं वै ब्राह्मणस्य (३)।

इष्टापूर्तेनैवैनꣲ स समर्धयति, इति।

इतिशब्दाः प्रकारवाचिनः। हे राजंस्त्वमनेन प्रकारेण ब्राह्मणेभ्यो गोभूहिरण्यादिकं दत्तवानसि। अनेन प्रकारेण वाजपेयराजसूयद्वादशाहादिभिरिष्टवानसि। अनेन प्रकारेण शाकसूपपायसादीन्यन्नानि ब्राह्मणार्थं पक्वानसि। एतच्च गातव्यस्यार्थस्योपलक्षणम्। ततो ब्राह्मणः स्वोचितार्थप्रतिपादकैर्गद्यैः पद्यैश्च गायेत्। इष्टापूर्तं श्रौतस्मार्ते दैवे पित्र्ये वा ब्राह्मणस्योचिते। अत ईदृशगानेन यजमानमिष्टापूर्ताभ्यां समृद्धं करोति।

अथ सायंधृतिषु हूयमानासु राजन्येन गातव्यमर्थं दर्शयति—

इत्यजिना इत्ययुध्यथा इत्यमुꣲ संग्राम-

महन्निति राजन्यः। युद्धं वै राजन्यस्य।

युद्धेनैवैनꣲ स समर्धयति, इति।

अत्रापीतिशब्दाः प्रकारवाचिनः। अनेन प्रकारेण पृथुभरतभगीरथयुधि-

ष्ठिरादिभिः सुकृतकर्मभिः समानस्त्वं शत्रूञ्जितवानसि । अनेन प्रकारेण करितुरगरथपदातिसमेतः शरचापतोमरकरवालादिधारिभिः शूरभटैः परिवृतस्त्वं शत्रुभिः सह युद्धं कृतवानसि । अनेन प्रकारेण युधिष्ठिरदुष्ष्यन्तादिवन्महावीरपुरुषसहस्राधिष्ठितममुं संग्रामं प्राप्य काश्मीरं मागधं पौण्ड्रं च राजानं निशितासिमात्रसहायस्त्वं हतवानसि । तदेतद्युद्धविषयमेव गानं राजन्यस्योचितम् । अत एव तद्विषयैर्गद्यैः पद्यैश्च राजन्यो गायेत् । तथा सत्येनं राजानं युद्धेन समृद्धं करोति ।

एकैकस्य गीतित्रयं विधत्ते—

अक्लृप्ता वा एतस्यर्तव इत्याहुः। योऽश्वमेधेन यजत इति । तिस्रोऽन्यो गायति तिस्रोऽन्यः । षट्संपद्यन्ते । षड्वा ऋतवः । ऋतूनेवास्मै कल्पयतः, इति ।

अश्वमेधयाजिनो राज्ञस्तत्तदृतूचितराजोपचाराभावादृतवोऽक्लृप्ताः स्वोचितभोगसमर्था न भवन्तीत्यभिज्ञा आहुः । अतस्तत्समाधानाय द्वयोरेकैकस्तिस्रो गाथा गायेत् । तथा सति गाथानां षट्संख्यासंपत्त्या षडप्यृतूनस्मै यजमानाय समर्थान्कुरुते ।

गायकाभ्यां दानं विधत्ते—

ताभ्याꣳ सꣳस्थायाम् । अनोयुक्ते च शते च ददाति । शतायुः पुरुषः शतेन्द्रियः । आयुष्येवेन्द्रिये प्रतितिष्ठति, इति ।

गायेतां क्रामेद्ब्राह्मणस्य कल्पयतश्चत्वारि च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके नवमाध्याये चतुर्दशोऽनुवाकः ॥ १४ ॥

संस्थायां यथोक्तगानयुक्तसंवत्सरानुष्ठानस्य समाप्तौ सत्यामनोयुक्ते अनसि शकटे बद्धे द्वे गावौ शते च पुनरपि गवां शतद्वयं च ताभ्यां ब्राह्मणराजन्याभ्यां दद्यात् । पुरुषस्य शतसंवत्सरपरिमितायुर्योगाच्छतसंख्याकनाडीसंचारिशतेन्द्रि-

यवृत्तियोगाच्चानयोर्गौशतसंख्या । यजमान आयुषीन्द्रिये च प्रतितिष्ठति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीय-
ब्राह्मणभाष्ये तृतीयकाण्डे नवमप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

---

अथ पञ्चदशोऽनुवाकः ।

---

चतुर्दशे ब्राह्मणराजन्ययोर्गानमुक्तम् । पञ्चदशे त्ववभृथविषया होमविशेषा उच्यन्ते । तं होमं विधत्ते—

सर्वेषु वा एषु लोकेषु मृत्यवोऽन्वायत्ताः । तेभ्यो यदाहुतीर्न जुहुयात् । लोके लोक एनं मृत्युर्विन्देत् । मृत्यवे स्वाहा मृत्यवे स्वाहेत्यभिपूर्वमाहुतीर्जुहोति । लोकाल्लोकादेव मृत्युमवयजते । नैनं लोके लोके मृत्युर्विन्दति, इति ।

य एते लोका जनानां निवासस्थानानि तेषु सर्वेष्वपि मृत्यवो मरणहेतवो व्याध्यादयोऽन्वायत्ता अनुप्रविश्य स्थिताः । तेभ्यो मृत्युभ्य आहुत्यकरणेनाश्वमेधयाजिनमेनं तत्तत्स्थाने मृत्युर्विन्देत् । तस्मात्तत्परिहाराय सर्वान्मृत्युहेतूनुद्दिश्य प्रत्येकं मृत्यवे स्वाहेत्यनुक्रमेणाऽऽहुतीर्जुहुयात् । ताभिराहुतिभिस्तत्तत्स्थानादेव मृत्युं विनाशयति । तत एनं यजमानं क्वापि स्थाने मृत्युर्न लभते ।

इदानीं मृत्यवे स्वाहेति मन्त्रस्य वीप्सया पूर्वोक्तं बह्वाहुतिपक्षं निराकृत्यैकाहुतिपक्षं विधत्ते—

यदमुष्मै स्वाहाऽमुष्मै स्वाहेति जुहुयात्संचक्षीत । बहुं मृत्युममित्रं कुर्वीत । मृत्यवे स्वाहेत्येकस्मा एवैकां जुहुयात् । एको वा अमुष्मिँल्लोके मृत्युः (१) । अशनया

मृत्युरेव । तमेवामुष्मिँल्लोकेऽवयजते, इति ।

यदि प्रतिमृत्युहेतुमुद्दिश्यामुष्मै व्याधिरूपाय मृत्यवे स्वाहाऽमुष्मै दारिद्र्यरूपाय मृत्यवे स्वाहेत्येवं होमं कुर्वाणः पुरुषस्तत्तद्विशेषनामाऽऽचक्षीत तदानीममित्रं शत्रुरूपं बाधकं मृत्युं बहुविधं संपादयेत् । ततो बह्वाहुतिपक्षं परित्यज्य मृत्यवे स्वाहेत्येकेनैव मन्त्रेणैकस्मा एव देवाय मृत्युसामान्यरूपिण एकामेवाऽऽहुतिं जुहुयात् । स्वर्गलोके हि मृत्युरेक एव । कोऽसाविति चेदुच्यते । योऽयमशनया मृत्युः क्षुधात्मको मृत्युः स एवैको न तु ज्वरादयस्तत्र सन्ति । अत एकयाऽऽहुत्या स्वर्गलोके तमेवाशनयारूपं मृत्युं विनाशयति ।

आहुत्यन्तरं विधत्ते—

भ्रूणहत्यायै स्वाहेत्यवभृथ आहुतिं जुहोति ।
भ्रूणहत्यामेवावयजते, इति ।

त्रिवेदिब्राह्मणः कल्पसहितः स्वशाखाध्यायी वा गर्भो वा भ्रूणः । तस्य हत्याभिमानिन्यै स्वाहुतमिदमस्तु । अनयाऽऽहुत्या दोषं विनाशयति ।

इमामाहुतिमाक्षिपति—

तदाहुः । यद्भ्रूणहत्याऽपात्र्याऽथ । कस्मा-
द्यज्ञेऽपि क्रियत इति, इति ।

तत्र भ्रूणहत्याविषये चोद्यवादिन एवमाहुः । यद्यस्मात्कारणाद्या भ्रूणहत्या सेयमपात्र्या पुरुषस्यापात्रीकरणमर्हति । कर्मानुष्ठानादिषु पात्रं योग्यं सन्तं पुरुषमयोग्यं करोति । अथैवं सति कस्मात्कारणादस्मिन्यज्ञमध्येऽपि तस्या भ्रूणहत्याया आहुतिः क्रियते । न त्वियं कर्तुं युक्ता किंत्वधिकारसिद्धये कूष्माण्डादिहोमवत्कर्मादावेवाऽऽहुतिः कर्तव्येति चोद्यम् ।

अत्रोत्तरं दर्शयति—

अमृत्युर्वा अन्यो भ्रूणहत्याया इत्याहुः ।
भ्रूणहत्या वाव मृत्युरिति । यद्भ्रूणहत्यायै
स्वाहेत्यवभृथ आहुतिं जुहोति ( २ ) ।

मृत्युमेवाऽऽहुत्या तर्पयित्वा परिपाणं कृत्वा ।
भ्रूणघ्ने भेषजं करोति, इति ।

अत्र शास्त्रार्थरहस्याभिज्ञा एवमाहुः—भ्रूणहत्याया इतरो यः पापविशेष एतामपेक्ष्य स सर्वोऽप्यमृत्युरेव । पापान्तरेणेदृशबाधाभावात् । तस्मादतिबाधकत्वाद्भ्रूणहत्यैव मृत्युरिति तेषां वचनम् । एवं सत्यवभृथाहुतिव्यतिरेकेण तस्य प्रतीकारो नास्ति । तस्मात्कर्ममध्येऽप्यवभृथे यद्येतामाहुतिं जुहुयात्तदानीमनयाऽऽहुत्या मृत्युदेवतामेव तृप्तां कृत्वा यजमानं च परिपाणं सर्वतः पात्रं कृत्वा भ्रूणघ्ने भ्रूणहत्यारूपाय पाप्मने भेषजं शमनं करोति ।

इदानीं कैमुतिकन्यायेन तामाहुतिं प्रशंसति—

एताꣳ ह वै मुण्डिभ औदन्यवः । भ्रूणहत्यायै प्रायश्चित्तिं विदांचकार । यो हास्यापि प्रजायां ब्राह्मणꣳ हन्ति । सर्वस्मै तस्मै भेषजं करोति, इति ।

उदकमात्मन इच्छतीत्युदन्युर्जलमात्राहारः कश्चित्तपस्वी मुनिस्तस्य पुत्र औदन्यवः । तस्य च मुण्डिभ इति नामधेयम् । स चाश्वमेधावभृथमन्तरेण केवलामप्येतामाहुतिं भ्रूणहत्यायाः प्रायश्चित्तं मन्यते । तिष्ठतु मुण्डिभो वयं त्वेवं मन्यामहे । अस्याश्वमेधयाजिनः प्रजायां पुत्रभृत्यादिरूपायामपि यः कश्चिद्ब्राह्मणं हन्ति तस्मै सर्वस्मै ब्रह्मवधदोषायेमामाहुतिं भेषजं करोति । किमु वक्तव्यमवभृथेऽनुष्ठीयमानेऽश्वमेधयाजिनो भ्रूणहत्यां नाशयतीति ।

तृतीयामाहुतिं विधत्ते—

जुम्बकाय स्वाहेत्यवभृथ उत्तमामाहुतिं जुहोति । वरुणो वै जुम्बकः । अन्तत एव वरुणमवयजते, इति ।

जुम्बकशब्दस्य वरुणवाचित्वात्तदीयोत्तमाहुतिहोमेन कर्मान्ते वरुणमेव विनाशयति । अतो बाधकविनाशेन सर्वोपद्रवपरिहारः ।

होमाधारं विधत्ते--

खलतेर्विक्लिधस्य शुक्लस्य पिङ्गाक्षस्य मूर्धन्जुहोति। एतद्वै वरुणस्य रूपम्। रूपेणैव वरुणमवयजते (२), इति।

लोके मृत्युर्जुहोति मूर्धन्जुहोति द्वे च।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके नवमाध्याये पञ्चदशोऽनुवाकः॥ १५॥

खलतिः केशरहितमस्तकोपेतः। विक्लिधः स्वेदनशीलशरीरो विक्लिन्नदेहो वा। शुक्लः श्वित्री। पिङ्गाक्षः पिङ्गलवर्णाक्षियुक्तः। तस्य शिरस्येतामाहुतिं जुहुयात्। एतत्खलत्यादियुक्तं शरीरं वरुणस्य वारकस्य पापस्य रूपमतस्तदुचितेनैव रूपेण वरुणं पापरूपमवयजते विनाशयति।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे नवमप्रपाठके पञ्चदशोऽनुवाकः॥१५॥

अथ षोडशोऽनुवाकः।

पञ्चदशेऽवभृथहोमविशेषा उक्ताः। षोडश उपाकरणमन्त्रव्याख्यानादयोऽभिधीयन्ते। यदुक्तं सूत्रकारेण--"नमो राज्ञे नमो वरुणायेति वेतसशाखयाऽश्वतूपरगोमृगानग्रिष्ठ उपाकरोति" इति। तस्य मन्त्रस्य प्रथमभागं व्याचष्टे--

वारुणो वा अश्वः। तं देवतया व्यर्धयति। यत्प्राजापत्यं करोति। नमो राज्ञे नमो वरुणायेत्याह। वारुणो वा अश्वः। स्वयैवैनं देवतया समर्धयति, इति।

---

१ क. विक्लिन्नाङ्गो।

अश्वस्याब्योनित्वाद्वरुणस्य चापांपतित्वादयमश्वो वारुणः । यद्येनं प्राजापत्यं कुर्यात्तदा तमश्वं वरुणदेवतया नियोजयेत् । तत्परिहारार्थमुपाकरणकाले वरुणस्य नमस्कारे कृते सति स्वयैव वरुणदेवतया तमश्वं समृद्धं करोति ।

द्वितीयभागस्य तात्पर्यं दर्शयति—

नमोऽश्वाय नमः प्रजापतय इत्याह । प्राजापत्यो वा अश्वः । स्वयैवैनं देवतया समर्धयति, इति ।

अश्वस्य प्रजापत्यक्षिजन्यत्वेन प्राजापत्यत्वादश्वप्रजापत्योर्नमस्कारे कृते सत्येनमश्वं स्वकीययैव देवतया समृद्धं करोति ।

तृतीयभागं व्याचष्टे—

नमोऽधिपतय इत्याह (१) । धर्मो वा अधिपतिः । धर्ममेवावरुन्धे, इति ।

धर्माभिमानी देव एवानुष्ठानस्याधिपतिरिति कृत्वा तन्नमस्कारेण धर्ममेव प्राप्नोति ।

चतुर्थभागं व्याचष्टे—

अधिपतिरस्यधिपतिं मा कुर्वधिपतिरहं प्रजानां भूयासमित्याह । आधिपतिमेवैनꣳ समानानां करोति, इति ।

हेऽश्व त्वमनुष्ठानस्याधिपतिरसि, अतो मामधिपतिं कुरु त्वत्प्रसादादहं प्रजानामधिपतिर्भूयासम् । एतत्पाठेन समानानां मध्ये यजमानमधिपतिं करोति ।

पञ्चमभागं व्याचष्टे—

मां धेहि मयि धेहीत्याह । आशिषमेवैतामाशास्ते, इति ।

मामस्मिन्कर्मणि स्थापय मयि चैतत्फलं वा हेऽश्व स्थापय । अनेन मन्त्रभागपाठेन कर्मतत्फलसिद्धिरूपामाशिषमेव प्रार्थयते ।

---

१ क. ख. °श्वं स्वयैव वरु° ।

नमो राज्ञ इत्यनुवाकस्य शेषे समाम्नातानां त्रयाणां मन्त्राणां विनियोगं दर्शयति—

उपाकृताय स्वाहेत्युपाकृते जुहोति ।
आलब्धाय स्वाहेति नियुक्ते जुहोति ।
हुताय स्वाहेति हुते जुहोति । एषां
लोकानामभिजित्यै ( २ ), इति ।

उपाकृते देवतायै संकल्पिते । नियुक्ते यूपे बद्धे । हुते वह्नौ प्रक्षिप्ते । मन्त्राणामपि स एवार्थः । होमत्रयेण लोकत्रयजयो भवति ।

यदुक्तं सूत्रकारेण—"आग्नेय ऐन्द्राग्न आश्विनस्ते विशालयूप आलभ्यन्ते" इति । तदेतद्विधत्ते—

प्र वा एष एभ्यो लोकेभ्यश्च्यवते । योऽ-
श्वमेधेन यजते । आग्नेयमैन्द्राग्नमाश्वि-
नम् । तान्पशूनालभते प्रतिष्ठित्यै, इति ।

अश्वमेधयाजिनो बह्वपराधसंभवाल्लोकत्रयात्प्रच्युतिः स्यात् । तन्निवराणार्थमाग्नेयादिपशुत्रयालम्भे सति प्रतिष्ठितिर्भवति ।

आग्नेयं प्रशंसति—

यदाग्नेयो भवति । अग्निः सर्वा
देवताः । देवता एवावरुन्धे, इति ।

ते देवा अग्नौ तनूः संन्यधत्तेत्युक्तत्वादग्निः सर्वदेवतात्मकः । तस्मादाग्नेयेन सर्वदेवताः प्राप्नोति ।

ऐन्द्राग्नं प्रशंसति—

ब्रह्म वा अग्निः । क्षत्त्रमिन्द्रः । यदैन्द्राग्नो
भवति ( ३ ) । ब्रह्मक्षत्त्रे एवावरुन्धे, इति ।

अग्नेर्ब्राह्मणजात्यभिमानित्वाद्ब्राह्मणरूपत्वम् । इन्द्रस्य च क्षत्रियजात्यभिमानित्वात्क्षत्त्ररूपत्वम् । तस्मादैन्द्राग्नेन जातिद्वयं स्वाधीनं करोति ।

आश्विनं प्रशंसति—

यदाश्विनो भवति । आशिषामवरुद्ध्यै, इति ।

आशिषां प्रार्थनीयानां फलानाम् ।

पशूनां त्रित्वं प्रशंसति—

त्रयो भवन्ति । त्रयं इमे लोकाः ।

एष्वेव लोकेषु प्रतितिष्ठति, इति ।

यदुक्तं सूत्रकारेण—“ तेषां पशुपुरोडाशानामग्नयेऽंहोमुचेऽष्टाकपाल इति दशहविषं मृगारेष्टिमनुनिर्वपति । समानं तु स्विष्टकृदिडामग्नेर्मन्वे प्रथमस्य प्रचेतस इति यथालिङ्गं याज्यानुवाक्या भवन्ति ” इति । तत्र सप्तमकाण्डोक्तामेकामिष्टिं विधत्ते—

अग्नयेऽंहोमुचेऽष्टाकपाल इति दशहविष-
मिष्टिं निर्वपति । दशाक्षरा विराट् । अन्नं
विराट् । विराजैवान्नाद्यमवरुन्धे, इति ।

अग्नयेऽंहोमुच इत्येतस्मिन्नेवानुवाके दशापि हवींष्याम्नातानि ।

चतुर्थकाण्डस्यानुवाकोक्ता याज्यानुवाक्या विधत्ते—

अग्नेर्मन्वे प्रथमस्य प्रचेतस इति याज्यानु-
वाक्या भवन्ति सर्वत्वाय ( ४ ), इति ।

अधिपतय इत्याहाभिजित्या ऐन्द्राग्नो भवति रुन्ध एकं च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके नवमाध्याये षोडशोऽनुवाकः ॥ १६ ॥

सर्वत्वमपेक्षितफलपौष्कल्यम् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीय-ब्राह्मणभाष्ये तृतीयकाण्डे नवमप्रपाठके षोडशोऽनुवाकः ॥ १६ ॥

अथ सप्तदशोऽनुवाकः ।

षोडशे नमो राज्ञ इत्यादिमन्त्रव्याख्यानं केचिद्धोमपश्विष्टिविशेषाश्चाभिहिताः । सप्तदशेऽश्वस्य रोगादिनिमित्तं प्रायश्चित्तमभिधीयते । तत्र रोगदोषपरिहारायेष्टित्रयं विधत्ते—

यद्यश्वमुपतपद्विन्देत् । आग्नेयमष्टाकपालं निर्वपेत् । सौम्यं चरुम् । सावित्रमष्टाकपालम्, इति ।

उपतपत्संतापकरो रोगविशेषः ।

तास्विष्टिष्वाग्नेयं प्रशंसति—

यदाग्नेयो भवति । अग्निः सर्वा देवताः । देवताभिरेवैनं भिषज्यति, इति ।

एनमश्वं भिषज्यत्यरोगिणं करोति ।

सौम्यं प्रशंसति—

यत्सौम्यो भवति । सोमो वा ओषधीनाः राजा । याभ्य एवैनं विन्दति (१) । ताभिरेवैनं भिषज्यति, इति ।

याभ्य एवौषधीभ्यो भक्षिताभ्यो वैषम्यं प्राप्ताभ्य एनमश्वं रोगो लभते । सोमाधीनत्वादोषधीनां सौम्ययागेऽनुष्ठिते सति ताभिरेवौषधिभिरेनमश्वमरोगं करोति ।

सावित्रं प्रशंसति—

यत्सावित्रो भवति । सवितृप्रसूत एवैनं भिषज्यति, इति ।

सवित्राऽनुज्ञातत्वाच्चिकित्सा सम्यक्संपद्यते ।

अग्निसोमसवितृदेवताः समूहाकारेण प्रशंसति—

एताभिरेवैनं देवताभिर्भिषज्यति । अगदो हैव भवति, इति ।

अग्न्यादिभिश्चिकित्सितोऽश्व सर्वथा रोगरहित एव भवति।

अथाश्वस्य त्वग्दोषनिमित्तं प्रायश्चित्तं विधत्ते--

पौष्णं चरुं निर्वपेत्। यदि श्लोणः स्यात्।
पूषा वै श्लौण्यस्य भिषक्। स एवैनं भिष-
ज्यति। अश्लोणो हैव भवति (२), इति।

श्लोणो दुष्टत्वक्। श्लौण्यस्य त्वग्दोषस्य चिकित्सकः पूषा। अतः पौष्ण-चरुणा पूषैव चिकित्सां करोति।

उपद्रवकारिदेवताविशेषगृहीतत्वे सति प्रायश्चित्तं विधत्ते---

रौद्रं चरुं निर्वपेत्। यदि महती देवताऽभि-
मन्येत। एतद्देवत्यो वा अश्वः। स्वयैवैनं देव-
तया भिषज्यति। अगदो हैव भवति, इति।

महती देवता रुद्रः पशूनामधिपतिः। तस्मिन्पशुष्वभिमन्यमाने सति ज्वरा-दिना पशुः पीड्यते। अश्वस्य पशुत्वेन रुद्रदेवत्यत्वाद्रौद्रयागेऽनुष्ठिते सति स्वकीययैव देवतया चिकित्सितत्वाद्रोगरहितो भवति।

निवासस्थानप्राप्त्यभावे प्रायश्चित्तं विधत्ते---

वैश्वानरं द्वादशकपालं निर्वपेन्मृगाखरे
यदि नाऽऽगच्छेत्। इयं वा अग्निर्वैश्वा-
नरः। इयमेवैनमर्चिभ्यां परिशोधमान-
यति। आ हैव सुत्यमहर्गच्छति, इति।

मृगस्याश्वस्याऽऽखरः सुत्येऽहनि निवासस्थानं तत्राऽऽगमनाभावे वैश्वानरेष्टिं कुर्यात्। इयमेव पृथिवी विश्वमनुष्यहितकार्यग्निस्तस्मादियमेवाग्निरूपा सती स्वकी-याभ्यामर्चिभ्यां परितो रुद्ध्वा निवासस्थानमानयति। ततोऽश्वः सुत्यमहः प्रत्या-गच्छत्येव।

---

१ क. °ग्दोषे प्रा°।

वडवादिध्यानेऽश्वेन कृते सति प्रायश्चित्तं विधत्ते—

यद्यधीयात् ( ३ ) । अग्नयेंऽꣳहोमुचेऽष्टाक-
पालः । सौर्यं पयः । वायव्य आज्यभागः, इति ।

आज्यमेव भागो भजनीयं हविः ।

तत्र प्रथमं हविः प्रशंसति—

यजमानो वा अश्वः । अꣳहसा वा एष गृहीतः ।
यस्याश्वो मेधाय प्रोक्षितोऽध्येति । यदꣳहोमुचे
निर्वपति । अꣳहस एव तेन मुच्यते, इति ।

अयमश्वः प्राधान्याद्यजमानस्वरूपः । तथा सति यस्य यजमानस्याश्वो यज्ञार्थं प्रोक्षितः सन्नध्येति वडवां गर्दभीं वा स्मरेत् । तच्च स्मरणं तृणखाद्यादिमात्रावौदासीन्यादिनाऽनुमातव्यम् । तदानीमेषोऽश्वः पाप्मना गृहीतो भवति । तेनांहोमुग्यागेनायमश्वः पापान्मुक्तो भवति ।

द्वितीयं हविः प्रशंसति—

यजमानो वा अश्वः । रेतसा वा एष
व्युध्यते (४)। यस्याश्वो मेधाय प्रोक्षि-
तोऽध्येति । सौर्यꣳ रेतः । यत्सौर्यं पयो
भवति । रेतसैवैनꣳ स समर्धयति, इति ।

सूर्यस्य रेतःस्वामित्वात्सौर्ययागेन वडवादिध्यानप्रयुक्तरेतोवियोगः समाहितो भवति ।

तृतीयं हविः प्रशंसति—

यजमानो वा अश्वः । गर्भैर्वा एष व्यृध्यते ।
यस्याश्वो मेधाय प्रोक्षितोऽध्येति ।

---

१ क °नेनाश्वेन हुंकृ° ।

वायव्या गर्भाः । यद्वायव्य आज्यभागो
भवति । गर्भैरेवैनꣳ स समर्धयति, इति ।

वायुप्रेरितस्य शारीरस्य रेतसो गर्भाशये पतने सति गर्भीभावाद्गर्भा वायव्याः । अतो वायव्ययागेन वडवाध्यानप्रयुक्तो गर्भवियोगो न भविष्यति ।

एतदनुवाकोक्तां प्रायश्चित्तिं निगमयति—

अथो यस्यैषाऽश्वमेधे प्रायश्चित्तिः क्रियते ।
इष्ट्वा वसीयान्भवति (५), इति ।

विन्दत्यस्त्रोणो हैव भवत्यधीयाद्दध्यते गर्भैरेवैनꣳ स समर्धयति द्वे च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके नवमाध्याये सप्तदशोऽनुवाकः ॥ १७ ॥

यस्य यजमानस्याश्वमेधयागे यथोक्तनिमित्तं प्रायश्चित्तमनुष्ठीयते स यजमानोऽश्वमेधेनेष्ट्वाऽतिशयेन धनवान्भवति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे नवमप्रपाठके सप्तदशोऽनुवाकः ॥ १७ ॥

---

अथाष्टादशोऽनुवाकः ।

---

सप्तदशेऽश्वरोगादिप्रायश्चित्तमुक्तम् । अष्टादशे ब्रह्मौदना उच्यन्ते । तत्र शाखान्तरगतं ब्रह्मौदनेष्ट्योर्विकल्पमनुवदति—

तदाहुः । द्वादश ब्रह्मौदनान्त्सꣳस्थिते
निर्वपेत् । द्वादशभिर्वेष्टिभिर्यजेतेति, इति ।

तत्राश्वमेधविषये शाखान्तरानुसारिण एवमाहुः । अश्वमेधे संस्थिते समाप्ते सति स्वगृहं गत्वा द्वादश ब्रह्मौदनान्वा निर्वपेत् । इष्टिभिर्वाऽऽग्नेयाष्टाकपालरूपाभिर्द्वादशाभिर्यजेतेति ।

तत्रेष्टिपक्षं दूषयति--

यदिष्टिभिर्यजेत । उपनामुक एनं यज्ञः स्यात् । पापीयाꣳस्तु स्यात् । आप्तानि वा एतस्य छन्दाꣳसि । य ईजानः । तानि क एतावदाशु पनः प्रयुञ्जीतेति । सर्वा वै सꣳस्थिते यज्ञे वागाप्यते (१) । साऽऽप्ता भवति यातयाम्नी । क्रूरीकृतेव हि भवत्यरुष्कृता । सा न पुनः प्रयुज्येत्याहुः, इति ।

यद्ययमिष्टिभिर्यजेत तदानीं सफलो यज्ञ एनं यजमानं प्रत्युपनामुक उपनमनशीलः स्यात् । यज्ञफलमस्य संपद्यत एव । किंत्वसौ पापतरो भवति । कुत इति चेत्तदुच्यते । यो यजमान इष्टवानेतस्य च्छन्दांसि मन्त्रगतान्याप्तान्युपयुक्तानि । एवं सति तानि च्छन्दांसि पुनरप्येतावदाश्वत्यन्तशीघ्रं को नाम प्रयोक्तुमर्हति । न ह्युपकर्तॄणि च्छन्दांस्यत्यन्तप्रयासं प्रापयितुं योग्यानि । किंच न केवलं छन्दांस्येवोपयुक्तानि किंतु यज्ञे समाप्ते सति सर्वाऽपि वागाप्यते कृतप्रयोजना वर्तते । सा च तथा कृतप्रयोजना सती यातयाम्नी गतसारा भवति । एवं सति पुनः प्रयुज्यमानाऽरुष्कृता पिष्टपेषणस्थानीयेन पुनःप्रयोगेण बाधिता क्रूरीकृतेव हिंसकस्वभावतां नीतेव भवति हि । तस्मात्सा वाङ्न पुनः प्रयोक्तव्येत्येवं रहस्याभिज्ञा आहुः ।

शाखान्तरपक्षं दूषयित्वा स्वपक्षं विधत्ते---

द्वादशैव ब्रह्मौदनान्सꣳस्थिते निर्वपेत् । प्रजापतिर्वा ओदनः । यज्ञः प्रजापतिः । उपनामुक एनं यज्ञो भवति । न पापीयान्भवति, इति ।

अश्वमेधे समाप्ते सति द्वादश ब्रह्मौदनानेव निर्वपन्न त्विष्टिभिर्यजेत्। ब्रह्मौदनविधिश्चाऽऽधानप्रकरणे प्रपञ्चितः। ओदनस्य यज्ञस्य च प्रजापतिकार्यत्वेन प्रजापतिरूपत्वादेकत्वे सत्योदननिर्वापेनैनं यजमानं प्रति यज्ञ उपनामुक उपनमनशीलो भवति। छन्दसां वाचश्च पूर्वोक्तपुनःप्रयोगदोषाभावादयं यजमानः पापतरो न भवति।

संख्यां प्रशंसति--

द्वादश भवन्ति। द्वादश मासाः संवत्सरः। संवत्सर एव प्रतितिष्ठति, इति।

आप्यते संवत्सर एकं च।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके नवमाध्यायेऽष्टादशोऽनुवाकः॥ १८॥

स्पष्टोऽर्थः।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे नवमप्रपाठकेऽष्टादशोऽनुवाकः॥ १८॥

अथैकोनविंशोऽनुवाकः।

अष्टादशे ब्रह्मौदना अभिहिताः। एकोनविंशे विभुत्वादिभिर्द्वादशभिर्गुणैरश्वमेधः प्रशस्यते। तत्र प्रथमं गुणमाह---

एष वै विभूर्नाम यज्ञः। सर्वꣳ ह वै तत्र विभु भवति। यत्रैतेन यज्ञेन यजन्ते, इति।

विविधानां श्रेयसां भावयिता विभुः। यस्मिन्देश एतेन यज्ञेन यजन्ते तस्मिन्देशे सर्वं गवादिकं विभु विविधश्रेयोभावयितृ भवति।

द्वितीयं गुणमाह---

एष वै प्रभूर्नाम यज्ञः। सर्वꣳ ह वै तत्र प्रभु भवति। यत्रैतेन यज्ञेन यजन्ते, इति।

प्रकर्षेण श्रेयोभावयिता प्रभुः। अन्यत्पूर्ववत्।

तृतीयं गुणमाह—

एष वा ऊर्जस्वान्नाम यज्ञः। सर्वꣳ ह वै तत्रोर्जस्वद्भवति। यत्रैतेन यज्ञेन यजन्ते, इति।

ऊर्जस्वानन्नवान्।

चतुर्थमाह—

एष वै पयस्वान्नाम यज्ञः। सर्वꣳ ह वै तत्र पयस्वद्भवति। यत्रैतेन यज्ञेन यजन्ते, इति।

पयस्वान्क्षीरादिरसवान्।

पञ्चममाह—

एष वै विधृतो नाम यज्ञः। सर्वꣳ ह वै तत्र विधृतं भवति। यत्रैतेन यज्ञेन यजन्ते, इति।

विधृतो विशेषेण धृतो नियतफल इत्यर्थः।

षष्ठमाह—

एष वै व्यावृत्तो नाम यज्ञः। सर्वꣳ ह वै तत्र व्यावृत्तं भवति। यत्रैतेन यज्ञेन यजन्ते, इति।

व्यावृत्तः फलाधिक्येनेतरयज्ञविलक्षणः।

सप्तममाह—

एष वै प्रतिष्ठितो नाम यज्ञः। सर्वꣳ ह वै तत्र प्रतिष्ठितं भवति (२)। यत्रैतेन यज्ञेन यजन्त, इति।

प्रतिष्ठितश्चाञ्चल्यरहितः।

अष्टममाह—

एष वै तेजस्वी नाम यज्ञः। सर्वꣳ ह वै तत्र तेजस्वि भवति। यत्रैतेन यज्ञेन यजन्ते, इति।

तेजस्वी ख्यातिमान्।

नवममाह—

एष वै ब्रह्मवर्चसी नाम यज्ञः। आ ह
वै तत्र ब्राह्मणो ब्रह्मवर्चसी जायते।
यत्रैतेन यज्ञेन यजन्ते, इति।

ब्रह्मवर्चसी मन्त्रप्रयुक्ततेजोयुक्तः। ब्राह्मणोऽपि तत्र देशे तथाविध एवाऽऽजायते खलु।

दशममाह—

एष वा अतिव्याधी नाम यज्ञः।
आ ह वै तत्र राजन्योऽतिव्याधी
जायते। यत्रैतेन यज्ञेन यजन्ते, इति।

अतिशयेन पापं वेद्धुं शीलं यस्य सोऽयमतिव्याधी। तस्मिन्देशे क्षत्रियोऽपि शत्रुमतिशयेन वेद्धुं समर्थ आजायते खलु।

एकादशमाह—

एष वै दीर्घो नाम यज्ञः। दीर्घायुषो ह वै तत्र
मनुष्या भवन्ति। यत्रैतेन यज्ञेन यजन्ते, इति।

दीर्घो दीर्घफलयुक्तः।

द्वादशमाह—

एष वै क्लृप्तो नाम यज्ञः। कल्पते ह
वै तत्र प्रजाभ्यो योगक्षेमः। यत्रै-
तेन यज्ञेन यजन्ते (३), इति।

पर्यस्वान्नाम यज्ञः प्रतिष्ठितं भवत्यतिव्याधी जायते यत्रैतेन यज्ञेन यजन्ते षट् च।

---

१ क. 'स्वी शक्तिमा'। २ क. 'र्धेन्धाऽर्थु'।

एष वै विभूः प्रभूरूर्जस्वान्पयस्वान्विधृतो व्यावृत्तः प्रतिष्ठितस्तेजस्वी ब्रह्मवर्चस्यतिव्याधी दीर्घः क्लृप्तो द्वादश ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके नवमाध्याय एकोनविंशोऽनुवाकः ॥ १९ ॥

क्लृप्तः सर्वसाधनसंपन्नः । योगसहितः क्षेमो योगक्षेमः । स च कल्पते संपद्यते । एतैर्द्वादशभिर्गुणैर्द्वादशब्रह्मौदनस्तुतिद्वाराऽश्वमेधः प्रशस्तः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे नवमप्रपाठक एकोनविंशोऽनुवाकः ॥ १९ ॥

अथ विंशोऽनुवाकः ।

एकोनविंशे विभुत्वादिगुणैर्यज्ञस्य प्रशंसाऽभिहिता । विंशेऽश्वस्य संज्ञपनप्रकारोऽभिधीयते । यदुक्तं सूत्रकारेण—"वडवा पुरीषी चाजः पुरो नीयतेऽश्वस्य वेतसशाखायां तार्प्यं कृत्त्यधीवासं हिरण्यकशिपु चाऽऽस्तीर्य सौवर्णं रुक्ममुपरिष्टात्कृत्वा तस्मिन्नश्वतूपरगोमृगान्निघ्नन्ति प्लक्षशाखास्वितरान्" इति । तत्र तार्प्यं विधत्ते—

तार्प्येणाश्वꣳ संज्ञपयन्ति । यज्ञो वै
तार्प्यम् । यज्ञेनैवैनꣳ समर्धयन्ति, इति ।

तार्प्यमिति घृताक्तस्य कम्बलस्य नामधेयम् । तेनाश्वं संज्ञपयन्ति मारयन्ति । प्रधानसाधनत्वात्तार्प्यस्य यज्ञत्वम् । अतो यज्ञेनैवाश्वं समृद्धं करोति ।

पितृमेधे प्रयोज्यं साम विधत्ते—

यामेन साम्ना प्रस्तोताऽनूपतिष्ठते ।
यमलोकमेवैनं गमयति, इति ।

यमसंबन्धि साम यामं सामगैः पितृमेधे प्रयोज्यते । तेनात्र प्रस्तोता संज्ञप्यमानं पशुमनु समीपे स्थित्वोपस्थानं कुर्यात् । तेनाश्वस्य यमलोकप्राप्तिः ।

चर्मपटं विधत्ते—

तार्प्ये च कृत्त्यधीवासे चाश्वꣳ संज्ञपयन्ति । एतद्वै

पशूनाꣳ रूपम् । रूपेणैव पशूनवरुन्धे, इति ।

तार्प्यं प्रथममास्तीर्य तस्मिन्कृत्त्यधीवासं चर्ममयमाच्छादनपटमास्तीर्य तस्मिन्संज्ञपयेत् । चर्मणः पशुकार्यत्वेन पशुरूपत्वात्पशुप्राप्तिः ।

कृत्त्यधीवासस्योपरि सुवर्णखचितां शय्यां विधत्ते—

हिरण्यकशिपु भवति । तेजसोऽवरुद्ध्यै (१), इति ।

हिरणस्य तेजस्वित्वात्तेजःप्राप्तिः ।

शय्याया उपरि सुवर्णफलकं विधत्ते—

रुक्मो भवति । सुवर्गस्य लोकस्यानुख्यात्यै, इति ।

रुक्मस्य दीप्त्यतिशयात्स्वर्गः प्रकाशितो भवति ।

तदुपर्यश्वस्थापनं विधत्ते—

अश्वो भवति । प्रजापतेराप्त्यै, इति ।

स्पष्टम् ।

तार्प्यादीन्प्रशंसति—

अस्य वै लोकस्य रूपं तार्प्यम् । अन्तरिक्षस्य कृत्त्यधीवासः । दिवो हिरण्यकशिपु । आदित्यस्य रुक्मः । प्रजापतेरश्वः । इममेव लोकं तार्प्येणाऽऽप्नोति (२) । अन्तरिक्षं कृत्त्यधीवासेन । दिवꣳ हिरण्यकशिपुना । आदित्यꣳ रुक्मेण । अश्वेनैव मेध्येन प्रजापतेः सायुज्यꣳ सलोकतामाप्नोति, इति ।

तार्प्यादीनामश्वान्तानामुपर्यधोभावसाम्येन भूलोकादिरूपत्वे सति यजमानस्य तेन तेन तार्प्यादिना तत्तद्भूलोकादिप्राप्तिर्भवति । सायुज्यं सहैकत्र वासः सलोकतां समानलोकस्वामित्वम् ।

---

१ क. 'कणानि' ।

क्रत्वनुष्ठानवेदने प्रशंसति---

एतासामेव देवतानाꣳ सायुज्यम् ।
सार्ष्टिताꣳ समानलोकतामाप्नोति। योऽश्व-
मेधेन यजते । य उं चैनमेवं वेद, इति ।

अवरुद्ध्या आप्नोत्यष्टौ च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके नवमाध्याये विंशोऽनुवाकः ॥ २० ॥

सार्ष्टितां समानैश्वर्ययुक्तत्वम् । स्पष्टमन्यत् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे नवमप्रपाठके विंशोऽनुवाकः ॥ २० ॥

अथैकविंशोऽनुवाकः ।

विंशेऽश्वस्य संज्ञपनमुक्तम् । एकविंशे तूत्तरवेद्युपवापोऽभिधीयते । तत्राऽऽदौ तावद्बहुविधनामनिर्वचनेनाश्वः स्तूयते । प्रथमं सवर्येति नाम्नो निर्वचनं दर्शयति—

आदित्याश्चाङ्गिरसश्च सुवर्गे लोकेऽस्पर्धन्त ।
तेऽङ्गिरस आदित्येभ्यः । अमुमादित्यमश्वꣳ
श्वेतं भूतं दक्षिणामनयन् । तेऽब्रुवन् । यं
नोऽनैष्ट । स वर्योऽभूदिति । तस्मादश्वꣳ सव-
र्येत्याह्वयन्ति । तस्माद्यज्ञे वरो दीयते, इति ।

पुरा कदाचिदादित्या गणदेवता अङ्गिरसो महर्षयश्च स्वर्गलोकं निमित्तीकृत्य स्पर्धां कृतवन्तः । तदानीं प्रथमत आदित्यैः स्वर्गे प्राप्ते सति तेऽङ्गिरसः, स्वर्गसिद्ध्यर्थं तेभ्य आदित्येभ्यः कांचिद्दक्षिणामनयन् । काऽसौ दक्षिणेति सोच्यते । योऽयमादित्यो जगत्प्रकाशयन्नस्माभिर्दृश्यते स एवाङ्गिरसां प्रार्थनया श्वेतोऽश्वो-

भवत्। तमश्वमितरेभ्यः सर्वेभ्यो द्वादशभ्यो दक्षिणात्वेन नीतवन्तः। ताननङ्गिरसः प्रति त आदित्या अब्रुवन्हेऽङ्गिरसो यूयं यमश्वं नोऽस्मान्प्रत्यनेष्ट नीतवन्तः सोऽश्वो वर्यः श्रेष्ठोऽभूदिति। यस्मादादित्यैरश्वो वर्यनाम्ना व्यवहृतस्तस्माल्लोकेऽपि सारथिनः समीचीनमश्वमुपलालनार्थं हस्तेन स्पृशन्तो हे सवर्येत्यनेन नाम्ना व्यवहरन्ति। वर्यैः श्रेष्ठैर्गुणैः सहितः सवर्यः। यस्मादङ्गिरोभिर्दत्तः श्रेष्ठोऽभूत्तस्मात्सर्वस्मिन्नपि यज्ञे वरः श्रेष्ठः पदार्थो दक्षिणात्वेन दीयते।

अश्वनामनिर्वचनं दर्शयति—

यत्प्रजापतिरालब्धोऽश्वोऽभवत्।
तस्मादश्वो नाम, इति।

प्रजापतिः स्वयमेव कदाचिदश्वजातिर्भूत्वा देवैरालब्धः सन्नश्वो व्यापकोऽभवत्। यद्यस्मादेवं तस्मादश्नुते व्याप्नोतीति व्युत्पत्त्याऽश्वनाम संपन्नम्।

अर्वनामनिर्वचनं दर्शयति—

यच्छ्वयदरुरासीत्[1]। तस्मादर्वा नाम, इति।

प्रजापतेरक्षि केनापि रोगेण श्वयदुच्छूनं यदाऽभूत्तदानीमरुर्व्यथाहेतुरासीत्। यस्मादुरुस्तस्मादर्वेति नाम।

वाजिनाम्नो निर्वचनं दर्शयति—

यत्सद्यो वाजान्त्समजयत्।
तस्माद्वाजी नाम, इति।

यद्यस्मात्कारणात्सद्यो जातमात्र एव वाजानन्नानि वेगाद्गत्वा सम्यग्जितवान्। तस्माद्वाजिनाम संपन्नम्।

आदित्यनाम्नो निर्वचनं दर्शयति—

यदसुराणां लोकानादत्त। तस्मादादित्यो नाम, इति।

यद्यस्मात्कारणादयमश्वो युद्धे जयं प्राप्यासुराणां संबन्धिनो लोकान्निवासस्थानान्यादत्त स्वीकृतवान्। तस्मादादानादादित्यनाम संपन्नम्।

---

१ क. "नीमुच्छूनं भवदरुर्यं"।

एवं नामनिर्वचनैरश्वं प्रशस्यास्मिन्क्रतावुत्तरवेद्युपवापं विधत्ते—

अग्निर्वा अश्वमेधस्य योनिरायतनम् । सूर्योऽग्नेर्योनिरायतनम् । यदश्वमेधेऽग्नौ चित्य उत्तरवेदिमुपवपति । योनिमन्तमेवै-नमायतनवन्तं करोति, इति ।

योऽयमश्वमेधः क्रतुस्तस्याग्निर्योनिः कारणम् । अग्नेः सकाशात्क्रत्वनुष्ठाननिष्पत्तेः । आयतनमाश्रयश्चाग्निरेव । सति ह्यग्नौ समाप्तिपर्यन्तो ह्यश्वमेधः प्रतितिष्ठति । तस्य चाग्नेः सूर्य एव कारणमायतनं च । अत एव परिधिप्रकरणे पश्चिमदाक्षिणोत्तरपरिधानादूर्ध्वं "सूर्यस्त्वा पुरस्तात्पातु" इत्येतेन मन्त्रेण सूर्यस्यैव रक्षकत्वमाम्नातम् । "ततो योनित्वं रक्षाकरणत्वम् । उद्यन्तं वावाऽऽदित्यमग्निरनुसमारोहति" इति दर्शनादायतनत्वमप्युपपन्नम् । एवमग्न्यादित्ययोः साक्षात्परम्परया च योनित्व आयतनत्वे च सति यद्यश्वमेधक्रतौ चित्येऽग्नौ चयनारूढेऽग्निक्षेत्र उत्तरवेदिमुपवपतीष्टकाचयनेनोत्तरवेदिं निष्पादयेत् । यदुपवापादेनमश्वमेधमग्नियुक्तत्वेन योनिमन्तमायतनवन्तं च करोति ।

वेदनं प्रशंसति—

योनिमानायतनवान्भवति । स एवं वेद, इति ।

अश्वमेधकर्तॄः साक्षात्परम्परया च योन्यायतनभूतावग्न्यादित्यौ प्रशंसति—

प्राणापानौ वा एतौ देवानाम् । यदर्काश्वमेधौ । प्राणापानावेवावरुन्धे, इति ।

अर्चनार्हत्वादग्निरर्कः । अश्वमेधफलरूपत्वादादित्योऽश्वमेधः । अत एवान्यत्राऽऽम्नायते—अर्को वा एष यदग्निरसावादित्योऽश्वमेधः" इति । यदर्काश्वमेधौ यावग्न्यादित्यावेतौ देवानां सर्वेषां प्राणापानस्थानीयौ । अत एव तदुभयसंबन्ध्युत्तरवेद्युपवासेन प्राणापानावेव प्राप्नोति ।

प्रकारान्तरेण प्रशंसति—

ओजो बलं वा एतौ देवानाम् । यदर्काश्व-

---

१ क. अर्चनीयत्वा° ।

मेधौ । ओजो बलमेवावरुन्धे, इति ।

बलहेतुर्नवमो धातुरोजः । तत्कार्यं बलम् । एतावग्न्यादित्यौ सर्वेषां देवानामोजोबलरूपौ । तस्मादग्न्यादित्यसंबन्ध्युत्तरवेद्युपवापेनौजो बलं च प्राप्नोति ।

उत्तरवेद्युपवापं निगमयति—

अग्निर्वा अश्वमेधस्य योनिरायतनम् । सूर्योऽग्नेर्योनिरायतनम् । यदश्वमेधेऽग्नौ चित्यं उत्तरवेदिं चिनोति । तावर्काश्वमेधौ । अर्काश्वमेधावेवावरुन्धे । अथो अर्काश्वमेधयोरेव प्रतितिष्ठति ( ३ ), इति ।

नाम करोति सूर्योऽग्नेर्योनिरायतनं चत्वारि च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके नवमाध्याय एकविंशोऽनुवाकः ॥ २१ ॥

स्पष्टोऽर्थः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे नवमप्रपाठक एकविंशोऽनुवाकः ॥ २१ ॥

अथ द्वाविंशोऽनुवाकः ।

उत्तरवेद्युपवाप एकविंशेऽभिहितः । ऋषभालम्भो द्वाविंशेऽभिधीयते । तत्राऽऽदावश्वस्य दीक्षादिकात्प्रधानयागात्पुरस्तात्संवत्सरमात्रे प्रोक्षणाद्यङ्गं विधत्ते—

प्रजापतिं वै देवाः पितरम् । पशुं भूतं मेधायाऽऽलभन्त । तमालभ्योपावसन् । प्रातर्यष्टास्मह इति । एकं वा एतद्देवानामहः । यत्संवत्सरः ।

तस्मादश्वः पुरस्तात्संवत्सर आलभ्यते, इति।

पुरा कदाचिद्देवानां पिता प्रजापतिर्देवैः प्रार्थितोऽश्वजातिः पशुरभूत्। तं पशुं देवा मेधाय यज्ञार्थमालभन्त स्पर्शनेन संकल्पितवन्तः। तं संकल्प्य परेद्युः प्रातर्यक्ष्यामह इति निश्चित्योपावसन्पशुसमीपे स्थितवन्तः। योऽयमस्माकं संवत्सरः काल एतद्देवानामेकमेवाहः। यस्मादेवं देवैः कृतं तस्मादयमधो दीक्षादियागप्रयोगात्पुरस्ताद्देवानामेकदिनरूपेऽस्मदीये संवत्सरे स्पर्शनप्रोक्षणादिना प्रारब्धव्यः।

अश्वनिर्वचनेनाश्वमेधनिर्वचनेन चाश्वं प्रशंसति—

यत्प्रजापतिरालब्धोऽश्वोऽभवत्। तस्मादश्वः।
यत्सद्यो मेधोऽभवत्(१)। तस्मादश्वमेधः, इति।

यद्यस्मात्प्रजापतिरयं पशुरूपेणाऽऽलब्धः सन्नश्वो व्यापकोऽभवत्तस्मादश्नुत इति व्युत्पत्त्याऽश्वनामाभवत्। यद्यस्मात्कारणात्सद्य एव तस्मिन्नेवाह्न्यश्वो मेधरूपो यज्ञोऽभवत्। तस्मादश्वेन निष्पाद्यो मेधो यज्ञोऽश्वमेधः।

एतद्वेदनं प्रशंसति—

वेदुकोऽश्वमाशुं भवति। य एवं वेद, इति।

आशुं शीघ्रगामिनमश्वं वेदुको लब्धा भवति।

पुनरप्यश्वं प्रशंसति—

यद्वै तत्प्रजापतिरालब्धोऽश्वोऽभवत्। तस्मा-
दश्वः। प्रजापतेः पशूनामनुरूपतमः, इति।

यस्मादश्वः प्रजापतिरालब्धोऽभवत्तस्मादयमश्वः पशूनां मध्ये प्रजापतेरातिशयेनानुकूलः।

एतद्वेदनं प्रशंसति—

आऽस्य पुत्रः प्रतिरूपो जायते। य एवं वेद, इति।

अस्यानुरूपत्ववेदितुः पुनः प्रतिरूपोऽनुरूप आजायते।

अश्वमेधयागं तद्वेदनं च प्रशंसति।

सर्वाणि भूतानि संभृत्याऽऽलभते। समेनं

देवास्तेजसे ब्रह्मवर्चसाय भरन्ति । योऽश्व-
मेधेन यजते (२)। य उं चैनमेवं
वेदं, इति ।

यो यष्टा यश्च वेदिता स सर्वोऽप्यश्वस्य प्रजापतिरूपत्वात्प्रजापतेश्च सर्वात्मकत्वात्सर्वाण्यपि भूतान्यश्वरूपेण संभृत्यैकीकृत्याऽऽलम्भं करोति । तेनाऽऽलम्भेन देवा एनं पुरुषं तेजसे शरीरकान्त्यै ब्रह्मवर्चसाय श्रुताध्ययनसंपत्त्यै च संभरन्ति समर्थं कुर्वन्ति ।

पुनरप्यश्वं प्रकारान्तरेण प्रशंसति—

एतद्वै तद्देवा एतां देवताम् । पशुं भूतं मेधा-
याऽऽलभन्त । यज्ञमेव । यज्ञेनं यज्ञमयजन्त
देवाः । कामप्रं यज्ञमकुर्वत । तेऽमृतत्वमं-
कामयन्त । तेऽमृतत्वमंगच्छन्, इति ।

तत्तदा पूर्वस्मिन्काले देवा एतां प्रजापतिदेवतां पशुं भूतमश्वरूपेण निष्पन्नं यज्ञार्थमालभन्तेति यत्तदेतद्वै वक्ष्यमाणमेवेति मन्तव्यम् । तदेतत्स्पष्टी क्रियते यज्ञमेव यज्ञायाऽऽलभन्त इति तस्यार्थः । एवं सति प्रजापत्यात्मना यज्ञेनाश्वमेधाख्यं यज्ञं देवा अयजन्त । तं च यज्ञं कामप्रं सर्वेषां कामानां पूरयितारमकुर्वत । ततस्ते कर्तारोऽमृतत्वं कामयित्वा तदमृतत्वमगच्छन् ।

क्रत्वनुष्ठानं प्रशंसति—

योऽश्वमेधेन यजते । देवानामेवायनेनैति
(३)। प्राजापत्येनैव यज्ञेनं यजते काम-
प्रेणं । अपुनर्मारमेव गच्छति, इति ।

अश्वमेधयाजी देवानामेव योग्येन मार्गेण गच्छति । किंच प्रजापतिसंबन्धिनैव कामपूरकेण यज्ञेनायं यजते तेनायं पुनर्मरणरहितं प्राजापत्यमेव पदं प्राप्नोति ।

---

१ क. 'देत्र स्प' ।

ऋषभं पशुं विधत्ते——

एतस्य वै रूपेण पुरस्तात्प्राजापत्यमृषभं
तूपरं बहुरूपमालभते । सर्वेभ्यः कामेभ्यः ।
सर्वस्याऽऽप्त्यै । सर्वस्य जित्यै, इति ।

सर्वकामसिद्ध्यर्थं पुरस्तादश्वमेधारम्भ एव सांग्रहणीसंज्ञान्योरनन्तरं वैशाख्यां पौर्णमास्यां कंचिदृषभमालभेत । कीदृशमेतस्यैव प्रजापतेः स्वरूपेणोपलक्षितत्वात्प्राजापत्यम् । तूपरं शृङ्गहीनम् । बहुरूपं नानावर्णम् । सोऽयमृषभालम्भः सर्वस्य कामस्य प्राप्त्यै सर्वस्य वशीकरणाय च संपद्यते ।

यागवेदने प्रशंसति——

सर्वमेव तेनाऽऽप्नोति । सर्वं जयति । योऽश्व-
मेधेन यजते । य उ चैनमेवं वेद (४), इति ।

मेधोऽभवद्यजत एति वेद ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके नवमाध्याये
द्वाविंशोऽनुवाकः ॥ २२ ॥

तेन यागेन वेदनेन च ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे नवमप्रपाठके द्वाविंशोऽनुवाकः ॥ २२ ॥

अथ त्रयोविंशोऽनुवाकः ।

द्वाविंशे प्रथममनुष्ठेय ऋषभोऽभिहितः । एतावता यद्यत्क्रतावनुष्ठेयं तत्सर्वमुक्तम् । अथ त्रयोविंशेऽश्वावयवेषूपासनमाभिधीयते । तत्राऽऽदावहोरात्ररूपेण लोमध्यानं विधत्ते——

यो वा अश्वस्य मेध्यस्य लोमानि वेद ।
अश्वस्यैव मेध्यस्य लोमञ्जुहोति । अहो-

रात्रे वा अश्वस्य मेध्यस्य लोमनी। यत्सा-
यं प्रातर्जुहोति। अश्वस्यैव मेध्यस्य लोम-
ल्लोमञ्जुहोति। एतदनुकृति ह स्म वै पुरा।
अश्वस्य मेध्यस्य लोमल्लोमञ्जुह्वति, इति।

यः कश्चित्पुमान्यागयोग्यस्याश्वस्य पार्श्वद्वयवर्ति लोमद्वयं वेदोपास्ते निरन्तरं ध्यायति सोऽयमश्वस्यैकैकस्मिँल्लोम्नि हुतवान्भवति। कथं ध्यातव्यमिति तदुच्यते—ये अहोरात्रे विद्येते ते एव प्रजापतिरूपस्याश्वस्य लोमनी इति ध्यायेत्। एवं ध्यानयुक्तः सायं प्रातश्च यदग्निहोत्रं जुहोति तेनाश्वस्य यावन्ति लोमानि तावत्य आहुतयः संपद्यन्ते। पुरा कल्पादौ देवा एतदनुकृत्यैतस्य ध्यानसंपाद्यस्य फलस्यानुकरणं यथा भवति तथाऽश्वस्यैकैकस्मिँल्लोम्न्येकैकामाहुतिं जुह्वति। अस्माकं तु तथाविधसामर्थ्याभावादनेनोपासनेनैव तत्फलसिद्धिरित्यभिप्रायः।

अवयवान्तरध्यानं विधत्ते—

यो वा अश्वस्य मेध्यस्य पदे वेद। अश्वस्यैव
मेध्यस्य पदे पदे जुहोति। दर्शपूर्णमासौ वा
अश्वस्य मेध्यस्य पदे ( १ )। यद्दर्शपूर्ण-
मासौ यजते। अश्वस्यैव मेध्यस्य पदे पदे
जुहोति। एतदनुकृति ह स्म वै पुरा।
अश्वस्य मेध्यस्य पदे पदे जुह्वति, इति।

पूर्ववद्व्याख्येयम्।

अश्वो मार्गश्रमपरिहाराय भूमौ शरीरस्य पार्श्वपरिवर्तनं करोति तस्य ध्यानं विधत्ते—

यो वा अश्वस्य मेध्यस्य विवर्तनं वेद। अश्व-
स्यैव मेध्यस्य विवर्तने विवर्तने जुहोति। असौ
वा आदित्योऽश्वः। स आहवनीयमागच्छति।

तद्विवर्तते । यदग्निहोत्रं जुहोति । अश्वस्यैव मेध्यस्य विवर्तने विवर्तने जुहोति । एतदनुक्राति ह स्म वै पुरा । अश्वस्य मेध्यस्य विवर्तने विवर्तने जुह्वति ( २ ). इति ।

पदे अग्निहोत्रं जुहोति त्रीणि च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके नवमाध्याये त्रयोविंशोऽनुवाकः ॥ २३ ॥

---

योऽसावादित्यो दृश्यते स एवाश्वरूपेणाऽऽहवनीयं प्रत्यागच्छति । " अग्निं वावाऽऽदित्यः सायं प्रविशति " इति श्रुत्यन्तरात् । तदेतदादित्यागमनमश्वस्य विवर्तनमिति ध्यायेत् । अन्यत्पूर्ववद्व्याख्येयम् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे नवमप्रपाठके त्रयोविंशोऽनुवाकः ॥२३॥

---

प्रजापतिस्तमष्टादशभिः प्रजापतिरकामयताभावस्मै युञ्जन्ति तेजसाऽपं प्राणा अपश्रीरूर्ध्वा प्रजापतिः प्रेणानु प्रथमेन प्रजापतिरकामयत महान्वैश्वदेवो वा अश्वस्य प्रजापतिस्तं यज्ञक्रतुभिरपश्रीर्ब्राह्मणौ सर्वेषु वारुणो यद्यश्वं तदाहुरेष वै विभूस्ताप्येणादित्याः प्रजापतिं पितरं यो वा अश्वस्य मेध्यस्य लोमनी त्रयोविꣳशतिः ।

प्रजापतिरस्मिँल्लोके बह्वं उत्तरतः श्रियमेवाव प्रजापतिरकामयत महान्यत्मातारिष्टिभिः प्र वा एष एभ्यो लोकेभ्यः सर्वꣳ ह वै तत्र पर्यस्वद्य उ चैनमेवं वेद चत्वारिꣳशीतिः ।

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे नवमोऽध्यायः समाप्तः ॥ ९ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्वीरबुक्कणसाम्राज्यधुरंधरश्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मण-भाष्ये नवमः प्रपाठकः समाप्तः ॥ ९ ॥

अथ तृतीयकाण्डे दशमः प्रपाठकः ।

तत्र प्रथमोऽनुवाकः ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
अश्वमेधस्य शेषो यो नवमेऽसौ समीरितः ।
सावित्रचयनं ब्रूते दशमेऽस्मिन्प्रपाठके ॥ २ ॥

तस्य चयनस्यापेक्षितमिष्टकानां स्वरूपं सूत्रकारो दर्शयति—"सावित्रः स्वर्गकामश्चिन्वीत, पशुबन्धे चीयते चेष्यमाण उपकल्पयते पञ्चाशीतिशतं हिरण्येष्टकाः, यावदुत्तममङ्गुलिपरु तावतीः शर्करा वा, अभ्यक्ताश्चस्तस्रः स्वयमातृण्णा अपरिमिता लोकंपृणाः" इति । तासामिष्टकानामुपधानस्थाने परिमण्डलाकारां रेखां कुर्यात् । तदपि सूत्र एवोक्तम्—"उत्तरवेदिदेशस्य मध्ये शङ्कुं निहत्य सर्वतः परिमण्डलं रथचक्रमात्रं सावित्रं परिलिख्य समूलं हरितं दर्भस्तम्बमाहृत्य मध्येऽग्नेर्निखाय जुह्वां पञ्चगृहीतं गृहीत्वा सजूरब्दो यावभिरिति दर्भस्तम्बे पञ्चाऽऽहुतीर्हुत्वोद्धृत्यावोक्ष्य व्याहारणान्तामुत्तरवेदिं कृत्वा लेखाया अभ्यन्तरं नवपरिमण्डला लेखा लिखित्वा" इति । तासु नवसु लेखासु प्रपाठकस्याऽऽद्यानुवाके प्रोक्तैर्मन्त्रैरिष्टका उपदध्यात् । एतस्मिन्प्रसिद्धेऽनुवाकेऽर्थभेदादवान्तरानुवाका बहवो विद्यन्ते तत्र प्रथममनुवाकं सूत्रकारो विनियुङ्क्ते—"नवम्यां बाह्यायां लेखायां पञ्चदश पूर्वपक्षस्याहान्युपदधाति—संज्ञानं विज्ञानम्" इति । पाठस्तु—

हरिः ॐ ।

संज्ञानं विज्ञानं प्रज्ञानं जानदभिजानत् ।
संकल्पमानं प्रकल्पमानमुपकल्पमानमुपक्लृप्तं क्लृप्तम् । श्रेयो वसीय आयत्संभूतं भूतम्, इति ।

तत्र संज्ञानादीनि पञ्चदश पदानि शुक्लपक्षस्य प्रतिपदादिषु पौर्णमास्यन्तेषु दिनेष्वह्नां नामधेयानि। एतच्च सर्वमुत्तरब्राह्मणानुवाके स्पष्टी भविष्यति । तैरे-तैर्नामधेयैः पञ्चदशेष्टका नवम्यां बाह्येरेखायामुपदध्यात्। हे प्रथमेष्टके त्वं संज्ञा-ननामकं प्रथममहरसि। हे द्वितीयेष्टके त्वं विज्ञाननामकं द्वितीयमहरसि । एवं सर्वत्र योज्यम्। तया देवतया मन्त्रस्य सर्वशेषत्वात्सर्वत्रायं पठनीयः । ततश्चैवं पाठः संपद्यते संज्ञानं तया देवतयाऽङ्गिरस्वद्ध्रुवा सीदेति । एवं सर्वत्र द्रष्ट-व्यम्। तत्तदहःपरत्वेन निर्वचनानि यथायोग्यमुन्नेयानि।

कल्पः—"तेषामन्तरालेष्वेतेषामह्नां पञ्चदश मुहूर्तानुपदधाति—चित्रः केतुः" इति। पाठस्तु—

चित्रः केतुः प्रभानाभान्संभान् । ज्योतिष्मा॒ꣳ-
स्तेजस्वानातपꣳस्तपन्नभितपन् । रोचनो रोच-
मानः शोभनः शोभमानः कल्याणः, इति।

एतस्मिन्द्वितीयेऽवान्तरानुवाके प्रोक्ताश्चित्रः केतुरित्यादयः पञ्चदश ये शब्दास्ते शुक्लपक्षगत एकैकस्मिन्नहन्युदयास्तमयमध्यवर्तिनां मुहूर्तानां नामधेयानि । शेषं पूर्ववत्।

कल्पः—"अथान्तरस्यां पञ्चदश पूर्वपक्षस्य रात्रीरुपदधाति—दर्शा दृष्टा" इति। पाठस्तु—

दर्शा दृष्टा दर्शता विश्वरूपा सुदर्शना ।
आप्यायमाना प्यायमाना प्याया सूनृ
तेरा । आपूर्यमाणा पूर्यमाणा पूर-
यन्ती पूर्णा पौर्णमासी, इति।

अस्मिंस्तृतीयानुवाके प्रोक्ता दर्शादयः शब्दाः शुक्लपक्षस्य पञ्चदशानां रात्रीणां नामधेयानि ।

कल्पः—"तासामन्तरालेष्वेतासां रात्रीणां पञ्चदश मुहूर्तानुपदधाति—दाता प्रदाता" इति । पाठस्तु—

दाता प्रदाताऽऽनन्दो मोदः प्रमोदः (१)।

आवेशयन्निवेशयन्त्संवेशनः सꣳशान्तः शान्तः ।
आभवन्प्रभवन्त्संभवन्त्संभूतो भूतः, इति ।

अस्मिंश्चतुर्थानुवाके प्रोक्ता दात्रादयः पञ्चदश शब्दा एकैकरात्रिगतानां पञ्चदशानां मुहूर्तानां नामधेयानि । एता रात्रय एते च मुहूर्ता अष्टम्यां लेखायामुपधेयाः ।

कल्पः—"अथान्तरस्यां पञ्चदशापरपक्षस्याहान्युपदधाति—प्रस्तुतं विष्टुतम्" इति । पाठस्तु—

प्रस्तुतं विष्टुतꣳ सꣳस्तुतं कल्याणं विश्वरूपम् । शुक्रममृतं तेजस्वि तेजः समिद्धम् ।
अरुणं भानुमन्मरीचिमदभितपत्तपस्वत्, इति ।

एतस्मिन्पञ्चमानुवाके प्रोक्ताः प्रस्तुतादिशब्दाः कृष्णपक्षगतेषु प्रतिपदाद्यमावास्यान्तेषु दिनेष्वह्नां पञ्चदशानां नामधेयानि ।

कल्पः—"तेषामन्तरालेष्वेतेषामह्नां पञ्चदश मुहूर्तानुपदधाति—सविता प्रसविता" इति । पाठस्तु—

सविता प्रसविता दीप्तो दीपयन्दीप्यमानः ।
ज्वलञ्ज्वलिता तपन्वितपन्त्संतपन् । रोचनो
रोचमानः शुम्भूः शुम्भमानो वामः, इति ।

अस्मिन्षष्ठानुवाके प्रोक्ताः सवित्रादयः पञ्चदश शब्दाः कृष्णपक्षगत एकैकस्मिन्नहनि पञ्चदशानां मुहूर्तानां नामधेयानि । एतानि कृष्णपक्षगतस्याहानि तन्मुहूर्ताश्च सप्तम्यां लेखायामुपधेयाः ।

कल्पः—"अथान्तरस्यां पञ्चदशापरपक्षस्य रात्रीरुपदधाति—सुता सुन्वती" इति । पाठस्तु—

सुता सुन्वती प्रसुता सूयमानाऽभिषूयमाणा । पीती प्रपा संपा तृप्तिस्तर्पय-

न्ती ( २ )। कान्ता काम्या कामजाताऽऽ-
युष्मती कामदुघा, इति ।

अस्मिन्सप्तमेऽनुवाके प्रोक्ताः सुतादयः शब्दाः पञ्चदशसंख्याकाः कृष्णपक्षगतानां पञ्चदशानां रात्रीणां नामधेयानि ।

कल्पः—" तासामन्तरालेष्वेतासां रात्रीणां पञ्चदश मुहूर्तानुपदधाति—अभिशास्ताऽनुमन्ता " इति । पाठस्तु—

अभिशास्ताऽनुमन्ताऽऽनन्दो मोदः प्रमोदः ।
आसादयन्निषादयन्त्सꣳसादनः सꣳसन्नः
सन्नः। आभूर्विभूः प्रभूः शंभूर्भुवः, इति ।

एतस्मिन्नष्टमेऽनुवाके प्रोक्ता अभिशास्तेत्यादयः पञ्चदश शब्दा एकैकस्यां कृष्णपक्षरात्रौ विद्यमानानां पञ्चदशमुहूर्तानां नामधेयानि । कृष्णपक्षरात्रयस्तन्मुहूर्ताश्च षष्ठ्यां लेखायामुपधेयाः ।

कल्पः—" अथान्तरस्यां द्वादश पूर्वपक्षानुपदधाति—पवित्रं पवयिष्यन् " इति । पाठस्तु—

पवित्रं पवयिष्यन्पूतो मेध्यः । यशो यशस्वानायुरमृतः । जीवो जीविष्यन्त्स्वर्गो लोकः, इति ।

अस्मिन्नवमानुवाकेऽभिहिता द्वादश पवित्रादिशब्दाश्चैत्रवैशाखादिमासेषु वर्तमानानां द्वादशानां शुक्लपक्षाणां नामधेयानि । एते च शुक्लपक्षाः पञ्चम्यां लेखायामुपधेयाः ।

कल्पः—" अथान्तरस्यां द्वादशापरपक्षानुपदधाति—सहस्वान्त्सहीयान् " इति । पाठस्तु—

सहस्वान्त्सहीयानोजस्वान्त्सहमानः । जयन्नभिजयन्त्सुद्रविणो द्रविणोदाः । आर्द्रपवित्रो हरिकेशो मोदः प्रमोदः ( ३ ), इति ।

अस्मिन्दशमानुवाकेऽभिहिताः सहस्वानित्यादयो द्वादश शब्दाश्चैत्रवैशाखादिमासेषु कृष्णपक्षाणां नामधेयानि । एते कृष्णपक्षाश्चतुर्थ्यां लेखायामुपधेयाः ।

कल्पः—“ अथान्तरस्यां त्रयोदशमासनामान्युपदधाति—अरुणोऽरुणरजाः ” इति । पाठस्तु—

अरुणोऽरुणरजाः पुण्डरीको विश्वजिदभि-
जित् । आर्द्रः पिन्वमानोऽन्नवान्रसवानिरा-
वान् । सर्वौषधः संभरो महस्वान्, इति ।

अस्मिन्नेकादशानुवाकेऽभिहिता अरुणादयस्त्रयोदश शब्दाश्चैत्रादिमासानामधिकमाससहितानां नामधेयानि । एते मासास्तृतीयस्यां लेखायामुपधेयाः ।

कल्पः—“ सिकता उपदधाति—एजत्का जोवत्काः ” इति । पाठस्तु—

एजत्का जोवत्काः । क्षुल्लकाः शिपिविष्टकाः । सरि-
स्रराः सुशेरवः । अजिरासो गमिष्णवः, इति ।

अस्मिन्द्वादशानुवाकेऽभिहिता एजत्कादयोऽष्टौ शब्दाः सिकताविशेषाणां नामधेयानि । एताश्च सिकतास्तस्यामेव तृतीयस्यां लेखायामुपधेयाः ।

कल्पः—“ अथान्तरस्यां पञ्चदश मुहूर्तानुपदधाति—इदानीं तदानीम् ” इति । पाठस्तु—

इदानीं तदानीमेतर्हि क्षिप्रमजिरम् । आशु-
र्निमेषः फणो द्रवन्नतिद्रवन् । त्वरंस्त्वरमाण
आशुराशीयाञ्जवः, इति ।

अस्मिंस्त्रयोदशानुवाकेऽभिहिता इदानीमित्यादयः पञ्चदश शब्दाः पूर्वोक्तस्यैकैकमुहूर्तस्यावयवभूतानां पञ्चदशानां क्षुद्रमुहूर्तानां नामधेयानि । एते च क्षुद्रमुहूर्ता द्वितीयस्यां लेखायामुपधेयाः ।

कल्पः—“ अथान्तरस्यां षड्यज्ञक्रतूंस्त्रीणि चर्तुनामान्युपदधाति—अग्निष्टोम उक्थ्योऽग्निर्ऋतुः ” इति । पाठस्तु—

अग्निष्टोम उक्थ्योऽतिरात्रो द्विरात्रस्त्रिरात्रश्चतूरात्रः ।

अग्निर्ऋतुः सूर्य ऋतुश्चन्द्रमा ऋतुः, इति ।

अस्मिंश्चतुर्दशानुवाकेऽभिहिता अग्निष्टोमादयः षट्छन्दाः षण्णां ऋतुविशेषाणां नामधेयानि । अस्मिन्पञ्चदशानुवाकेऽभिहिता अग्निसूर्यचन्द्रमश्शब्दास्त्रय ऋतुविशेषाणां नामधेयानि । एते ऋतव ऋतवश्च प्रथमलेखायामुपधेयाः ।

कल्पः—" अथ नाभ्यां चत्वारि संवत्सरनामान्युपदधाति—प्रजापतिः संवत्सरो महान्कः " इति । पाठोऽप्यत्रायमेव—

प्रजापतिः संवत्सरो महान्कः ( ४ ), इति ।

प्रमोदस्तर्पयन्ती प्रमोदो जवस्त्रीणि च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके दशमाध्याये प्रथमोऽनुवाकः ॥ १ ॥

---

प्रजापत्यादयश्चत्वारः शब्दाः संवत्सरनामानि । ते च संवत्सरा नाभ्यामुपधेयाः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे दशमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

अथ द्वितीयोऽनुवाकः ।

---

प्रथमे नवसु लेखासु नाभ्यां चेष्टकोपधानमुक्तम् । द्वितीये स्वयमातृण्णोपधानमुच्यते । कल्पः—" चतस्रः स्वयमातृण्णा दिक्षूपदधाति—भूरग्निं च पृथिवीं च मां च " इति । तत्र प्रथमं मन्त्रमाह—

भूरग्निं च पृथिवीं च मां च । त्रींश्च
लोकान्संवत्सरं च । प्रजापतिस्त्वा साद-
यतु । तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद, इति ।

हे स्वयमातृण्णे, प्रजापतिर्देवस्त्वां प्राच्यां दिशि सादयतु । तथा भूःशब्दाभिधेयां प्रथमव्याहृत्यभिमानिनीं देवतामग्निं देवं पृथिवीं देवतां मां यजमानं च लोकत्रयाभिमानिनो देवान्संवत्सराभिमानिनं देवं च सादयतु । यथा पुरा-

ङ्गिरोभिर्महर्षिभिरुपहिता त्वं धृता स्थिता। तथैव तया प्रजापतिदेवतयोपहिता सती ध्रुवा सीद।

दक्षिणादिदिक्षु स्वयमातृण्णानामुपधानार्थं त्रीन्मत्रानाह—

भुवो वायुं चान्तरिक्षं च मां च। त्रींश्च लोकान्त्संवत्सरं च। प्रजापतिस्त्वा सादयतु। तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद। स्वरादित्यं च दिवं च मां च। त्रींश्च लोकान्त्संवत्सरं च। प्रजापतिस्त्वा सादयतु। तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद। भूर्भुवः स्वश्चन्द्रमसं च दिशश्च मां च। त्रींश्च लोकान्त्संवत्सरं च। प्रजापतिस्त्वा सादयतु। तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद (१), इति।

संवत्सरं च षट् च।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके दशमाध्याये द्वितीयोऽनुवाकः॥ २॥

---

पूर्ववद्व्याख्येयम्।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे दशमप्रपाठके द्वितीयोऽनुवाकः॥ २॥

---

अथ तृतीयोऽनुवाकः।

---

द्वितीये स्वयमातृण्णोपधानमुक्तम्। तृतीये निष्पन्नायाश्चितेरध्वर्योरुपस्थानमुच्यते। कल्पः—"उपस्थानेनोपतिष्ठते। त्वमेव त्वां वेत्थ योऽसि सोऽसि" इति। पाठस्तु—

त्वमेव त्वां वेत्थ योऽसि सोऽसि। त्वमेव

त्वामचैषीः। चितश्चासि संचितश्चास्यग्ने। एतावाꣳश्चासि भूयाꣳश्चास्यग्ने। यत्ते अग्ने न्यूनं यदु तेऽतिरिक्तम्। आदित्यास्तदङ्गिरसश्चिन्वन्तु। विश्वे ते देवाश्चितिमापूरयन्तु। चितश्चासि संचितश्चास्यग्ने। एतावाꣳश्चासि भूयाꣳश्चास्यग्ने। मा ते अग्ने च येन माऽति च येनाऽऽयुरावृक्षि। सर्वेषां ज्योतिषां ज्योतिर्यदुदावुदेति। तपसो जातमनिभृष्टमोजः। तत्ते ज्योतिरिष्टके। तेन मे तप। तेन मे ज्वल। तेन मे दीदिहि। यावद्देवाः। यावदसाति सूर्यः। यावदुतापि ब्रह्म (१), इति।

आ वृक्षि नव च।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके दशमाध्याये तृतीयोऽनुवाकः ॥ ३ ॥

हे चितिरूपाग्ने त्वमेव त्वां वेत्थ त्वदीयं निजस्वरूपं वेत्सि न त्वन्यः कश्चित्तव रहस्यं ज्ञातुं क्षमते। अतस्तव दृष्ट्या योऽसि यादृशसामर्थ्यवानसि सोऽसि परमार्थतस्तथाविध एवासि। वयं तु स्वातन्त्र्येण त्वदीयं महिमानमियत्तया परिच्छेत्तुं न शक्नुमः। किंच त्वमेव त्वामचैषीस्त्वदीयं चयनमपि यथाशास्त्रं त्वमेव कृतवानासि न तु वयं शक्नुमः। अतस्त्वमिष्टकाभिश्चितोऽप्यासि तासामिष्टकानां मन्त्रयुक्तत्वात्सम्यक्चितोऽप्यसि। हेऽग्ने बाह्यदृष्ट्यैतावान्रथचक्रमात्रपरिमितोऽसि। शास्त्रदृष्ट्या तु भूयानत्यन्ताधिकोऽप्यसि। हेऽग्नेऽस्माभिश्चितस्य ते तव स्वरूपे यदङ्गं न्यूनमासीद्यच्चातिरिक्तमासीत्तत्सर्वमादित्या देवा अङ्गिरसो महर्षयश्च चिन्वन्तु वैकल्यं परित्यज्य चयनं साङ्गं कुर्वन्तु। ये विश्वे देवास्ते चितिमेतां सर्वतः पूरयन्तु। अतो देवैर्महर्षिभिश्च सम्यगनुष्ठितत्वाद्धेऽग्ने त्वं चितश्चा-

सीत्यादि पूर्ववत् । हेऽग्ने ते त्वदीयेन चयेन चयनन्यूनत्वेनाऽऽयुर्मदीयं माऽऽवृक्षि । छिन्नं मा भूत् । तथाऽतिचयेन चयनाङ्गाधिक्येनाऽऽयुर्माऽऽवृक्षि । सर्वेषामपि चन्द्रनक्षत्रादिज्योतिषां मध्येऽधिकं त्वदीयं यज्ज्योतिरस्ति, अदावुदेत्यदो ज्योतिरुदयं गच्छति । अतस्त्वदीयमोजः सामर्थ्यं तपसो जानमस्मदनुष्ठितात्तपसस्त्वदीयसंतापशक्तेर्वा निष्पन्नम् । अत एवानिमृष्टं केनापि भर्जितुं निराकर्तुमशक्यम् । हे इष्टके तदुक्तमग्निसामर्थ्यं ते त्वदीयं ज्योतिस्तेन ज्योतिषा मे मदर्थं तप विरोधिनः संतापं कुरु । तथा त्वं तेन ज्योतिषा मे मदर्थं ज्वल प्रज्वलिता भव । तथा तेन ज्योतिषा मे मदर्थं दीदिहि सर्वं प्रकाशय । कियन्तं कालमिति चेत्तदुच्यते—यावन्तं कालं देवा वर्तन्ते सूर्यो यावदस्ताति यावन्तं कालमस्ति । उतापि च ब्रह्म जगत्कारणमपि यावदस्ति तावत्प्रकाशय ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे दशमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

अथ चतुर्थोऽनुवाकः ।

---

तृतीयेऽध्वर्योरुपस्थानमुक्तम् । चतुर्थे यजमानस्योपस्थानमुच्यते । कल्पः— “ यजमानः संहारविहाराभ्यामुपतिष्ठते संवत्सरोऽसि परिवत्सरोऽसि ” इति । पाठस्तु—

संवत्सरोऽसि परिवत्सरोऽसि । इदावत्सरोऽसी-
द्वत्सरोऽसि । इद्वत्सरोऽसि वत्सरोऽसि ।
तस्य ते वसन्तः शिरः । ग्रीष्मो दक्षिणः पक्षः ।
वर्षाः पुच्छम् । शरदुत्तरः पक्षः । हेमन्तो
मध्यम् । पूर्वपक्षाश्चितयः । अपरपक्षाः पुरीषम्
( १ ) । अहोरात्राणीष्टकाः । ऋषभोऽसि स्वर्गो
लोकः । यस्यां दिशि महीयसे । ततो नो मह
आवह । वायुर्भूत्वा सर्वा दिश आवाहि । सर्वा

दिशोऽनुविवाहि । सर्वा दिशोऽनुसंवाहि । चित्त्या चितिमापृण । अचित्त्या चितिमापृण । चिदसि समुद्रयोनिः (२) । इन्दुर्दक्षः श्येन ऋतावा । हिरण्यपक्षः शकुनो भुरण्युः । महान्त्सधस्थे ध्रुव आनिषत्तः । नमस्ते अस्तु मा मा हिꣳसीः । एति प्रेति वीति समित्युदिति । दिवं मे यच्छ । अन्तरिक्षं मे यच्छ । पृथिवीं मे यच्छ । पृथिवीं मे यच्छ । अन्तरिक्षं मे यच्छ । दिवं मे यच्छ । अन्ना प्रसारय । रात्र्या समच । रात्र्या प्रसारय । अह्ना समच । कामं प्रसारय । कामꣳ समच (३), इति ।

पुरीषꣳ समुद्रयोनिः पृथिवीं मे यच्छान्तरिक्षं मे यच्छ सप्त च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके दशमाध्याये चतुर्थोऽनुवाकः ॥ ४ ॥

अत्र संवत्सरोऽसीत्यारभ्य मा हिꣳसीरित्यन्तः संहारमन्त्रः । एति प्रेतीत्यारभ्यावशिष्टो विहारमन्त्रः । प्रभवविभवादिषु षष्टिसंवत्सरेष्वकैकस्मिंश्च क्रमेण संवत्सरादिशब्दा वर्तन्ते । हेऽग्ने त्वं संवत्सरोऽसि प्रभवरूपोऽसि परिवत्सरोऽसि । विभवरूपोऽसि । इदावत्सरोऽसि । शुक्लरूपोऽसि । इदुवत्सरोऽसि । प्रमोदरूपोऽसि । इद्वत्सरोऽसि । प्रजापतिरूपोऽसि । पञ्चस्वप्येतेष्वनुगताकारो वत्सरः । एतद्रूपोऽसि । एवमाङ्गिरःश्रीमुखादिष्वेकादशसु पञ्चकेषु योजयितव्यम् । तस्य ते तादृशस्य संवत्सरादिरूपस्य तव पुनः पक्ष्याकारेण वर्तमानस्य वसन्तादयः पञ्चर्तवोऽवयवाः । मध्यं मध्यशरीरम् । तथा चितिरूपेण वर्तमानस्य तव शुक्लपक्षाः सर्वे चितयः

कृष्णपक्षाः सर्वे पुरीषमाच्छादनार्था मृत्तिका । तेषु द्विविधपक्षेषु यान्यहोरात्राणि तानीष्टकाः । अनेनोक्तरूपेण भावनायामयमग्निरुपस्थितो भवति । तथा त्वमृषभः श्रेष्ठः स्वर्गलोकहेतुरसि । तादृशस्त्वं प्राच्यां दिशि महीयसे पूज्यसे । ततो दिशः सकाशान्नोऽस्माकं मह आवह पूजामानय । तथा त्वं वायुरूपो भूत्वा सर्वा दिश आवाहि समन्ताद्वातेन योजय । तथा सर्वा दिशोऽनु सर्वासां दिशामानुकूल्येन विवाहि विविधं वायुना योजय । यत्र यावान्वायुरपेक्षितस्तत्र तावन्तमेव वायुं संपादय । तथा सर्वा दिशोऽनु संवाहि समीचीनं शैत्यसौरभ्यमान्द्ययुक्तं वायुं कुरु । चित्तिर्ज्ञानं तेनास्माभिर्येयं चितिः संपादिता तां चितिमापृण सर्वतः पूरय । अचित्तिरज्ञानं तेन या चितिरस्माभिरनुष्ठिता तामप्यापृण ज्ञानेनाज्ञानेन वा यदस्माभिश्चितं तत्समाधेहीत्यर्थः । हेऽग्ने त्वं चिदादिगुणयुक्तोऽसि । चिच्चयनयोग्यः । समुद्रयोनिर्वडवारूपेण समुद्रादुत्पन्नः । इन्दुश्चन्द्रवदाह्लादकारी । दक्ष उत्साहयुक्तः । श्येनः पक्ष्याकारः । ऋतावा ऋतं यज्ञं तन्निष्पादकत्वेन तद्वान् । हिरण्यपक्षः सुवर्णमयपक्षोपेतः । शकुनः शक्तिमान् । भुरण्युर्भरणीयः । अत एव बहुगुणयुक्तत्वान्महान्त्सधस्थे देवैः सह सहावस्थानयोग्येऽस्मिन्देवयजने ध्रुवः स्थिरः सन्नानिषत्त, आगत्योपविष्टस्ते तादृशाय तुभ्यं नमोऽस्तु मा मा हिंसीः । आ प्र वि समुदित्येते पञ्चोपसर्गास्तेष्वितिशब्दाः पञ्चयोग्याक्रियाप्रदर्शनार्थाः । अत्राऽऽगच्छाभीष्टं प्रापयानिष्टं विलोपयास्माभिः संयुक्तो भवास्माकमुत्कर्षं कुरु । एवं क्रियान्तराण्यपि यथायोगमुन्नेयानि । ततो लोकत्रयमवरोह । क्रमेणाऽऽरोहक्रमेण च मदर्थं नियतं कुरु । आरोहावरोहयोर्मम स्वातन्त्र्यं देहीत्यर्थः । अह्ना दिननिमित्तं प्रसारय सूर्यरूपस्य तव रश्मिं प्रसृतं कुरु । रात्र्या रात्रिनिमित्तं सम्यक्सौर्यं तेजः संकुचितं कुरु । तथा रात्र्या प्रसारय रात्रिनिमित्तमाग्नेयं तेजः प्रसृतं कुरु । अह्ना समचाहर्निमित्तं संकुचितं कुरु । अग्निं वावाऽऽदित्यः सायं प्रविशतीत्युक्तत्वाद्रात्रौ सौर्यं तेजः संकुच्यते । उद्यन्तं वावाऽऽदित्यमग्निरनुसमारोहतीत्युक्तत्वादहन्याग्नेयं तेजः संकुच्यते । तदेवमादित्यरूपेणाग्निरूपेण वा कामं स्वेच्छया तेजः प्रसारय स्वेच्छयैव संकोचय ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे दशमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

१ क. °ष्ठः सर्वलो° । २ क. ग. अस्मानाग° ।

अथ पञ्चमोऽनुवाकः ।

---

चतुर्थे यजमानस्योपस्थानमुक्तम् । पञ्चमे होतुरनुशंसनमुच्यते । कल्पः—"जघनेनाग्निं प्राङ्मुख उपविश्य संचितोक्थ्येन होताऽनुशंसति—भूर्भुवः स्वरित्यनुवाकेन" इति । पाठस्तु—

भूर्भुवः स्वः । ओजो बलम् । ब्रह्म क्षत्रम् । यशो महत् । सत्यं तपो नाम । रूपममृतम् । चक्षुः श्रोत्रम् । मन आयुः । विश्वं यशो महः । समं तपो हरो भाः । जातवेदा यदि वा पावकोऽसि । वैश्वानरो यदि वा वैद्युतोऽसि । शं प्रजाभ्यो यजमानाय लोकम् । ऊर्जं पुष्टिं दददभ्यावबृत्स्व (१), इति ।

भाश्चत्वारि च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके दशमाध्याये पञ्चमोऽनुवाकः ॥ ५ ॥

---

भूरादयो भा इत्येवमन्ताः पदार्था हेऽग्ने त्वदधीना इति वाक्यशेषः । भूर्भुवः स्वरित्येते त्रयो लोकाः । ओजो बलहेतुरष्टमो धातुः । बलं शरीरशक्तिः । ब्रह्मक्षत्रे जातिविशेषौ । महद्यशो महती कीर्तिः । सत्यं यथार्थभाषणम् । तपः कृच्छ्रचान्द्रायणादि । नामाऽऽचार्योपाध्यायादि । रूपं शरीरगतलावण्यम् । अमृतं देवत्वपदम् । चक्षुःश्रोत्रमनआयूंषि प्रसिद्धानि । विश्वं यशः सर्वा कीर्तिः । पूर्वमेतल्लोकविषया धनविद्यादिकीर्तिरुक्ता । इदानीं तु परलोकविषयाऽनुष्ठानकीर्तिरिति विशेषः । महः पूजा । समं सर्वत्र साम्यबुद्धिः । तपः संतापशक्तिः । हरः शरीरगता दीप्तिः । भा रश्मिरूपं तेजः । एतत्सर्वं त्वदधीनम् । तादृशस्त्वं यदि जातवेदा उत्पन्नजगदभिज्ञः पावकः प्राणिनां शोधकोऽसि यदि वा वैश्वानरः सर्वपुरुषहितो वैद्युतो विद्युत्प्रभावोऽग्निरासि

सर्वथाऽपि प्रजाभ्यो यजमानाय च शं सुखं लोकं स्वर्गमूर्जं क्षीरादिरसं पुष्टिं धनादिसमृद्धिं ददत्प्रयच्छन्नभ्याववृत्स्वाऽऽभिमुख्येनाऽऽवृत्तो भव ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीय-ब्राह्मणभाष्ये तृतीयकाण्डे दशमप्रपाठके पञ्चमोनुवाकः ॥ ५ ॥

---

अथ षष्ठोऽनुवाकः ।

---

पञ्चमे होतुरनुशंसनमुक्तम् । षष्ठे बहूनामाहुतीनां शतरुद्रीयादिमन्त्रसाध्यानां संस्रावेणाऽऽज्येन मुखशोधनमुच्यते । कल्पः—"तासां संस्रावेण यजमानो मुखं विमृष्टे—राज्ञी विराज्ञीत्यनुवाकेन" इति । पाठस्तु—

राज्ञीं विराज्ञीं । सम्राज्ञीं स्वराज्ञीं । अर्चिः
शोचिः । तपो हरो भाः । अग्निरिन्द्रो
बृहस्पतिः । विश्वे देवा भुवनस्य गोपाः ।
ते मा सर्वे यशसा सꣳसृजन्तु (२), इति ।

राज्ञीन्द्रों मा सप्त ।

**इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके दशमाध्याये षष्ठोऽनुवाकः ॥ ६ ॥**

---

राज्यादयो देवताविशेषाः । राज्ञी राजमाना । विराज्ञी विविधं राजमाना । सम्राज्ञी सम्यग्राजमाना । स्वराज्ञी, आभरणप्रदीपादिनैरपेक्ष्येण स्वयमेव राजमाना । अर्चिर्ज्वालाभिमानिनी । शोची रश्म्याभिमानिनी तपः संतापशक्तिः । हरः पापहरणशक्तिः । भाः पदार्थावभासनशक्तिः । अग्न्यादयः प्रसिद्धाः । ते सर्वे भुवनस्य गोपा रक्षकाः सन्तः स्वकीयेन यशसा मां संसृजन्तु तत्संबन्धि-सामर्थ्यं ममास्तु ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीय-ब्राह्मणभाष्ये तृतीयकाण्डे दशमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

१ क. शोचिरुष्णाभि° । २ क. ग. °न्तु तत्सं° ।

अथ सप्तमोऽनुवाकः ।

षष्ठे मुखविमार्जनमुक्तम् । सप्तमे होमा उच्यन्ते । कल्पः—"अथैकविंशतिमाहुतीर्जुहोति—असवे स्वाहा वसवे स्वाहेत्यनुवाकेन प्रतिमन्त्रम्" इति। पाठस्तु—

असवे स्वाहा वसवे स्वाहा । विभुवे स्वाहा विवस्वते स्वाहा । अभिभुवे स्वाहाऽधिपतये स्वाहा । दिवांपतये स्वाहाꣳऽहस्पत्याय स्वाहा। चाक्षुष्मत्याय स्वाहा ज्योतिष्मत्याय स्वाहा । राज्ञे स्वाहा विराज्ञे स्वाहा । सम्राज्ञे स्वाहा स्वराज्ञे स्वाहा । शूषाय स्वाहा सूर्याय स्वाहा । चन्द्रमसे स्वाहा ज्योतिषे स्वाहा । सꣳसर्पाय स्वाहा कल्याणाय स्वाहा । अर्जुनाय स्वाहा (१), इति ।

कल्याणाय स्वाहैकं च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके दशमाध्याये सप्तमोऽनुवाकः ॥ ७ ॥

असुवसुप्रभृतयाश्चित्यस्याग्नेर्मूर्तिविशेषाः । असुः प्राणस्तद्रूपायाग्नये, स्वाहुतमिदमस्तु । वसुर्जगन्निवासहेतुः । विभूर्वैभवहेतुः । विवस्वान्विशेषेण निवासहेतुः। अभिभूः शत्रूणामभिभविता । अधिपतिरधिष्ठाय पालयिता । दिवांपतिर्द्युलोकपालकः । अहंस्पत्यः पापात्पालयिता । चाक्षुष्मत्यश्चक्षुष्मतां स्वामी । ज्योतिष्मत्यो ज्योतिष्मतां नक्षत्रादीनां स्वामी । रा॒ज्ञ इत्यादिशब्दाश्चत्वारः पूर्ववत् । शूषो बलम् । सूर्यश्चन्द्रमाश्चोभौ प्रसिद्धौ । ज्योतिः प्रकाशः । संसर्पः

१ क. राजादि ।

सम्यक्प्रापणीयः पदार्थः । कल्याणं मङ्गलम् । अर्जुनः श्वेतवर्णः । एतेभ्यो मूर्तिविशेषेभ्यः स्वाहुतमिदमस्तु ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे दशमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

अथाष्टमोऽनुवाकः ।

---

सप्तमे होमा उक्ताः । अष्टमे मृत्युग्रहोऽभिधीयते । कल्पः—"औदुम्बरेण पात्रेण पूष्णो मृत्यवे ग्रहं गृह्णाति—विपश्चिते पवमानायेति ग्रहणसादनौ" इति। पाठस्तु—

विपश्चिते पवमानाय गायत । मही न धाराऽत्यन्धो अर्षति । अहिर्ह जीर्णामतिसर्पति त्वचम् । अत्यो न क्रीडन्नसरद्वृषा हरिः । उपयामगृहीतोऽसि मृत्यवे त्वा जुष्टं गृह्णामि । एष ते योनिर्मृत्यवे त्वा, इति ।

हे ऋत्विग्यजमाना विपश्चितेऽभिज्ञाय पवमानाय शोधकाय मृत्यवे गायत स्तोत्रैर्गानं कुरुत । अयं मृत्युदेवो मही न धारा महती वृष्टिधारेवान्धोऽन्नमत्यर्षत्यातिशयेन प्राप्नोति । यथा वृष्टिधारयाऽन्नं समृद्धं भवति, एवमस्यानुग्रहेणाप्यन्नसमृद्धिर्भवति । अस्य देवस्य विनाशाभावे दृष्टान्तः । अहिर्ह सर्प इव जीर्णां त्वचमतिसर्पति । यथा सर्पो जीर्णां त्वचमतिमुच्य स्वयं जीवन्नेव परतः सर्पति न तु त्वचा सह म्रियत एवमयं मृत्युदेवोऽपि न म्रियत इत्यर्थः । किंचात्यो न व्याप्त इव क्रीडन्नयं मृत्युर्वृषा कामाभिवर्षको हरिः पापहर्ता च भूत्वाऽसरत्सर्वत्र प्रवृत्तः । हे पशुरस त्वमुपयामगृहीतोऽसि पृथिवीकार्येणौदुम्बरपात्रेणोपयामाख्येन गृहीतोऽसि । तादृशं त्वां मृत्यवे जुष्टं प्रियं गृह्णामि । अनेन मन्त्रेण ग्रहणम् । एष वेदिप्रदेशस्ते योनिः स्थानमतो मृत्यवे मृत्युप्रीत्यर्थं त्वामत्र सादयामि ।

---

१ ग. पूष्णो । २ इ. गृह्णामि ।

कल्पः-" अथ जुहोत्यपमृत्युमपक्षुधम् " इति । पाठस्तु---

अपमृत्युमपक्षुधम् । अपेतः शपथं जहि । अधा नो
अग्न आवह । रायस्पोषꣳ सहस्रिणम् ( १ ) ।
ये ते सहस्रमयुतं पाशाः । मृत्यो मर्त्याय हन्तवे ।
तान्यज्ञस्य मायया । सर्वानवयजामहे, इति ।

हेऽग्ने मृत्युं मरणमपजहि । क्षुधं क्षुद्बाधामपजहि । इतोऽस्मात्सकाशाच्छपथं परकीयं शापमपजहि विनाशय । अथ तद्विनाशानन्तरं नोऽस्माकं सहस्रिणं सहस्रसंख्यायुक्तं रायस्पोषं धनपुष्टिमावह संपादय । हे मृत्यो मर्त्याय हन्तवे मनुष्यं हन्तुं ते तव ये सहस्रमयुतं च पाशाः सन्ति तान्यज्ञस्य मायया। यज्ञो वै विष्णुरिति श्रुतेः । परमेश्वरस्य मायया शक्त्याऽवयजामहे विनाशयामः ।

कल्पः-" तस्येडामनु भक्षो भक्षयति । भक्षोऽस्यमृतभक्षः " इति । तस्य पशोरिडाया अनन्तरं ग्रहभक्षो भवति तं च भक्षयेत् । पाठस्तु-

भक्षोऽस्यमृतभक्षः ।तस्य ते मृत्युपति-
स्यामृतवतः । स्वगाकृतस्य मधुमतः ।
उपहूतस्योपहूतो भक्षयामि, इति ।

हे ग्रह त्वममृतभक्षोऽमृतवत्प्रीत्या भक्षणार्हो मम भक्षोऽसि । तस्य ते तादृशस्य तदंशमुपहूतोऽनुज्ञातोऽहं भक्षयामि । कीदृशस्य तव मृत्युपीतस्य मृत्युदेवेन प्रथमं पीतस्य, अमृतवतोऽमृतसमानेन स्वादुत्वेनोपेतस्य, स्वगाकृतस्य स्वाधीनत्वेन संपादितस्य मधुमतो माधुर्ययुक्तस्य । उपहूतस्यानुज्ञातस्य ।

कल्पः-" भक्षयित्वा प्राणनिवहानात्मन्प्रतिष्ठापयते मन्द्राऽभिभूतिरित्यनुवाकशेषेण " इति । पाठस्तु---

मन्द्राऽभिभूतिः केतुर्यज्ञानां वाक् । असावेहि
( २ ) । अन्धो जागृविः प्राण । असावेहि ।
बधिर आक्रन्दयितरपान । असावेहि । अह-

स्तोस्त्वा चक्षुः । असावेहि । अपादाशो मनः । असावेहि । कवे विप्रचित्ते श्रोत्रं । असावेहि ( ३ ) । सुहस्तः सुवासाः । शूरो नामास्यमृतो मर्त्येषु । तं त्वाऽहं तथा वेद । असावेहि । अग्निर्मे वाचि श्रितः । वाग्घृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । वायुर्मे प्राणे श्रितः ( ४ ) । प्राणो हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । सूर्यो मे चक्षुषि श्रितः । चक्षुर्हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । चन्द्रमा मे मनसि श्रितः ( ५ ) । मनो हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । दिशो मे श्रोत्रे श्रिताः । श्रोत्रꣳ हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । आपो मे रेतसि श्रिताः ( ६ ) । रेतो हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । पृथिवी मे शरीरे श्रिता । शरीरꣳ हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । ओषधिवनस्पतयो मे लोमसु श्रिताः ( ७ ) । लोमानि हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । इन्द्रो मे बले

श्रितः । बलꣳ हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । पर्जन्यो मे मूर्धनि श्रितः (८) । मूर्धा हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । ईशानो मे मन्यौ श्रितः । मन्युर्हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । आत्मा म आत्मनि श्रितः । आत्मा हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । पुनर्म आत्मा पुनरायुरागात् । पुनः प्राणः पुनराकूतमागात् । वैश्वानरो रश्मिभिर्वावृधानः । अन्तस्तिष्ठत्वमृतस्य गोपाः (९), इति ।

सहस्रिणमिहि श्रोत्रासावेहि प्राणे श्रितो मनसि श्रितो रेतसि श्रिता लोमसु श्रिता मूर्ध्नि श्रित आत्मनि श्रितोऽष्टौ च ।

अग्निर्वायुः सूर्यश्चन्द्रमा दिश आपः पृथिव्योषधिवनस्पतय इन्द्रः पर्जन्य ईशान आत्मा पुनर्मे त्रयोदश ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके दशमाध्यायेऽष्टमोऽनुवाकः ॥ ८ ॥

---

येयं वागस्माभिर्वक्ष्यमाणा मन्त्ररूपा सेयं मन्द्रा हर्षहेतुः, अभिभूतिर्विरोधिनामभिभवहेतुः, यज्ञानां केतुर्ज्ञानहेतुः । हे वाग्देवि, असौ पूर्वोक्तमन्द्रादिगुणवती भूत्वेहि समागच्छ[1] । योऽयं प्राणवायुर्मुखनासिकावर्ती दर्शनशक्त्यभावादन्धः, उच्छ्वासक्रियायामप्रमत्तत्वाज्जागृविः । हे प्राण, असावेहि तादृशो

---

1 क. ग. °हि मध्यग°।

भूत्वा समागच्छ । एवं सर्वत्र द्रष्टव्यम् । अपानवायुः श्रवणशक्त्यभावाद्बधिरः । उदरमध्ये क्रन्दनस्य ध्वनिविशेषस्य हेतुत्वादाक्रन्दयिता । हेऽपानवायो तादृशः सन्नागच्छ । यदिदं चक्षुरिन्द्रियं तदहस्तोः । आदानशक्तिराहित्यादहस्तम् । हे चक्षुरिन्द्रिय तादृशं त्वामाह्वयामि तथाविधः सन्नेहि । यदिदं मनोऽस्ति तदपादाशो गमनशक्त्यभावात्पादरहितं सर्वगोचरत्वाद्व्यापकम् । हे मनस्तथाविधं भूत्वा समागच्छ । श्रोत्रेन्द्रियं शब्दवेदनसद्भावात्कविरूपं, तच्च शब्दान्विविच्य प्रकर्षेण चेतयत इति विप्रचित्तिः । तादृश हे श्रोत्र तथाविधं भूत्वा समागच्छ । योऽयं सर्वेन्द्रियस्वामी जीवात्मा सोऽयं हस्तस्वामित्वात्सुहस्तः, सुष्ठु देहे वसनात्सुवासाः, मर्त्येषु मरणयुक्तेषु देहेष्वमृतो मरणरहितः सन्वर्तते । तादृश जीव त्वं शूषो नामासि सर्वव्यापारसमर्थत्वात्प्रबल इत्येतादृशनामधार्यसि । तादृशं त्वामहं तथैव जानामि । त्वं तादृशो भूत्वाऽस्मिन्नेव शरीरे समागच्छ । वागिन्द्रियस्याग्निरभिमानिदेवता । अत एव शाखान्तरे श्रूयते—"अग्निर्वाग्भूत्वा मुखं प्राविशद्वायुः प्राणो भूत्वा नासिके प्राविशत्" इत्यादि । सोऽग्निर्मम वागिन्द्रिये श्रितो भवतु । सा च वाङ्मदीये हृदयेऽन्तःकरणे श्रिता भवतु । तच्च हृदयं मय्यहंकर्तरि जीवात्मनि श्रितं भवतु । अहं चामृते विनाशरहिते जगत्कारणे मायाविद्याशक्त्यव्याकृतादिशब्दैर्वेदेषु श्रूयमाणे प्रधाने श्रितो भवानि । तच्चामृतमव्याकृतं ब्रह्मणि सत्यं ज्ञानमनन्तमित्यादिश्रुतिप्रतिपाद्ये वस्तुनि श्रितं भवतु । एवं वायुर्मे प्राणे श्रित इत्यादिपर्याया व्याख्येयाः । अन्तिमे पर्याये प्रथम आत्मशब्दो ब्रह्माण्डरूपविराड्देहवर्तिनामिन्द्रवाय्वादिदेवतासमूहमाचष्टे । द्वितीय आत्मशब्दोऽनुष्ठातृदेहवर्तिनं वाक्प्राणादिसंघातमाचष्टे । अन्यत्पूर्ववद्व्याख्येयम् । योऽयं मृत्युमहर्भीत्या पलायितुमुद्युक्तो मदीय आत्मा देहः स पुनरागच्छतु । आयुरपि पुनरागच्छतु । प्राणोऽपि पुनरागच्छतु । आकूतं मनसः संकल्पः सोऽपि पुनरागच्छतु । योऽयं वैश्वानरो जाठराग्निः सोऽयमपि रश्मिभिर्वर्धमानोऽमृतस्यान्नस्य गोपा रक्षकः सन्मदीयशरीरस्यान्तस्तिष्ठतु ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे दशमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

१ क. ख. समागच्छ ।

अथ नवमोऽनुवाकः ।

अष्टमे मृत्युग्रहोऽभिहितः । एतावता सावित्राग्निचयनाङ्गमन्त्रप्रतिपादका अनुवाकाः समाप्ताः । उत्तरेष्वनुवाकेषु ब्राह्मणमभिधीयते । तत्रास्मिन्ननुवाके ध्यानरूपा सावित्राग्निविद्याऽभिधीयते । आदौ तावन्मृत्युग्रहशेषत्वे मन्त्रद्वयं विधातुं प्रस्तौति–

प्रजापतिर्देवानसृजत । ते पाप्मना संदिता अजायन्त । तान्व्यद्यत् । यद्व्यद्यत् । तस्माद्विद्युत् । तमवृश्चत् । यदवृश्चत् । तस्माद्वृष्टिः । तस्माद्यत्रैते देवते अभिप्राप्नुतः । वि च हैवास्य तत्र पाप्मानं द्यतः ( १ ) । वृश्चतश्च, इति ।

प्रजापतिसृष्टा ये देवास्ते पाप्मना संदिताः संयुक्ता एवोत्पन्नाः । स प्रजापतिस्तान्देवान्पाप्मनः सकाशाद्व्यद्यद्वियोजितवान् । अत एव व्यद्यदिति व्युत्पत्त्या तस्या देवताया विद्युन्नाम संपन्नम् । तं च पाप्मानमवृश्चच्छिन्नवान् । अवृश्चदित्यनयैव व्युत्पत्त्या वृष्टिनाम संपन्नम् । यस्मादेवं तस्माद्यत्र कर्मण्येते विद्युद्वृष्टिदेवते आभिमुख्येन प्राप्नुतस्तत्रास्य यजमानस्य पापं वियोजयतो विच्छिन्नं च कुरुतः ।

विधित्सितयोर्मन्त्रयोर्विषयं निश्चिनोति–

सैषा मीमाꣳसाऽग्निहोत्र एव संपन्ना । अथो आहुः । सर्वेषु यज्ञक्रतुष्विति, इति ।

येयं मन्त्रद्वयानुष्ठानविषया मीमांसा सेयमग्निहोत्र एव संप्राप्ता न त्वन्यत्रेत्येकं मतम् । एतदेवाऽऽश्रित्य बोधायनादयो वर्तन्ते । अपि चान्ये केचिदेवमाहुः । सर्वेष्वपि यज्ञक्रतुषु मन्त्रद्वयमनुष्ठेयमिति । तदिदं मतमाश्रित्याऽऽपस्तम्बादयो वर्तन्ते ।

यदुक्तं सूत्रकारेण तदाह–

होष्यन्नप उपस्पृशेत् । विद्युदसि विद्य मे

---

१ क. ख. °न्नवमेऽनु° । २ क. समाप्ता ।

पाप्मानमिति। अथ हुत्वोपस्पृशेत्। वृष्टिरसि वृश्च मे पाप्मानमिति। यक्ष्यमाणो वेष्ट्वा वा। वि च हैवास्यैते देवते पाप्मानं घ्नतः (२)। वृश्चतश्च, इति।

हे देवते त्वं विद्युद्वियोगहेतुरसि। अतो मे पाप्मानं विद्य वियोजय। तथा हे देवते वृष्टिश्छेदनहेतुरसि। अतो मे पाप्मानं वृश्च च्छिन्धि। एतयोर्मन्त्रयोर्मृत्युग्रहे होष्यन्नित्यादिविधिः सर्वयज्ञविषयो यक्ष्यमाण इत्यादिविधिः। वि च हेत्यादि पूर्ववत्।

तदेवं सावित्राग्निविषयं चयनं परिसमाप्य तद्विषयां विद्यां वक्तुमाख्यायिकामाह—

अत्यꣳहो हाऽऽरुणिः। ब्रह्मचारिणे प्रश्नान्प्रोच्य प्रजिघाय। परेहि। प्लक्षं दय्यांपातिं पृच्छ। वेत्थ सावित्रा ३ न्न वेत्था ३ इति। तमागत्य पप्रच्छ। आचार्यो मा प्राहैषीत्। वेत्थ सावित्रा ३ न्न वेत्था ३ इति। स होवाच वेदेति (३), इति।

अंहः पाप्मानमतिक्रम्य वर्तत इत्यत्यंहः। एतन्नामको मुनिररुणस्य पुत्रः। स च स्वशिष्याय कस्मैचिद्ब्रह्मचारिणे प्रष्टव्यानर्थानुक्त्वा तं ब्रह्मचारिणमन्यस्य मुनेः समीपे प्रेषयामास। भो ब्रह्मचारिन्, दयांपातनामकस्य मुनेः पुत्रं दय्यांपातिं प्लक्षनामकं मुनिं गत्वा सावित्राग्निं वेत्थ न वेत्थेत्येवं प्रश्नं कुर्विति। स च ब्रह्मचारी तं प्लक्षं गत्वा स्वकीयस्याऽऽचार्यस्याऽऽज्ञां कथयित्वा तथैव सावित्रं जानासि न वेत्येवं पप्रच्छ। स च प्लक्षो वेदेत्युत्तरमुक्तवान्।

अथ ब्रह्मचारिप्रश्नानां प्लक्षस्योत्तराणां च परम्परां दर्शयति—

स कस्मिन्प्रतिष्ठित इति। परोरजसीति। कस्तद्यत्परोरजा इति। एष वाव स परो-

रजा इति होवाच । य एष तपति । एषोऽर्वाग्रजा इति । स कस्मिन्न्वेष इति । सत्य इति । किं तत्सत्यमिति । तप इति ( ४ ) । कस्मिन्नु तप इति । बल इति । किं तद्बलमिति । प्राण इति । मा स्म प्राणमतिपृच्छ इति माऽऽचार्योऽब्रवीदिति होवाच ब्रह्मचारी, इति ।

हे मुने यदि सावित्रमग्निं वेत्सि तर्हि सोऽग्निः कस्मिन्नाश्रये प्रतिष्ठित इति ब्रह्मचारिणः प्रश्नः । रजसा रजोगुणयुक्ताज्जन्ममरणप्रवाहरूपात्संसारात्परस्ताद्यो वर्तते सोऽयं परोरजास्तस्मिन्नयं सावित्रोऽग्निः प्रतिष्ठित इति प्रश्नस्योत्तरं यत्त्वयोक्तं तद्विस्पष्टं वक्तव्यम् । कोऽयं परोरजा इति प्रश्नः । य एष मण्डलात्मा दृश्यते स एष एव परोरजा इत्युत्तरम् । मांसचक्षुषा दृश्यमान एष मण्डलात्मा संसारमध्यवर्तित्वादर्वाग्रजा एव न तु परोरजा इत्यतो नैतद्युक्तमुत्तरम् । किं तु, एष सोऽग्निः कस्मिन्संसारातीत आश्रये प्रतिष्ठितः स वक्तव्य इति प्रश्नः । यत्सत्यं पारमार्थिकं वस्तु तस्मिन्प्रतिष्ठित इत्युत्तरम् । तच्च सत्यं वस्तु किमिति प्रश्नः । केन साधनेन लभ्यत इत्यभिप्रायः । तपसा लभ्यत इत्यभिप्रेत्य तप एव सत्यमित्युत्तरमुक्तम् । तच्च साधनरूपं तपः कस्मिन्प्रतिष्ठितमिति प्रश्नः । सति शरीरबले तपसोऽनुष्ठातुं शक्यत्वाद्बले तपः प्रतिष्ठितमित्युत्तरम् । बलकारणवस्तुनो विवक्षितत्वात्किं तद्बलमिति प्रश्नः । प्राणस्य बलकारणत्वमभिप्रेत्य प्राणो बलमित्युत्तरमुक्तम् । अनया प्रश्नोत्तरपरम्परया सावित्रस्याग्नेः प्रतिष्ठारूपं यत्सत्यं वस्तु तत्प्राणदेवतारूपेण शरीरे प्रतिष्ठितम् । तत्तथैव ध्यातव्यमिति निर्णयः संपन्नः । प्राणादूर्ध्वं वस्त्वन्तरप्रश्नो न कर्तव्य इत्येतादृशीमाचार्याज्ञां ब्रह्मचार्युक्तवान् ।

अथ प्रसङ्गात्सावित्राग्निदेवताविषये मात्सर्यपूर्वकं संवादं निषेधति—

स होवाच प्लक्षो दय्यांपातिः । यद्वै ब्रह्मचारिन्प्राणमत्यप्रक्ष्यः । मूर्धा ते व्यपतिष्यत् ।

अहमुत आचार्याच्छ्रेयान्भविष्यामि । यो
मां सावित्रे समवादिष्टेति ( ५ ) । तस्मा-
त्सावित्रे न संवदेत, इति ।

स प्लक्षो ब्रह्मचारिणं प्रत्येवमुक्तवान् । हे ब्रह्मचारिंस्त्वदीयेनाऽऽचार्येण तुभ्य-मत्यन्तं हितमेवोक्तम् । यदि त्वं प्राणदेवतां सर्वोत्तमामतिक्रम्य तदाश्रयत्वेनान्यां देवतां पृच्छेत्त(स्त)दा तव मूर्धा विपतेत् । अतो नास्त्येव प्राणादुत्तमा देवता। किंच यस्त्वदीय आचार्यो मां प्रति सावित्राग्निदेवताविषये मात्सर्येण संवादं कृतवान् । तस्मात्तव संबन्धिन आचार्यादहमेवातिशयेन प्रशस्तो भविष्यामि । यस्मादस्मि-न्नुपाख्याने प्लक्ष एवमुवाच तस्माद्रहस्ये सावित्रविज्ञाने कश्चिदपि मात्सर्येण संवादं न कुर्यात् । किं त्वाचार्योपदिष्टेनैव मार्गेण ध्यायेत् । अयं न्यायः सर्वे-ष्वप्युपदेशगम्येषु रहस्येषु समानः ।

विपक्षे बाधकोपन्यासमुखेन संवादनिषेधमेव प्रशंसति—

स यो ह वै सावित्रं विदुषा सावित्रे संवदते ।
सहास्मिञ्छ्रियं दधाति । अनु ह वा अस्मा
असौ तपञ्छ्रियं मन्यते । अन्वस्मै श्रीस्तपो
मन्यते । अन्वस्मै तपो बलं मन्यते । अन्वस्मै
बलं प्राणं मन्यते, इति ।

स यो ह वै यः कोऽपि विद्यागर्वपराधीनः पुमान्सावित्रमग्निं विदुषा ध्यानेन साक्षात्कृतवता पुरुषेण सह तस्मिन्सावित्राग्निविषये मात्सर्येण संवादं करोति स खल्वस्मिन्विदुषि स्वकीयां श्रियं प्रक्षिपति । तदेव स्पष्टी क्रियते—असौ मात्सर्य-ग्रस्तः पुमांस्तपन्सावित्रध्यानादिरूपं तपः कुर्वञ्छ्रियं तपःफलरूपामस्मै विदुषेऽनुम-न्यत एव मदीया श्रीस्तव गच्छेदिति फलमङ्गीकरोत्येव । सा च श्रीस्तदीयं तपोऽप्यस्मै विदुषेऽनुमन्यते । तच्च तपस्तदीयं बलमस्मै विदुषेऽनुमन्यते । तच्च बलं तदीयं प्राणं देवतारूपम् । मात्सर्यग्रस्तः सर्वस्मादेतस्माद्भ्रश्येत् । विद्वांस्तु सर्वैरप्येतैरभिवर्धते । तस्माद्विदुषा सह न संवदेत ।

अथ संज्ञानमित्यादिभिरवान्तरानुवाकैर्योऽर्थः प्रतिपादितः स सर्वोऽपि सावि-

त्राग्निदेवतास्वरूपत्वेन ज्ञातव्य इत्यभिमेत्य शुक्लपक्षस्याहोरात्रनामप्रतिपादकयोः प्रथमतृतीयानुवाकयोस्तात्पर्यं दर्शयति---

स यदाह । संज्ञानं विज्ञानं दर्शाहृ-
ष्टेति । एष एव तत् ( ६ ), इति ।

स मन्त्रभागः संज्ञानं दर्शेत्याभ्यामनुवाकाभ्यां यद्वस्तु ब्रूते तद्वस्तु ध्यातव्यम्। एष सावित्रोऽग्निरेव ।

कृष्णपक्षस्याहोरात्रयोः प्रतिपादकयोः पञ्चमसप्तमानुवाकयोस्तात्पर्यं दर्शयति--

अथ यदाह । प्रस्तुतं विष्टुत२ सुता
सुन्वतीति । एष एव तत्, इति ।

उक्तानुवाकचतुष्टयतात्पर्यं निगमयति--

एष ह्येव तान्यहानि । एष रात्रयः, इति ।

प्रथमपञ्चमयोरुक्तानि यानि शुक्लकृष्णपक्षगतान्यहानि तानि सर्वाण्येष सावित्रोऽग्निरेव । तृतीयसप्तमयोरुक्ताः शुक्लकृष्णपक्षगता रात्रयो याः सन्ति ताः सर्वा एष सावित्राग्निरेव ।

चित्र इत्यस्मिन्द्वितीयानुवाके प्रोक्ताः शुक्लपक्षाहर्गता ये मुहूर्ता दातेत्यस्मिंश्चतुर्थानुवाके प्रोक्तास्तद्रात्रिगता ये मुहूर्ता सवितेत्यस्मिन्षष्ठानुवाके प्रोक्ताः कृष्णपक्षाहर्गता ये मुहूर्ता अभिशास्तेत्यस्मिन्नष्टमानुवाके प्रोक्तास्तद्रात्रिगता ये मुहूर्तास्तेषां सर्वेषां सावित्राग्निरवरूपत्वं दर्शयति--

अथ यदाह । चित्रः केतुर्दाता प्रदाता
संविता प्रसविताऽभिशास्ताऽनुमन्तेति ।
एष एव तत् । एष ह्येव तेऽह्नो मुहूर्ताः ।
एष रात्रेः ( ७ ), इति ।

पवित्रमित्यस्मिन्नवमानुवाके प्रोक्ता ये द्वादश शुक्लपक्षाः सहस्वानित्यस्मिन्दशमानुवाके प्रोक्ता ये द्वादश कृष्णपक्षाः, अरुण इत्यस्मिन्नेकादशानुवाके

प्रोक्ता अधिकमासेन सह ये त्रयोदश मासास्तेषां सर्वेषां सावित्राग्निरूपत्वं दर्शयति—

अथ यदाह। पवित्रं पवयिष्यन्त्सहस्वान्त्स-
हीयानरुणोऽरुणरजा इति। एष एव तत्।
एष ह्येव तेऽर्धमासाः। एष मासाः, इति।

एजत्का इत्यस्मिन्द्वादशानुवाके प्रोक्ता ये सिकताविशेषास्तेषामपि सावित्राग्निरूपत्वं द्रष्टव्यम्।

अग्निष्टोम इत्यस्मिंश्चतुर्दशानुवाके प्रोक्ता ये यज्ञक्रतवः, अग्निरित्यस्मिन्पञ्चदशानुवाके प्रोक्ता य ऋतवः, प्रजापतिरित्यस्मिन्षोडशानुवाके प्रोक्तो यः संवत्सरस्तेषां सर्वेषां सावित्राग्निरूपत्वं दर्शयति—

अथ यदाह। अग्निष्टोम उक्थ्योऽग्निर्ऋतुः
प्रजापतिः संवत्सर इति। एष एव तत्।
एष ह्येव ते यज्ञक्रतवः। एष ऋतवः (८)।
एष संवत्सरः, इति।

इदानीमित्यस्मिंस्त्रयोदशानुवाके प्रोक्ता ये मुहूर्तानां संबन्धिनोऽवान्तरमुहूर्तास्तेषां सर्वेषां सावित्राग्निस्वरूपत्वं दर्शयति—

अथ यदाह। इदानीं तदानीमिति। एष एव
तत्। एष ह्येष ते मुहूर्तानां मुहूर्ताः, इति।

सावित्राग्निवेदनस्य फलं वक्तुमुपाख्यानमाह—

जनको ह वैदेहः। अहोरात्रैः समाजगाम। तꣳ
होचुः। यो वा अस्मान्वेद। विजहत्पाप्मान-
मेति (९)। सर्वमायुरेति। अभि स्वर्गं लोकं
जयति। नास्यामुष्मिँल्लोकेऽन्नं क्षीयत इति, इति।

विदेहदेशाधिपतिर्जनको राजा तत्फलजिज्ञासुरहोरात्राभिमानिभिर्देवैः सह संगतिं कृतवान् । तं जनकं प्रति ते देवास्तत्फलमेवमूचुः । यः कश्चिदस्मानहोरात्रदेवान्वेद सावित्राग्निरूपत्वेनोपास्ते सोऽयं पुमान्स्वकीयं पाप्मानं विजहत्परित्यजन्नेति संचरति । अपमृत्युराहित्यात्सर्वमप्यायुः प्राप्नोति । अन्ते च स्वर्गं लोकमभिजयति । अस्य स्वर्गलोके कदाचिदप्यन्नं न क्षीयत इति ।

एवमुपाख्यानेन फलं प्रशस्य श्रुतिः स्वयमेव वेदितुस्तत्फलमाह—

विजहद्ध वै पाप्मानमेति । सर्वमायुरेति । अभि
स्वर्गं लोकं जयति । नास्यामुष्मिँल्लोकेऽन्नं क्षीयते ।
य एवं वेद, इति ।

पुनरपि फलं विशदीकर्तुं कस्यचिदृषेर्वृत्तान्तमुदाहरति—

अहीना हाऽऽश्वत्थ्यः । सावित्रं विदांचकार (१०) ।
स ह हꣳसो हिरण्मयो भूत्वा स्वर्गं लोकमियाय । आदि-
त्यस्य सायुज्यम्, इति ।

अहीनानामकः कश्चिदृषिरश्वत्थनामकस्य मुनेः पुत्रः । हशब्दस्तत्प्रसिद्ध्यर्थः । स मुनिरेतं सावित्राग्निं स्वस्वरूपत्वेन ध्यात्वा विदांचकार साक्षात्कृतवान् । स खलु देहान्ते सुवर्णदेहो हंसो भूत्वा स्वर्गं प्राप्याऽऽदित्यस्य सायुज्यं तादात्म्यं प्राप्तवान् ।

वृत्तान्तमुदाहृत्योपासकस्य फलं विशदयति—

हꣳसो ह वै हिरण्मयो भूत्वा । स्वर्गं लोकमेति । आदि-
त्यस्य सायुज्यम् । य एवं वेद, इति ।

उक्तं फलमुपाख्यानान्तरेण दृढयति—

देवभागो ह श्रौतर्षः । सावित्रं विदांचकार ।
तꣳ ह वागदृश्यमानाऽभ्युवाच (११) । सर्व
वत गौतमो वेद । यः सावित्रं वेदेति । सहो-

वाच । कैषा वागसीति । अयमह५ सावित्रः ।
देवानामुत्तमो लोकः । गुह्यं महो विभ्रदिति ।
एतावति ह गौतमः । यज्ञोपवीतं कृत्वाऽधो निपपात । नमो नम इति ( १२ ) । स होवाच । मा
भैषीर्गौतम । जितो वै ते लोक इति, इति ।

देवान्भजतीति देवभाग एतन्नामकः कश्चिन्मुनिः श्रौतर्षः श्रौतानुष्ठानाभिज्ञः । स च मुनिः सावित्रमग्निं ध्यानेन साक्षात्कृतवान् । तं सावित्राग्निस्वरूपमात्मानं पश्यन्तं देवभागं काचिद्वागदृश्यमाना सत्याभिमुख्येनैवमुवाच यो देवभागः सावित्रमग्निं वेद साक्षात्करोति सोऽयं गौतमो गौतमगोत्रोत्पन्नो मुनिः सर्वमपि जगद्वेद । बताऽऽश्चर्यमेतत्तस्य सर्वज्ञत्वमिति । तदेतद्वचनं श्रुत्वा केयं वागित्येवं स मुनिः पप्रच्छ । सा च वागेवमुत्तरमुवाच । अहं सावित्राग्निरूपः सन्नयमत्र वर्ते । कीदृशोऽहं सर्वेषां देवानामुत्तमलोकरूपः सर्वेऽपि देवा मय्येव निवसन्ति । किंच गुह्यं महो बिभ्रत्सर्ववेदान्तेषु गोप्यं तेजो धारयन्निहास्मीति । एतावति सावित्राग्निदेवस्य वचने श्रुते सति तदानीमेव स गौतमो मुनिः स्वकीयेन वस्त्रेण यज्ञोपवीतं कृत्वा महत्या भक्त्या नमो नम इत्युच्चारयन्भूमौ दण्डवन्निपपात । तदानीं तदीयभक्त्या तुष्टः स खलु सावित्रोऽग्निस्तमनुगृह्णन्नेवमुवाच । हे गौतम मा भैषीरिदं सावित्राग्निज्ञानं सफलं जातं न वेति भयं मा कार्षीः । सर्वथा ते तवापेक्षितो लोकः फलविशेषो जितस्त्वया लब्ध इति ।

उपाख्यानेन दृढीकृतं फलमुपसंहरति—

तस्माद्ये के च सावित्रं विदुः । सर्वे ते जितलोकाः, इति ।

अथोपासनालम्बनभूतं सावित्रमन्त्रमुद्धरति—

स यो ह वै सावित्रस्याष्टाक्षरं पद५ श्रियाऽभिषिक्तं वेद । श्रिया हैवाभिषिच्यते । घृणिरिति द्वे

१ क. °त्युक्त्वाऽधस्ताद्भूमौ । २ ख. °पास्तेराल° ।

अक्षरे । सूर्य इति त्रीणि । आदित्य इति त्रीणि (१३)। एतद्वै सावित्रस्याष्टाक्षरं पदꣳ श्रियाऽभिषिक्तम्। य एवं वेद। श्रिया हैवाभिषिच्यते, इति।

यः कश्चित्पुमान्सावित्रस्याग्नेः पदं गमकमष्टभिरक्षरैरुपेतं मन्त्रं श्रीबीजेनोभयतः संबद्धं वेदोपास्ते मन्त्रमुच्चारयंस्तदर्थं स्वस्वरूपत्वेनानुसंदधाति । स पुमानादित्यप्राप्तिरूपया श्रियाऽभिषिक्तो भवति । तस्मिन्मन्त्रे घृणिरित्यक्षरद्वयम् । तस्य शब्दस्य दीप्यमान इति वाच्योऽर्थः । सूर्यपदे यकारात्प्राचीनो रेफ ईकारेण लुप्तेन सह मध्याक्षरत्वेन गणनीयः । ततस्त्रीण्यक्षराणि संपद्यन्ते । सुष्ठु ईरणं गतिर्यस्यासौ सूर्यः । अदितेः पुत्र आदित्यः । सोऽयमष्टाक्षरो मन्त्र आदावन्ते च श्रीबीजेन युक्तोऽनुसंधातव्यः । उपसंहारार्थं पुनः फलवचनमुक्तम् ।

सावित्रवेदनमृगुदाहरणेन प्रशंसति—

तदेतदृचाऽभ्युक्तम् । ऋचो अक्षरे परमे व्योमन् । यस्मिन्देवा अधि विश्वे निषेदुः। यस्तं न वेद किमृचा करिष्यति । य इत्तद्विदुस्त इमे समासत इति, इति।

तदेतत्सावित्राग्निमाहात्म्यं कयाचिदृचा विस्पष्टमुक्तम् । विविधं रक्षकं व्योम यद्वा निर्लेपत्वेन सर्वगतत्वेन चाऽऽकाशसदृशत्वाद्व्योम जगत्कारणं वस्तु तच्च भूताकाशवज्जडत्वाभावाच्चेतनत्वेन परममुत्कृष्टं तदेव सावित्रस्याग्नेर्वास्तवं रूपं तच्चाक्षरं विनाशरहितं तस्मिन्वस्तुनि ऋच ऋगुपलक्षिताः सर्वे वेदोक्ता मन्त्रा आश्रिताः । आश्रितत्वं च द्विविधम्—तत्रोत्पन्नत्वं तत्प्रतिपादने पर्यवसानं च । तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिर इति श्रुत्या सर्वैर्हूयमानाद्यज्ञहेतोः परमेश्वरादृगादीनामुत्पत्तिराम्नाता । सर्वे वेदा यत्पदमामनन्तीति श्रुत्या तत्प्रतिपादनपर्यवसानमुक्तम् । तस्मादृगादयस्तस्मिन्नक्षरेऽवस्थिताः । किंच न केवलं मन्त्राणां तत्रावस्थानं किंतु मन्त्रप्रतिपाद्याः सर्वे

देवा अपि जगत्कारणेऽधिनिषेदुरवस्थिताः । यस्मिन्सावित्राग्नितत्त्वे परवस्तुनि सर्वे समाश्रितास्तं सावित्राग्निं यो न वेदासावविद्वान्पठ्यमानयाऽपि ऋचा किं नाम प्रयोजनं करिष्यति सर्वोऽपि वेदस्तद्वेदनायैव प्रवृत्तः । विद्यते ज्ञायतेऽनेनेति वेदत्वनिरुक्तिः । वेदनाभावे सत्यात्यन्तिकपुरुषार्थाभावात्तत्पाठो नात्यन्तं सप्रयोजनः । य एव पुरुषार्थिनस्तत्सावित्राग्नितत्त्वं विदुस्ते सर्वेऽपीमेऽस्माभिर्दृश्यमाना देवभागादिमुनयः समासते सम्यञ्चः कृतकृत्या उपविशन्तीति ।

इत्थमृचा सावित्रवेदनमाहात्म्यं प्रकटीकृतम् । तस्या उदाहृताया ऋचस्तात्पर्यं संक्षेपेण दर्शयति—

न ह वा एतस्यर्चा न यजुंषा न साम्नाऽर्थोऽस्ति ।

यः सावित्रं वेद (१४), इति ।

ऋगादीनां त्रयाणां वेदानामुक्तरीत्या परतत्त्ववेदनपर्यवसायित्वादविदिते तत्त्वे तत्पाठेन तदर्थानुष्ठानेन वा न किंचित्प्रयोजनमस्ति । न हि नद्यामुत्तीर्णायां नावा प्रयोजनं पश्यामः ।

वेदनीयं स्वरूपं निष्कृष्य दर्शयति—

तदेतत्परि यद्देवचक्रम् । आर्द्रं पिन्वमानꣳ स्वर्गे

लोक एति । विजहद्विश्वा भूतानि संपश्यत्, इति ।

तदेतदादित्यमण्डलरूपं देवचक्रं देवतारूपं चक्रं सत्स्वर्गलोक एति संचरति । कीदृशं परि यदहोरात्रनिष्पादनाय परितो भ्रमणयुक्तम्, आर्द्रमादित्याज्जायते वृष्टिरिति न्यायेन वृष्टिहेतुत्वाद्द्रवीभूतम् । अत एव पिन्वमानं सर्वेषां प्रीणयितृ विश्वा भूतानि स्थावरजङ्गमरूपान्सर्वान्प्राणिनो विजहत्परित्यजद्वर्तते तदीयगुणदोषैर्न लिप्यत इत्यर्थः । संपश्यत्साक्षित्वेन सर्वान्प्राणिनोऽवलोकयद्वर्तते ।

इत्थं वेद्यं स्वस्वरूपमभिधाय तद्वेदितुस्तत्प्राप्तिरूपं फलं दर्शयति—

आर्द्रो ह वै पिन्वमानः । स्वर्गे लोक एति ।

विजहन्विश्वा भूतानि संपश्यन् । य एवं वेद इति ।

---

१ क. अनयर्चा ।

उपाख्यानान्तरेण वेदनं प्रशंसति—

शूषो ह वै वार्ष्णेयः । आदित्येन समाजगाम ।
तꣳ होवाच । एहि सावित्रं विद्धि । अयं वै
स्वर्ग्योऽग्निः । पारयिष्णुरमृतात्संभूत इति ।
एष वाव स सावित्रः । य एष तपति । एहि
मां विद्धि । इति हैवेनं तदुवाच ( १५ ), इति ।

घतो घतो वेदेति तप इति समवादिष्टेति तन्नात्रैकंतवं एति चकारोवाच नम इत्यादित्य इति त्रीणि सावित्रं वेद विद्धि पञ्च च ।

संज्ञानं प्रस्तुतं तान्यहानि चित्रः केतुस्तेऽह्नो मुहूर्ताः पवित्रं तेऽर्धमासा अग्निष्टोमो यज्ञक्रतवं इदानीं मुहूर्तानां जनको ह वा अहीना देवभागः कैषा वाक्शूषो ह वै षोडश ।

**इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके दशमाध्याये नवमोऽनुवाकः ॥ ९ ॥**

---

वृष्णिनामकस्य मुनेः पुत्रः शूषनामको मुनिः स्वस्य हितोपदेशार्थमादित्येन संगतोऽभूत् । तं शूषं स आदित्य उवाच हे शूष, अत्राऽऽगच्छेमं सावित्रमग्निं जानीहि । अयमेवाग्निः स्वर्गस्य हेतुः संसारस्य पारं नेतुं समर्थः । अमृतात्परमात्मनः समुत्पन्न इत्युक्त्वा पुनरप्यन्यदुवाच । य एष पुरुष आदित्यमण्डले तपत्येष एव स पूर्वोक्तगुणकः सावित्रोऽग्निस्तस्मादत्राऽऽगच्छ । मामादित्यं सावित्राग्निरूपं विद्धि । तत्तदानीमेनं शूषं प्रत्येतत्सर्वमादित्य उवाच ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे दशमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

अथ दशमोऽनुवाकः ।

नवमे सावित्राग्निविद्योक्ता । दशमे तदवयवविशेषवेदनान्युच्यन्ते । आदौ तावन्मधुत्वसंपादनेन किंचिद्वेदनं दर्शयति—

इयं वाव सरघा । तस्या अग्निरेव सारघं
मधु । या एताः पूर्वपक्षापरपक्षयो रात्रयः ।
ता मधुकृतः । यान्यहानि । ते मधुवृषाः ।
स यो ह वा एता मधुकृतश्च मधुवृषाश्च
वेद । कुर्वन्ति हास्यैता अग्नौ मधु । नास्ये-
ष्टापूर्तं धयन्ति, इति ।

येयं पृथिवी सेयमेव सरघा मधुमक्षिका तथा ध्यायेदित्यर्थः । तस्याः पृथिव्याः संबन्धी सावित्रोऽग्निरेव सारघं सरघाभिर्निष्पादितं मधु तथा भावयेत् । या एताः शुक्लपक्षे कृष्णपक्षे च रात्रयो विद्यन्ते ता उभयविधा अपि मधुकृतो मधुनिष्पादिका मक्षिकास्थानीयाः स्त्रियः । यानि त्वहानि पक्षद्वये विद्यन्ते ते सर्वेऽपि मधुवृषा मधुनिष्पादका मक्षिकाजातीयाः[1] पुरुषाः । यः कोऽपि पुमानेता मधुकृतः स्त्रियो मधुवृषांश्च पुरुषानुपास्तेऽस्योपासकस्यैता अहोरात्रयोर्देवता अस्मिन्ध्यातव्ये सावित्रेऽग्नौ मधु कुर्वन्त्युत्तमं फलं संपादयन्ति । अस्योपासकस्येष्टापूर्तं श्रौतस्मार्तकर्मफलं यन्मधुरूपं तत्स्वयं न पिबन्ति किंत्वेनमेव पाययन्ति ।

वेदनस्य फलमुक्त्वा वेदनाभावे तत्फलाभावं दर्शयति—

अथ यो न वेद (१) । न हास्यैता अग्नौ
मधु कुर्वन्ति । धयन्त्यस्येष्टापूर्तम्, इति ।

अथशब्दः पूर्वोक्तवैलक्षण्यार्थः । यः पुमानहोरात्रदेवता मधुनिष्पादकस्त्रीपुरुषरूपेण नोपास्तेऽस्यानुपासकस्य ध्यातव्येऽग्नौ यन्मधुसदृशं फलं देवतास्तन्न

१ क °काजातीयाः ।

संपादयन्ति । किंचेष्टापूर्तजन्यं यमन्धुस्थानीयं सारं तद्देवताः स्वयमेव पिबन्ति । ऋजीषस्थानीयं निःसारमेवांशमस्मै प्रयच्छन्ति ।

अनुवाकचतुष्टयोक्तानामहोरात्रनामधेयानां वेदनं विधत्ते—

यो ह वा अहोरात्राणां नामधेयानि वेद ।
नाहोरात्रेष्वार्तिमार्च्छति । संज्ञानं विज्ञानं
दर्शा दृष्टेति । एतावनुवाकौ पूर्वपक्षस्याहो-
रात्राणां नामधेयानि । प्रस्तुतं विष्टुतꣳ
सुता सुन्वतीति । एतावनुवाकावपरपक्षस्या-
होरात्राणां नामधेयानि । नाहोरात्रेष्वार्ति-
मार्च्छति । य एवं वेद ( २ ), इति ।

यः पुमान्संज्ञानमित्यादीनि शुक्लपक्षस्याहर्नामानि दर्शेत्यादीनि शुक्लपक्षस्य रात्रिनामानि प्रस्तुतमित्यादीनि कृष्णपक्षस्याहर्नामानि सुतेत्यादीनि कृष्णपक्षस्य रात्रिनामानि च प्रथमतृतीयपञ्चमसप्तमानुवाकोक्तान्युपास्ते सोऽयं तेष्वहोरात्रेष्वार्तिं व्याध्यादिदुःखं न प्राप्नोति । नाहोरात्रेष्विति पुनरभिधानमुपसंहारार्थम् ।

द्वितीयचतुर्थषष्ठाष्टमानुवाकोक्तानां मुहूर्तानां नामधेयानां वेदनं विधत्ते—

यो ह वै मुहूर्तानां नामधेयानि वेद । न
मुहूर्तेष्वार्तिमार्च्छति । चित्रः केतुर्दाता
प्रदाता सविता प्रसविताऽभिशास्ताऽनुम-
न्तेति । एतेऽनुवाका मुहूर्तानां नामधेयानि ।
न मुहूर्तेष्वार्तिमार्च्छति । य एवं वेद, इति ।

नवमदशमैकादशेषूक्तानां शुक्लकृष्णपक्षरूपद्विविधार्धमासानां चैत्रादिमासानां च नामधेयसंज्ञानं विधत्ते—

यो ह वा अर्धमासानां च मासानां च नाम-

१ क. ॰रञ्ज्ञानं ।

धेयानि वेद । नार्धमासेषु न मासेष्वार्तिमा-
च्छीति । पवित्रं पवयिष्यन्त्सहस्वान्त्सहीयान-
रुणोऽरुणरजा इति । एतेऽनुवाका अर्धमा-
सानां च मासानां च नामधेयानि (३) ।
नार्धमासेषु न मासेष्वार्तिमाच्छीति । य एवं वेद, इति ।

चतुर्दशपञ्चदशषोडशानुवाकोक्तानां यज्ञर्तुसंवत्सराणां नामवेदनं विधत्ते—

योह वै यज्ञक्रतूनां चर्तूनां च संवत्सरस्य च
नामधेयानि वेद । न यज्ञक्रतुषु नर्तुषु न संव-
त्सर आर्तिमाच्छीति । अग्निष्टोम उक्थ्योऽग्नि-
र्ऋतुः प्रजापतिः संवत्सर इति । एतेऽनुवाका
यज्ञक्रतूनां चर्तूनां च संवत्सरस्य च नामधे-
यानि । न यज्ञक्रतुषु नर्तुषु न संवत्सर आर्ति-
माच्छीति । य एवं वेद, इति ।

त्रयोदशानुवाकोक्तानां प्रौढमुहूर्तैकदेशानां क्षुद्रमुहूर्तानां नामवेदनं विधत्ते—

योह वै मुहूर्तानां मुहूर्तान्वेद । न मुहूर्तानां
मुहूर्तेष्वार्तिमाच्छीति । इदानीं तदानीमिति ।
एते वै मुहूर्तानां मुहूर्ताः । न मुहूर्तानां
मुहूर्तेष्वार्तिमाच्छीति । य एवं वेद, इति ।

अत्रानुक्तमपि द्वादशानुवाकोक्तसिकतानामवेदनमुक्तरीत्या द्रष्टव्यम् ।

दृष्टान्तपूर्वकं कृत्स्नवेदनं प्रशंसति—

अथो यथा क्षेत्रज्ञो भूत्वाऽनुप्रविश्यान्नमत्ति ।
एवमेवैतान्क्षेत्रज्ञो भूत्वाऽनुप्रविश्यान्नमत्ति ।

स एतेषामेव सलोकताꣳ सायुज्यमश्नुते ।
अप पुनर्मृत्युं जयति । य एवं वेद (४), इति ।

न वेदैवं वेदानुवाका अर्धमासानां च मासानां च नामधेयानि मुहूर्तेष्वार्ति-
मार्च्छीति नवं च ।

इयमहोरात्राणाꣳ संज्ञानं प्रस्तुतं मुहूर्तानां चित्रः केतुरर्धमासानां पवित्रं
यज्ञक्रतूनामग्निष्टोमो मुहूर्तानां मुहूर्तान्वेदेदानीमथो यथा क्षेत्रज्ञो द्वादश ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके दशमाध्याये
दशमोऽनुवाकः ॥ १० ॥

====

तत्तत्कालेष्वार्त्यभावो वेदनफलत्वेन पूर्वमुक्तः । अपि च यथा लोके मार्गे गन्ता कश्चित्पुमानयं ब्राह्मणसमृद्धो ग्राम एते च वेदविदां गृहास्तत्राप्येते मदीया बान्धवा इत्येवं केनाप्युपायेन तस्य क्षेत्रस्य मर्मज्ञो भूत्वा तस्मिंस्तस्मिन्ग्रामे तेषु तेषु वेदविद्गृहेषु तेषु बन्धुगृहेषु चानुप्रविश्य गृहस्वामिवदन्नं भुङ्क्ते । एवमेवाय-मुपासक एतेषां देवताविशेषाणां क्षेत्रज्ञो ध्यानेन स्थानाभिज्ञो भूत्वा देहपाता-दूर्ध्वमेतानेव देवान्प्रविश्य देववत्तदीयमन्नं भुङ्क्ते । एवं सर्वमप्यग्निस्वरूपं यो वेद स पुमांस्तेषामेव देवानां सलोकतामेकलोकनिवासं सायुज्यमेकत्र सहावस्थानं च प्राप्नोति । प्राप्य च पुनर्मृत्युरहितो भवति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्ति-
रीयब्राह्मणभाष्ये तृतीयकाण्डे दशमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

अथैकादशोऽनुवाकः ।

---

दशमे सावित्राग्न्यवयवानां नामवेदनमुक्तम् । एकादशेऽन्वयव्यतिरेकाभ्यां विद्या प्रशस्यते । तत्राऽऽदावन्वयव्यतिरेकोपयुक्तं पुरुषद्वयमुपन्यस्यति—

कश्चिद्ध वा अस्माल्लोकात्प्रेत्य । आत्मानं
वेद । अयमहमस्मीति । कश्चित्स्वं लोकं न

प्रतिप्रजानाति, इति।

लोके विवेकी विवेकरहितश्चेति द्वौ पुरुषौ। तत्र कश्चिद्विवेकी पुमानस्माल्लोकात्प्रत्यक्षतो दृश्यमानाद्देहादिसंघातात्प्रेत्य विवेकेन स्वयं पृथग्भूत्वाऽऽत्मानं स्वस्वरूपं वेद। केन प्रकारेण वेदेति तदुच्यते—अयं सावित्रोऽग्निरादित्यरूपः सर्वात्मकः सोऽहमस्मीति वेत्ति। अन्यस्तु कश्चिदविवेकी स्वं लोकं देहेन्द्रियादिव्यतिरिक्तं विवेकदृष्ट्याऽऽलोकयितुं शक्यं स्वमात्मानं न वेद।

तावुभौ पुरुषौ पुनर्विविच्य दर्शयति—

अग्निर्मुग्धो हैव धूमतान्तः। स्वं लोकं न
प्रतिप्रजानाति। अथ यो हैवैतमग्निं
सावित्रं वेद। स एवास्माल्लोकात्प्रेत्य।
आत्मानं वेद। अयमहमस्मीति (१)।
स स्वं लोकं प्रतिप्रजानाति, इति।

यः पुमानग्निमुग्धो विद्यारहितः केवल एवाग्निः क्रतुनिष्पत्तिद्वारा पुरुषार्थं प्रयच्छतीत्येवं मूढो धूमतान्तः पुनः पुनः कर्मस्वेव प्रवृत्तो धूमोपलक्षितकर्मव्यापारेण ग्लानिं प्राप्तो भवति। स पुमान्वर्णाश्रमाधारमानुषदेहरहितं देवतारूपं स्वमात्मानं न जानाति। अथ तस्माद्विलक्षणो यः पुमानेतं ध्यातव्यं सावित्रमग्निं वेद स एव पुमानस्माद्वर्णाश्रमाधारत्वेनावलोक्यमानाद्देहाद्विवेकेन पृथग्भूत्वा स्वात्मानमयं सावित्रोऽग्निरहमस्मीत्येवं वेद। स एव स्वं लोकं विवेकिभिरवलोकयितुं योग्यं निजस्वरूपं प्रति विविच्य सम्यग्जानाति।

उभयोर्मध्ये विवेकिन एव पुरुषार्थं दर्शयति—

एष उ चैवैनं तत्सावित्रः।
स्वर्गं लोकमभिवहति, इति।

तत्तदा देहपातादूर्ध्वमेष एवोपासितः सावित्रोऽग्निरेनमुपासकमादित्यसायुज्यरूपं स्वर्गलोकं प्रापयति[१]।

---

१ क. 'र्थं प्रापयती'।

अथ विद्यारहितस्य समृद्धफलाभावलक्षणं व्यतिरेकं दर्शयति–

अहोरात्रैर्वा इदꣳ सयुग्भिः क्रियते । इतिरा-
त्रायादीक्षिषत । इतिरात्राय व्रतमुपागुरिति ।
तानिहानेवंविदुषः । अमुष्मिँल्लोके शेवधिं धयन्ति ।
धीतꣳ हैव स शेवधिमनु परैति, इति ।

सयुग्भिर्यजमानेन सहावस्थितैरहोरात्रदेवैरेवेदं कर्म क्रियते । न ह्यहोरात्राभिमानिनो देवान्वञ्चयित्वा किंचिदपि कर्म कर्तुं शक्यम् । अहोरात्रव्यतिरिक्तस्य कालविशेषस्याभावात् । इतिरात्रायेत्येतादृशी विद्यासंयुक्ता रात्रिर्यस्मिन्कर्मणि तदर्थमेते यजमाना अदीक्षिषत नियमं स्वीकृतवन्तः । इतिरात्रायेत्येतादृशी विद्यारहिता रात्रिर्यस्मिन्कर्मणि तदर्थमेते यजमाना व्रतमुपागुर्नियमविशेषं प्राप्ता इत्येवं ये यजमाना विद्यासंयुक्ता ये च विद्यारहितास्तान्सर्वानहोरात्रदेवता जानन्तीति शेषः । एतेषु द्विविधेषु मध्ये यः पुमानेवं पूर्वोक्तरूपं सावित्रमग्निं न वेत्ति तस्यानेवंविदुषो यजमानस्य शेवधिं निधिसमानं फलं स्वर्गलोके धयन्त्यहोरात्रदेवताः प्रथमं तत्सारं पिबन्ति । स विद्यारहितो यजमानो धीतमहोरात्रैः पीतं शेवधिं कर्मफलमनु पश्चान्निष्पीडितरसेक्षुवन्निःसारं परैति प्राप्नोति ।

विद्यारहितस्य संपूर्णफलाभावं व्यतिरेकमुक्त्वा विद्यासंयुक्तस्य तत्सद्भावरूपमन्वयं दर्शयति–

अथ यो हैवैतमग्निꣳ सावित्रं वेद (२) । तस्य
हैवाहोरात्राणि । अमुष्मिँल्लोके शेवधिं न
धयन्ति । अधीतꣳ हैव स शेवधिमनु परैति, इति ।

विद्याहीनाद्वैलक्षण्यार्थोऽथशब्दः । यः पुमानेतं सावित्रमग्निं यथोक्तप्रकारेण वेद तस्यैव शेवधिं निधिसमानं फलमहोरात्रदेवताः स्वर्गलोके न धयन्ति स्वयं न पिबन्ति । किंतु तस्यैव सर्वं प्रयच्छन्ति । अधीतं तैर्देवैरपीतं शेवधिं निधिसदृशं संपूर्णं कर्मफलं स विद्वाननुक्रमेण प्राप्नोति ।

इत्थमन्वयव्यतिरेकाभ्यां विदुषः फलबाहुल्यं दर्शितम् । अथ तां विद्यां प्रशंसितुमुपाख्यानं दर्शयति—

भरद्वाजो ह त्रिभिरायुर्भिर्ब्रह्मचर्यमुवास । तꣳ ह जीर्णिꣳ स्थविरꣳ शयानम् । इन्द्र उपव्रज्योवाच । भरद्वाज । यत्ते चतुर्थमायुर्दद्याम् । किमेनेन कुर्या इति । ब्रह्मचर्यमेवैनेन चरेयमिति होवाच (३) । तꣳ ह त्रीन्गिरिरूपानविज्ञातानिव दर्शयांचकार । तेषाꣳ हैकैकस्मान्मुष्टिमाददे । स होवाच । भरद्वाजेत्यामन्त्र्य । वेदा वा एते । अनन्ता वै वेदाः । एतद्वा एतैस्त्रिभिरायुर्भिरन्ववोचथाः । अथ त इतरदननूक्तमेव । एहीमं विद्धि । अयं वै सर्वविद्येति (४) । तस्मै हैतमग्निꣳ सावित्रमुवाच । तꣳ स विदित्वा । अमृतो भूत्वा । स्वर्गं लोकमियाय । आदित्यस्य सायुज्यम्, इति ।

पुरा कदाचिद्भरद्वाजाख्यो महर्षिः सर्वेषां वेदानामध्ययने कृतप्रयत्न इन्द्रं प्रसाद्य तत्प्रसादाच्छतसंवत्सरपरिमितानि त्रीण्यायूंषि लब्ध्वा तैरायुर्भिर्ब्रह्मचर्यमुवास वेदाध्ययनमुद्दिश्य गुरुकुले वासं कृतवान् । शतत्रयस्यान्ते जीर्णशरीरं वृद्धमशक्तत्वेन शयानं तं भरद्वाजं प्रतीन्द्र उपेत्योवाच । यच्चतुर्थमायुस्तुभ्यं दद्यामेवेनाऽऽयुषा किं कुर्याः कं पुरुषार्थं साधयसीति । स च वेदाध्ययनमेव करिष्यामीत्युवाच । ततः सर्ववेदाध्ययनकृतयत्नं तं भरद्वाजमुद्दिश्य सर्वाध्ययनस्याशक्यत्वं बोधयितुमृग्यजुःसामवेदानां त्रयाणां स्वकीययोगसामर्थ्येन पर्वताकारत्वं संपाद्य गिरित्रयरूपान्पूर्वमविज्ञातानेव वेदानस्मै दर्शयामास । ततस्तेषां पर्वतानां मध्य एकैकस्मात्पर्वतान्मुष्टिना पांसूनाददे । आदायैवमुवाच—

हे भरद्वाज, एते त्रयः पर्वता वेदा एव । तत्रैकैकः पांसुरेको वेदस्तस्मादनन्ता वेदास्तेषां मध्ये त्वमेतैस्त्रिभिरायुर्भिरेतन्मुष्टित्रयपरिमितं वेदजातं गुरूपदेशमन्वधीतवानसि । अथानन्तरं तवेतरद्वेदजातमनधीतमेव । तस्मात्सर्ववेदाध्ययनमशक्यमेव । यदि सर्वाध्ययनफलमपेक्षितं तर्ह्यागच्छेमं सावित्रमग्निं विद्धि ध्यानेन साक्षात्कुरु । अयमेव सावित्रोऽग्निः सर्ववेदविषया विद्येत्येवं बोधयित्वा तस्मै भरद्वाजायैतं सावित्रमग्निं पूर्वोक्तप्रकारेणोवाच । ततः स भरद्वाजस्तं सावित्रमग्निं ध्यानेन स्वात्मतया साक्षात्कृत्य तदग्निरूपः स्वयममृतो देवो भूत्वा वर्तमानदेहादूर्ध्वं स्वर्गं प्राप्य तत्राऽऽदित्यसायुज्यं प्राप्तवान् ।

इत्थमुपाख्यानेन विद्यामहिमानं दर्शयित्वा भरद्वाजवदन्यस्यापि वेदितुस्तत्फलं दर्शयति——

अमृतो हैव भूत्वा । स्वर्गं लोकमेति । आदि-
त्यस्य सायुज्यम् । य एवं वेद, इति ।

इतोऽधिकस्य फलस्य शङ्कां वेदत्रयेऽपि वारयितुमाह——

एषो एव त्रयी विद्या (५) । यावन्तꣳ ह वै
त्रय्या विद्यया लोकं जयति । तावन्तं लोकं
जयति । य एवं वेद, इति ।

येयं सावित्राग्निविद्या, एषैव वेदत्रयीविद्यासमाना । वेदत्रयोक्तसर्वकर्मानुष्ठानेन यावत्फलं तावदनेन सावित्रज्ञानेनैव प्राप्यते । न ह्यादित्योपाधिकहिरण्यगर्भप्राप्तेराधिकं फलं कर्मकाण्डे किंचित्संभवति ।

अथ सावित्रस्याग्नेः सर्वदेवतात्मकत्वेन सर्वदेवप्राप्तिलक्षणं फलं प्रत्येकमुदाहृत्य प्रदर्शयति——

अग्नेर्वा एतानि नामधेयानि । अग्नेरेव सायुज्यꣳ
सलोकतामाप्नोति । य एवं वेद । वायोर्वा
एतानि नामधेयानि । वायोरेव सायुज्यꣳ

१ क. °त्रयविद्यया स° ।

सलोकतामाप्नोति। य एवं वेद। इन्द्रस्य
वा एतानि नामधेयानि (६)। इन्द्रस्यैव
सायुज्यꣳ सलोकतामाप्नोति। य एवं वेद।
बृहस्पतेर्वा एतानि नामधेयानि। बृहस्पते-
रेव सायुज्यꣳ सलोकतामाप्नोति। य एवं वेद।
प्रजापतेर्वा एतानि नामधेयानि। प्रजापतेरेव
सायुज्यꣳ सलोकतामाप्नोति। य एवं वेद।
ब्रह्मणो वा एतानि नामधेयानि। ब्रह्मण एव
सायुज्यꣳ सलोकतामाप्नोति। य एवं
वेद, इति।

य एतेऽग्निवाय्विन्द्रबृहस्पतिप्रजापतिब्रह्माणो देवाः। प्रजापतिः सत्यलोक-वासी चतुर्मुखः। ब्रह्माण्डदेहाभिमानी विराट्पुरुषो ब्रह्मा। सावित्राग्नेः सर्वदेव-तात्मकत्वात्तेषामग्न्यादीनां देवानां मध्ये यो यो देवः स्वस्यापेक्षितस्तस्य तस्यैव देवस्यैतानि संज्ञानादीनि नामधेयानि। अतस्तत्तद्देवतानामत्वेन ध्याने सति तत्त-द्देवतासायुज्यप्राप्तिर्भवति। तस्माद्वेदत्रये यत्फलं तत्सर्वमत्र लभ्यत इत्युपपन्नम्।

अथ सावित्रनामव्युत्पादनेन प्रशंसति—

स वा एषोऽग्निरपक्षपुच्छो वायुरेव। तस्या-
ग्निर्मुखम्। असावादित्यः शिरः। स यदेते
देवते अन्तरेण। तत्सर्वꣳ सीव्यति। तस्मा-
त्सावित्रः (७), इति।

अयमहमस्मीति वेद होवाच सर्वविद्येति विघ्नेन्द्रस्य वा एतानि नामधेयानि

ब्रह्मण एव सायुज्यꣳ सलोकतामाप्नोति सप्त च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके दशमाध्याय एकादशोऽनुवाकः ॥ ११ ॥

---

योऽयमग्निर्भूमौ चीयते तस्येष्टकानिर्मितं पक्षपुच्छादिकं विद्यते । यस्तु मनसैव ज्ञायमानोऽग्निः स तु वायुस्वरूप एव न तस्य पक्षपुच्छादिकमस्ति । किंतु तस्य वायुरूपस्य प्रसिद्धोऽग्निर्मुखत्वेन ध्येयः । असावादित्यः शिरोरूपेण ध्येयः । यदन्यदेवताजातमस्ति तत्सर्वमेते देवते अन्तरेणैतयोरग्न्यादित्ययोर्मध्ये स वायुः सीव्यति सूच्या वस्त्रमिव संयोजयित्वा विच्छिन्नमेकी करोति । यस्मात्सीव्यति तस्मादयं वायुरूपोऽग्निः सावित्र इत्युच्यते । तदेवं सावित्राग्निविद्या समापिता ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे दशमप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

अग्नेर्वायोरिन्द्रस्य बृहस्पतेः प्रजापतेर्ब्रह्मणः स वै ।

संज्ञानं भूरस्त्वमेव संवत्सरोऽसि भू राड्वरुवे विपश्चिते प्रजापतिर्देवानियं वाव सरघा कश्चिद्ध वा एकादश ।

संज्ञानं राज्ञी मूर्धा हृदय एष संवत्सरो नार्धमासेषु न मासेषु नवचत्वारिꣳशत् ।

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे दशमः प्रपाठकः समाप्तः ॥ १० ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्वीरबुक्कणसाम्राज्यधुरंधरश्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये दशमः प्रपाठकः समाप्तः ॥ १० ॥

---

## अथैकादशप्रपाठकस्याऽऽरम्भः ।

### तत्र प्रथमोऽनुवाकः ।

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
सावित्रचयनं प्रोक्तं दशमे हि प्रपाठके ।
नाचिकेताख्यचयनमेकादश उदीर्यते ॥ २ ॥

तत्र प्रथमानुवाक इष्टकोपधानमन्त्रास्तदुपधानप्रकारः सूत्रकारेणैवं संगृहीतः—"एतेन नाचिकेतो व्याख्यातः, नात्र लेशा भवन्ति, एकविंशतिर्हिरण्येष्टकाः शर्करा वाऽभ्यक्ता उपधानकाले नाभ्यामेवोपधीयन्ते चतुरस्रं परिमण्डलं वा लोकोऽसि स्वर्गोऽसीत्यनुवाकेन प्रतिमन्त्रम्" इति । तत्र प्रथममन्त्रमाह—

हरिः ॐ ।

लोकोऽसि स्वर्गोऽसि । अनन्तोऽस्यपारोऽसि ।
अक्षितोऽस्यक्षय्योऽसि । तपसः प्रतिष्ठा । त्वयी-
दमन्तः । विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम् ।
विश्वस्य भर्ता विश्वस्य जनयिता । तं त्वोपदधे
कामदुघमक्षितम् । प्रजापतिस्त्वा सादयतु ।
तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद (१), इति ।

हे प्रथमेष्टकारूपाग्ने त्वं सामान्याकारेण सर्वोऽपि लोकोऽसि । विशेषाकारेण स्वर्गोऽसि । तथाविधलोकरूपस्त्वं दीर्घपरिमाणेनान्तरहितोऽसि । तिर्यक्प्रमाणेनाऽपि पाररहितोऽसि । इतः पूर्वमक्षितः केनाप्यविनाशितोऽसि । इतः परमप्यक्षय्यो विनाशयितुमशक्योऽसि । तादृशस्त्वं तपसः सर्वैरनुष्ठीयमानस्य प्रतिष्ठा फलभूमिरत एवाऽऽश्रयः । तादृशे त्वयीदं सर्वं जगदन्तर्वर्तते । किं किमिति तदुच्यते—विश्वं यक्षं सर्वं पूज्यं यद्यद्गुरुदेवादिकं पूज्यमस्ति तत्सर्वं त्वयि वर्तते । विश्वं भूतं यद्यत्पृथिव्यादिभूतजातमस्ति तत्सर्वं त्वयि वर्तते । विश्वं

---

१ क. 'शतिं हि' ।

सुभूतं यद्यत्सुष्ठु पृथिव्यादिभूतकार्यं प्राणिशरीरजातं तत्सर्वं त्वयि वर्तते। अतस्त्वं विश्वस्य पूर्वमुत्पन्नस्य जगतो भर्ता पोषकः, विश्वस्य पूर्वमुत्पन्नस्य जनयितोत्पादकः। कामदुघमपेक्षितकामानां दोग्धारमक्षितं क्षयरहितं तादृशं त्वामिह भूमावहमुपदधे। प्रजापतिरेव त्वामत्र सादयतु। हे इष्टकेऽङ्गिरस्वद्यथाऽङ्गिरोभिर्महर्षिभिरुपहिता सती त्वं ध्रुवा स्थिरा जाता तथा तया प्रजापतिदेवतयोपहिता सती ध्रुवा सीद।

अथ द्वितीयमन्त्रमाह—

तपोऽसि लोके श्रितम्। तेजसः प्रतिष्ठा। त्वयीदमन्तः। विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभृतम्। विश्वस्य भर्तृ विश्वस्य जनयितृ। तत्त्वोपदधे कामदुघमक्षितम्। प्रजापतिस्त्वा सादयतु। तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद (२), इति।

हे द्वितीयेष्टके त्वं तपोऽसि। तच्च तपः प्रथमेष्टकारूपे लोके समाश्रितम्। तृतीयेष्टकारूपस्य तेजसः प्रतिष्ठाऽऽश्रयः। एवमुत्तरत्रापि योजनीयम्। त्वयीत्यादि पूर्ववत्। पूर्वत्र लोकस्य पुंलिङ्गत्वाद्भर्ता जनयिता तं त्वेति पुंलिङ्गशब्दैर्निर्देशः। इह तु तपसो नपुंसकत्वाद्भर्तृ जनयित्रिति नपुंसकशब्दैर्निर्देशः। एवमुत्तरत्राप्युन्नेयम्।

अथ तृतीयं मन्त्रमाह—

तेजोऽसि तपसि श्रितम्। समुद्रस्य प्रतिष्ठा। त्वयीदमन्तः। विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभृतम्। विश्वस्य भर्तृ विश्वस्य जनयितृ। तत्त्वोपदधे कामदुघमक्षितम्। प्रजापतिस्त्वा सादयतु। तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद (३), इति।

तृतीयेष्टकारूपं तेजो द्वितीयेष्टकारूपे तपस्याश्रितम्। चतुर्थेष्टकारूपस्य समुद्रस्य स्वयमाश्रयः। अत्रेष्टकानां लोकतपस्तेजःसमुद्रादिरूपत्वं भावनया

द्रष्टव्यम्। परस्परसंश्लेषणेनात्यन्तदृढत्वादेकैकस्या इतराश्रयत्वं च द्रष्टव्यम्। अन्यत्पूर्ववत्।

अथ चतुर्थं मन्त्रमाह—

समुद्रोऽसि तेजसि श्रितः। अपां प्रतिष्ठा। त्वयीदमन्तः। विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम्। विश्वस्य भर्ता विश्वस्य जनयिता। तं त्वोपदधे। कामदुघमक्षितम्। प्रजापतिस्त्वा सादयतु। तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद (४), इति।

अथ पञ्चमं मन्त्रमाह—

आपः स्थ समुद्रे श्रिताः। पृथिव्याः प्रतिष्ठा युष्मासु। इदमन्तः। विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम्। विश्वस्य भर्त्र्यो विश्वस्य जनयित्र्यः। ता व उपदधे कामदुघा अक्षिताः। प्रजापतिस्त्वा सादयतु। तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद (५), इति।

आप इत्यस्य विशेष्यत्वात्तदनुसारेण भर्त्र्य इति स्त्रीलिङ्गनिर्देशः।

अथ षष्ठमाह—

पृथिव्यस्यप्सु श्रिता। अग्नेः प्रतिष्ठा। त्वयीदमन्तः। विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम्। विश्वस्य भर्त्री विश्वस्य जनयित्री। तां

---

१ क. 'न्तभेदादे'।

त्वोपदधे कामदुघामक्षिताम् । प्रजापतिस्त्वा सादयतु । तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद । ( ६ ), इति ।

अथ सप्तममाह—

अग्निरसि पृथिव्याᳪं श्रितः । अन्तरिक्षस्य प्रतिष्ठा । त्वयीदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वᳪं सुभूतम् । विश्वस्य भर्ता विश्वस्य जनयिता । तं त्वोपदधे कामदुघमक्षितम् । प्रजापतिस्त्वा सादयतु । तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद ( ७ ), इति ।

अथाष्टममाह—

अन्तरिक्षमस्यग्नौ श्रितम् । वायोः प्रतिष्ठा । त्वयीदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वᳪं सुभूतम् । विश्वस्य भर्तृ विश्वस्य जनयितृ । तत्त्वोपदधे कामदुघमक्षितम् । प्रजापतिस्त्वा सादयतु । तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद । ( ८ ), इति ।

अथ नवममाह—

वायुरस्यन्तरिक्षे श्रितः । दिवः प्रतिष्ठा । त्वयीदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वᳪं सुभूतम् । विश्वस्य भर्ता विश्वस्य जनयिता ।

तं त्वोपदधे कामदुघमक्षितम्। प्रजापतिस्त्वा साद-
यतु। तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद (९), इति।

अथ दशममाह—

द्यौरसि वायौ श्रिता। आदित्यस्य प्रतिष्ठा।
त्वयीदमन्तः। विश्वं यक्षं विश्वं भूतं विश्वꣳ
सुभूतम्। विश्वस्य भर्त्री विश्वस्य जनयित्री।
तां त्वोपदधे कामदुघामक्षिताम्। प्रजापतिस्त्वा
सादयतु। तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद
(१०), इति।

अथैकादशमाह—

आदित्योऽसि दिवि श्रितः। चन्द्रमसः प्रतिष्ठा।
त्वयीदमन्तः। विश्वं यक्षं विश्वं भूतं विश्वꣳ
सुभूतम्। विश्वस्य भर्ता विश्वस्य जनयिता।
तं त्वोपदधे कामदुघमक्षितम्। प्रजापतिस्त्वा
सादयतु। तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद
(११), इति।

अथ द्वादशमाह—

चन्द्रमा अस्यादित्ये श्रितः। नक्षत्राणां प्रतिष्ठा।
त्वयीदमन्तः। विश्वं यक्षं विश्वं भूतं विश्वꣳ
सुभूतम्। विश्वस्य भर्ता विश्वस्य जनयिता।
तं त्वोपदधे कामदुघमक्षितम्। प्रजापतिस्त्वा

सादयतु । तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद (१२), इति ।

अथ त्रयोदशमाह—

नक्षत्राणि स्थ चन्द्रमसि श्रितानि । संवत्सरस्य प्रतिष्ठा युष्मासु । इदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम् । विश्वस्य भर्तॄणि विश्वस्य जनयितॄणि । तानि व उपदधे कामदुघान्यक्षितानि । प्रजापतिस्त्वा सादयतु । तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद (१३), इति ।

अथ चतुर्दशमाह—

संवत्सरोऽसि नक्षत्रेषु श्रितः । ऋतूनां प्रतिष्ठा । त्वयीदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम् । विश्वस्य भर्ता विश्वस्य जनयिता । तं त्वोपदधे कामदुघमक्षितम् । प्रजापतिस्त्वा सादयतु । तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद (१४), इति ।

अथ पञ्चदशमाह—

ऋतवः स्थ संवत्सरे श्रिताः । मासानां प्रतिष्ठा युष्मासु । इदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम् । विश्वस्य भर्तारो विश्वस्य जनयितारः । तान्व उपदधे कामदुघानक्षि-

तान् । प्रजापतिस्त्वा सादयतु । तया देव-
तयाऽङ्गिरस्वद्ध्रुवा सीद (१५), इति ।

अथ षोडशमाह—

मासाः स्थर्तुषु श्रिताः । अर्धमासानां प्रतिष्ठा युष्मासु । इदमन्तः । विश्वं यक्षं विश्वं भूतं विश्व सुभूतम् । विश्वस्य भर्तारो विश्वस्य जनयितारः । तान्व उपदधे कामदुधानक्षितान् । प्रजापतिस्त्वा सादयतु। तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद (१६), इति ।

अथ सप्तदशमाह—

अर्धमासाः स्थ मास्सु श्रिताः । अहोरात्रयोः प्रतिष्ठा युष्मासु । इदमन्तः । विश्वं यक्षं विश्वं भूतं विश्व सुभूतम्। विश्वस्य भर्तारो विश्वस्य जनयितारः । तान्व उपदधे कामदुधानक्षितान् । प्रजापतिस्त्वा सादयतु । तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद (१७), इति ।

अथाष्टादशमाह—

अहोरात्रे स्थोऽर्धमासेषु श्रिते । भूतस्य प्रतिष्ठे भव्यस्य प्रतिष्ठे । युवयोरिदमन्तः । विश्वं यक्षं विश्वं भूतं विश्व सुभूतम् । विश्वस्य भर्त्र्यौ

विश्वस्य जनयित्र्यौ । ते वामुपदधे कामदुघे अक्षिते । प्रजापतिस्त्वा सादयतु । तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद (१८), इति ।

भूतस्य च भविष्यतश्च जगतोऽहोरात्राधीनव्यवहारवत्त्वादहोरात्रयोस्तत्प्रतिष्ठात्वम् ।

अथैकोनविंशमाह—

पौर्णमास्यष्टकाऽमावास्या । अन्नादाः स्थान्नदुघो युष्मासु । इदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम् । विश्वस्य भर्त्र्यौ विश्वस्य जनयित्र्यः । ता व उपदधे कामदुघा अक्षिताः । प्रजापतिस्त्वा सादयतु । तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद (१९), इति ।

या च पौर्णमासी या च माघकृष्णाष्टमी देवता याऽप्यमावास्यादेवता ताः सर्वा एकोनविंशेष्टकारूपाः । तथाविधास्तिस्रो देवता यूयमन्नादाः स्थ बह्वन्नभक्षणशक्तियुक्ताः स्थ तथाऽन्नदुघोऽस्माकमन्नसंपादकाः स्थ ।

अथ विंशमाह—

राडसि बृहती श्रीरसीन्द्रपत्नी धर्मपत्नी । विश्वं भूतमनुप्रभूता । त्वयीदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम् । विश्वस्य भर्त्री विश्वस्य जनयित्री । तां त्वोपदधे कामदुघामक्षिताम् । प्रजापतिस्त्वा सादयतु ।

१ ग. 'त्रार्थमासव्यवहारत्वाद' ।

तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद (२०), इति ।

हे विशेष्टके त्वं राडसि राजमानाऽसि । तथा बृहती गुणैर्महत्यसि । श्रीः संपत्प्रदाऽसि । इन्द्रपत्नीन्द्रस्य पालयित्र्यसि । धर्मपत्नी धर्मस्य पालयित्र्यसि । तथाविधा त्वं भूतं विश्वं पूर्वमुत्पन्नं सर्वं जगदनुसृत्य प्रभूता बहुलाऽसि ।

अथैकविंशमाह—

ओजोऽसि सहोऽसि । बलमसि भ्राजोऽसि । देवानां धामामृतम् । अमर्त्यस्तपोजाः । त्वयीद-मन्तः । विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम् । विश्वस्य भर्ता विश्वस्य जनयिता । तं त्वोपदधे कामदुघमक्षितम् । प्रजापतिस्त्वा सादयतु । तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद ( २१ ), इति ।

लोकस्तपस्तेजः समुद्र आपः पृथिव्यग्निरन्तरिक्षं वायुर्द्यौरादित्यश्चन्द्रमा नक्षत्राणि संवत्सर ऋतवो मासा अर्धमासा अहोरात्रे पौर्णमासी राडस्योजोऽस्येकविꣳशतिः ।

लोकः समुद्रोऽग्निर्वायुरादित्यश्चन्द्रमाः संवत्सर ओजोऽसि भर्ता श्रितः । तं त्वोपदधे कामदुघमक्षितम् । तपस्तेजोऽन्तरिक्षं भर्तृ श्रितम् । तत्त्वोपदधे कामदुघ-मक्षितम् । आपः पौर्णमासी भर्त्र्यो जनयित्र्यः श्रिताः । ता व उपदधे कामदुघा अक्षिताः । पृथिवी द्यौ राडसि भर्त्री श्रिता । तां त्वोपदधे कामदुघामक्षिताम् । नक्षत्राणि स्थ भर्तॄणि श्रितानि । तानि व उपदधे कामदुघान्यक्षितानि । ऋतवो मासा अर्धमासा भर्तारो जनयितारः श्रिताः । तान्व उपदधे कामदुघानक्षितान् । अहोरात्रे भर्त्र्यौ श्रिते । ते वामुपदधे कामदुघे अक्षिते । आपो नक्षत्राण्यृतवो मासा अर्धमासाः पौर्णमासी युष्मास्विदमन्तः । अहोरात्रे युवयोरिदमन्तः । अन्यत्र त्वयीदमन्तः ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टक एकादशा-ध्याये प्रथमोऽनुवाकः ॥१॥

---

१ ख. ग. पालयि°।

ओजो बलहेतुरष्टमो धातुः । सहः शत्रूणामभिभवनम् । बलं शरीरशक्तिः । भ्राजः कान्तिः । हे एकविंशेष्टके त्वमोजःप्रभृतीनां स्वरूपभूताऽसि । तथा देवानाममृतं धाम विनाशरहितं स्थानमसि । अमर्त्यो मरणरहितो देवः । स च तपोजास्तपसा हि देवत्वं लभ्यते । तादृशो देवस्त्वमसि । यद्यप्योजःप्रभृतीनि नपुंसकानि तथाऽप्यमर्त्य इत्येतस्य पुंलिङ्गत्वात्तदनुसारेण भर्तेत्यादिपुंलिङ्गव्यवहारः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्ड एकादशप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

अथ द्वितीयोऽनुवाकः ।

इष्टकोपधानमन्त्राः प्रथमेऽभिहिताः । द्वितीयतृतीयचतुर्थपञ्चमेष्वनुवाकेषु होममन्त्रा उच्यन्ते । यदुक्तं सूत्रकारेण—" चतुर्गृहीतं जुहोति त्वमग्ने रुद्र इति शतरुद्रीयस्य रूपमपरं चतुर्गृहीतमग्नाविष्णू इति वसोर्धाराया अपरं चतुर्गृहीतमन्नपत इत्यन्नहोमस्यापरं चतुर्गृहीतं सप्त ते अग्ने समिधः सप्त जिह्वा इति विश्वप्रीः" इति । तत्रास्मिन्द्वितीये शतरुद्रीयस्य प्रतिनिधिरूपं मन्त्रमाह—

त्वम॑ग्ने रु॒द्रो असु॑रो म॒हो दि॒वः । त्वꣳ शर्धो॒
मारु॑तं पृ॒क्ष ई॑शिषे । त्वं वातै॑ररु॒णैर्या॑सि
शङ्ग॒यः । त्वं पू॒षा वि॑ध॒तः पा॑सि॒ नु त्मना॑ ।
देवा॑ दे॒वेषु॑ श्रयध्वम् । प्रथ॑मा द्वि॒तीये॑षु श्रय-
ध्वम् । द्वि॒तीया॑स्तृ॒तीये॑षु श्रयध्वम् । तृ॒तीया॑श्च-
तु॒र्थेषु॑ श्रयध्वम् । च॒तु॒र्थाः पञ्च॒मेषु॑ श्रयध्वम् ।
प॒ञ्च॒माः ष॒ष्ठेषु॑ श्रयध्वम् ( १ ) । ष॒ष्ठाः स॑प्त॒मेषु॑
श्रयध्वम् । स॒प्त॒मा अ॑ष्ट॒मेषु॑ श्रयध्वम् । अ॒ष्ट॒मा
न॑व॒मेषु॑ श्रयध्वम् । न॒व॒मा द॑श॒मेषु॑

श्रयध्वम् । दशमा एकादशेषु श्रयध्वम् । एकादशा द्वादशेषु श्रयध्वम् । द्वादशास्त्रयोदशेषु श्रयध्वम् । त्रयोदशाश्चतुर्दशेषु श्रयध्वम् । चतुर्दशाः पञ्चदशेषु श्रयध्वम् । पञ्चदशाः षोडशेषु श्रयध्वम् (२) । षोडशाः सप्तदशेषु श्रयध्वम् । सप्तदशा अष्टादशेषु श्रयध्वम् । अष्टादशा एकान्नविंशेषु श्रयध्वम् । एकान्नविंशा विंशेषु श्रयध्वम् । विंशा एकविंशेषु श्रयध्वम् । एकविंशा द्वाविंशेषु श्रयध्वम् । द्वाविंशास्त्रयोविंशेषु श्रयध्वम् । त्रयोविंशाश्चतुर्विंशेषु श्रयध्वम् । चतुर्विंशाः पञ्चविंशेषु श्रयध्वम् । पञ्चविंशाः षड्विंशेषु श्रयध्वम् (३) । षड्विंशाः सप्तविंशेषु श्रयध्वम् । सप्तविंशा अष्टाविंशेषु श्रयध्वम् । अष्टाविंशा एकान्नत्रिंशेषु श्रयध्वम् । एकान्नत्रिंशास्त्रिंशेषु श्रयध्वम् । त्रिंशा एकत्रिंशेषु श्रयध्वम् । एकत्रिंशा द्वात्रिंशेषु श्रयध्वम् । द्वात्रिंशास्त्रयस्त्रिंशेषु श्रयध्वम् । देवास्त्रिरेकादशास्त्रिस्त्रयस्त्रिंशाः । उत्तरे भवत । उत्तरवर्त्मान उत्तरसत्वानः । यत्काम इदं जुहोमि । तन्मे समृध्यताम् । वयं स्याम-

पतयो र॒यी॒णाम् । भूर्भु॒वः स्वः॒ स्वाहा॒ (४), इति ।

ष॒ष्ठेषु॑ श्रयध्वꣳ षोड॒शेषु॑ श्रयध्वꣳ षड्वि॒ꣳशेषु॑ श्रयध्वमुत्त॑रे भवतोत्त॑रवर्त्मा॒न उत्त॑रसत्त्वानश्च॒त्वारि॑ च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके एकादशाध्याये द्वितीयोऽनुवाकः ॥ २ ॥

====

हेऽग्ने त्वं रुद्रो घोरतनुयुक्तः । असुरः शत्रूणां निरसिता । दिवो द्युलोकस्य मह उत्सवरूपः । हविर्हवनेनोत्सवकारित्वात् । त्वं मारुतं शर्धो मरुतां संबन्धि बलम् । बलवत्त्वेन प्रसिद्धानां मरुद्गणानामपि त्वदनुग्रहेण बलं भवति । तः पृक्ष ईशिषे मरुद्भिः संपृक्तस्तदीयं सैन्यं नियमयसि । किंच त्वं शङ्ग्यः सखं प्राप्तो वायुवेगैररुणवर्णैरश्वैर्यासि । किंच पोषकरत्वं नु त्मना स्वयमेव पासि । कान्विधत्तो हविषा परिचर्यान्विदधतो यजमानान् । अस्याग्निस्वरूपस्य रुद्रस्य मूर्तिविशेषा देवास्त्रयस्त्रिंशत्संख्याकाः । तथा च मन्त्रान्तरमाम्नायते— “ त्रिꣳशत्त्रयश्च गणिनो रुजन्तः ” इति । तथाविधा हे देवा देवेषु श्रयध्वमन्योन्यमाश्रयध्वं मदनुग्रहाय परस्परं प्रीतियुक्ता भवन्त्वित्यर्थः । सामान्याकारेण संक्षिप्योक्तं पुनर्विशेषाकारेण प्रपञ्च्यते । त्रयस्त्रिंशत्संख्याकानां देवानां मध्य एकैकस्य त्रयो मूर्तिविशेषाः । तत्र प्रथमस्य देवस्य मूर्तिविशेषाः प्रथमा इत्युच्यन्ते । द्वितीयस्य देवस्य मूर्तिविशेषा द्वितीयाः । हे प्रथमे देवा द्वितीयेषु देवेषु श्रयध्वं द्वितीयैर्देवैः सह प्रीतियुक्ता भवत । एवं द्वितीयादिषु त्रयस्त्रिंशान्तेषु योजनीयम् । त एते मुख्यदेवास्त्रिरेकादशास्त्रिगुणिता एकादशसंख्याका लोकत्रयवर्तिनः । तथा च मन्त्रान्तरमाम्नातम्—“ ये देवा दिव्येकादश स्थ पृथिव्यामध्येकादश स्थाप्सुषदो महिनैकादश स्थ ” इति । ते च त्रिविधा अपि पुनस्त्रिस्त्रयस्त्रिंशा अवान्तरमूर्तभेदादेकैकस्य मूर्तित्रयमित्येवं त्रिगुणितास्त्रयस्त्रिंशत्संख्याका भवन्ति । तावन्तो हे देवा उत्तरे भवतोत्कृष्टा भवत । तदेवोत्तरत्वं स्पष्टी क्रियते । उत्तरमुत्कृष्टं वर्त्म मार्गो येषां त उत्तरवर्त्मानः । स्वर्गमार्गप्रापका इत्यर्थः । उत्तर उत्कृष्टाः सत्त्वानः सात्त्विकमूर्तिविशेषा येषां त उत्तरवर्त्मानः । अत एव रुद्रस्य मूर्तिविशेषानभिप्रेत्य रुद्राध्याये समाम्नातम्— ‘अथो ये अस्य सत्त्वानोऽहं तेभ्योऽकरं नमः ’ इति । अस्मदनुग्रहपरा इत्यर्थः । तथाविधा हे देवा यत्कामो यद्विषयकामनायुक्तः सन्नहमिदं द्रव्यं जुहोमि

तत्फलं मे मदर्थे समृध्यतां समृद्धं भवतु । युष्मत्प्रसादाद्वयं भूर्भुवःस्वर्लोकत्रये रयीणां पतयो धनस्वामिनः स्याम स्वाहुतमिदमस्तु ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्ड एकादशप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

अथ तृतीयोऽनुवाकः ।

---

द्वितीये शतरुद्रीयस्य प्रतिनिधिरूपो मन्त्र उक्तः । तृतीये वसोर्धारायाः प्रतिनिधिरूपो मन्त्र उच्यते—

अग्नाविष्णू सजोषसा । इमा वर्धन्तु वां गिरः ।
द्युम्नैर्वाजेभिरागतम् । राज्ञी विराज्ञी । सम्राज्ञी
स्वराज्ञी । अर्चिः शोचिः । तपो हरो भाः ।
अग्निः सोमो बृहस्पतिः । विश्वे देवा भुवनस्य
गोपाः । ते सर्वे संगत्य । इदं मे प्रावता वचः ।
वयꣳ स्याम पतयो रयीणाम् । भूर्भुवः स्वः
स्वाहा ( १ ), इति ।

संगत्य त्रीणि च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टक एकादशाध्याये तृतीयोऽनुवाकः ॥ ३ ॥

---

हेऽग्नाविष्णू सजोषसा परस्परं मयाऽपि सह समानप्रीती वां युवामिमा गिरो मदीयाः स्तुतिरूपा वाचो वर्धयन्तु परितोषयन्तु । युवामपि द्युम्नैर्धनैर्वाजेभिरन्नैश्च सहाऽऽगतमिह कर्मणि समागतम् । राज्यादयो देवताविशेषाः । राज्ञी राजमाना । विराज्ञी विशेषेण राजमाना । सम्राज्ञी सम्यग्राजमाना । स्वराज्ञी, आभरणदीपादिनैरपेक्ष्येण स्वयमेव राजमाना । अर्चिर्ज्वालाभिमानिनी । शोचिः कान्त्यभिमानिनी देवता । तपः संतापशक्तिः । हरः पापहरणशक्तिः । भाः

पदार्थावभासनशक्तिः । अग्न्यादयः प्रसिद्धाः । ते सर्वे भुवनस्य गोपा रक्षकाः सन्तः संगत्य मया संबध्य मे मदीयमिदं प्रार्थनारूपं वचः प्रावत प्रकर्षेण रक्षत । वयमित्यादि पूर्ववत् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्ड एकादशप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

अथ चतुर्थोऽनुवाकः ।

---

तृतीये वसोर्धारायाः प्रतिनिधिरूपो मन्त्र उक्तः । यथा महाचयने शतरुद्रीयं वसोर्धारा चेत्युभयमस्ति तद्वदन्नस्यान्नस्य जुहोतीत्येवमन्नहोमोऽप्यस्ति । तद्वदत्राप्यन्नहोमार्थो मन्त्रश्चतुर्थेऽभिधीयते—

अन्नपतेऽन्नस्य नो देहि । अनमीवस्य शुष्मिणः ।
प्र प्रदातारं तारिषः । ऊर्जं नो धेहि द्विपदे
चतुष्पदे । अग्ने पृथिवीपते । सोम वीरुधां पते ।
त्वष्टः समिधां पते । विष्णवाशानां पते । मित्र
सत्यानां पते । वरुण धर्मणां पते (१) । मरुतो
गणानां पतयः । रुद्र पशूनां पते । इन्द्रौजसां
पते । बृहस्पते ब्रह्मणस्पते । आ रुचा रोचेऽहꣳ
स्वयम् । रुचा रुरुचे रोचमानः । अतीत्यादः
स्वराभरेह । तस्मिन्योनौ प्रजनौ प्रजायेय । वयꣳ
स्याम पतयो रयीणाम् । भूर्भुवः स्वः स्वाहा
(२), इति ।

वरुण धर्मणां पते स्वः स्वाहा ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टक एकादशाध्याये चतुर्थोऽनुवाकः ॥ ४ ॥

हेऽन्नपतेऽन्नस्य पालकाग्ने नोऽस्मभ्यमन्नस्य सारं देहि । कीदृशस्यानमीव-स्याऽऽरोग्यहेतोः शुष्मिणो बलहेतोः प्रदातारं प्रकर्षेण तुभ्यं हविषो दातारं मां प्रतारिषः प्रकर्षेण तारय दारिद्र्यादुत्तीर्णं कुरु । नोऽस्मदीयं द्विपदे मनुष्याय चतुष्पदे पशवे चोर्जं देहि क्षीरादिरसं संपादय । अग्न्यादयो बृहस्पत्यन्ता देवाः पृथिव्यादीनां पालकाः । तादृशा हे देवा भवदनुग्रहादहं स्वयमेव परनैरपेक्ष्येण रुचा दीप्त्या रोचे सर्वतो दीप्ये । तथा स्वयं रोचमानो दीप्यमानो रुचा स्वकीयया दीप्त्या रुरुचे परानपि प्रकाशयामि । हेऽग्नेऽदो मानुषसुखमतीत्ये-हास्मिन्कर्मणि स्वराभर स्वर्गसुखमानय । तस्मिन्योनौ [illegible] स्वर्ग[illegible]मानसुख यक्ते स्थाने प्रजनौ प्रजोत्पत्तिहे[illegible] प्रजापते पुन[illegible] [illegible]यनित्यादि [illegible] ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीय-ब्राह्मणभाष्ये तृतीयकाण्डे एकादशप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

अथ पञ्चमोऽनुवाकः ।

चतुर्थेऽन्नहोममन्त्र उक्तः । पञ्चमे विभ्वीनामको होममन्त्र उच्यते—

सप्त ते अग्ने समिधः सप्त जिह्वाः । सप्तर्षयः सप्त धाम प्रियाणि । सप्त होत्राः अनुविद्वान् । सप्त योनीरापृणस्वा घृतेन । प्राची दिक् । अग्निर्देवता । अग्निꣳ स दिशां देवं देवतानामृच्छतु । यो मैतस्यै दिशोऽभिदासति । दक्षिणा दिक् । इन्द्रो देवता (१) । इन्द्रꣳ स दिशां देवं देवतानामृच्छतु । यो मैतस्यै दिशोऽभिदासति । प्रतीची दिक् । सोमो देवता । सोमꣳ स दिशां देवं देवतानामृच्छतु । यो मैतस्यै

१ क. जनानपि ।

दिशोऽभिदासति । उदीची दिक् । मित्रावरुणौ देवता । मित्रावरुणौ स दिशां देवौ देवतानामृच्छतु । यो मैतस्यै दिशोऽभिदासति (२) । ऊर्ध्वा दिक् । बृहस्पतिर्देवता । बृहस्पतिꣳ स दिशां देवं देवतानामृच्छतु । यो मैतस्यै दिशोऽभिदासति । इयं दिक् । अदितिर्देवता । अदितिꣳ स दिशां देवीं देवतानामृच्छतु । यो मैतस्यै दिशोऽभिदासति । पुरुषो दिक् । पुरुषो मे कामान्त्समर्धयतु । अन्धो जागृविः प्राण । असावेहि । बधिर आक्रन्दयितरपान । असावेहि । उषसमुपसमशीय । अहमसो ज्योतिरशीय । अहमसोऽपोऽशीय । वयꣳ स्याम पतयो रयीणाम् । भूर्भुवः स्वः स्वाहा (३), इति ।

दक्षिणा दिगिन्द्रो देवता मित्रावरुणौ स दिशां देवौ देवतानामृच्छतु यो मैतस्यै दिशोऽभिदासत्यर्धयतु नव च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टक एकादशाध्याये पञ्चमोऽनुवाकः ॥ ५ ॥

---

हेऽग्ने तव समिधः सप्तसंख्याकाः । अश्वत्थोदुम्बरपलाशशमीविकङ्कताशनिहतवृक्षपुष्करपर्णरूपाः । अत एव सूत्रकार आधानप्रकरणे–“ यथोक्तसंभारान्सप्तमन्त्रकाननुक्रम्येति वानस्पत्याः ” इत्युपसंजहार । ज्वालारूपा जिह्वाः सप्त । तथा चाऽऽथर्वणिका आमनन्ति––“ काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा । स्फुलिङ्गिनी विश्वरूपी च देवी लेलायमाना

इति सप्त जिह्वाः ” इति। ऋषयो मन्त्राः। ते च यथोक्तसमित्संपादनार्थाः सप्तसंख्याकाः “ अश्वो रूपं कृत्वा यदश्वत्थेऽतिष्ठः ” इत्यादयः समाम्नाताः। प्रियाणि धाम स्थानानि, आहवनीयगार्हपत्यदक्षिणाग्निसभ्यावसथ्यप्राजाहिताग्नीध्रीयाख्यानि(णि) सोमयागे वह्निधारकाणि सप्तसंख्याकानि। होत्रा होतृप्रमुखा वषट्कर्तारः। होता प्रशास्ता ब्राह्मणाच्छंसी पोता नेष्टाऽच्छावाक आग्नीध्रश्चेति सप्तसंख्याकाः। तादृशः सप्तसमिदादियुक्तस्त्वमनुविद्वानाहवनीयादीनि स्थानान्यनुक्रमेण जानन्सप्त योनीराहवनीयादीनि स्थानानि घृतेन सर्वतः पूरय। येयं प्राची दिग्दृश्यते तस्या दिशोऽग्निर्देवता, अग्निर्हि तां दिशं पालयति। एवं सति यः शत्रुर्मामेतस्या दिशः सकाशादभिदासति हिनस्ति स शत्रुर्दिशां देवानां च मध्ये प्राग्दिक्पालकमग्निं देवमृच्छतु प्राप्नोतु। सोऽग्निरेव तं शत्रुं निवारयतीत्यभिप्रायः। एवं दक्षिणादिषु योज्यम्। इयं दिगित्यनेनाधरा दिक्प्रदर्श्यते। अदितिर्भूमिस्तस्या दिशो देवता। पुरुषो दिगित्यनेन सर्वत्र परिपूर्णः परमात्मा सर्वदिक्समष्टिरूप इत्युच्यते। स च पुरुषो मे मदीयान्कामान्समृद्धान्करोतु। योऽयं प्राणवायुर्मुखनासिकावर्ती सोऽयं दर्शनशक्त्यभावादन्धः। उच्छ्वासक्रियायामप्रमत्तत्वाज्जागृविः। हे प्राण, असावेहि तादृशो भूत्वा समागच्छ। अपानवायुः श्रवणशक्त्यभावाद्बधिरः। उदरमध्ये क्रन्दनस्य ध्वनिविशेषस्य हेतुत्वादाक्रन्दयिता। हेऽपानवायो तादृशः सन्नागच्छ। तयोः प्राणापानदेवयोः प्रसादाद्दमुदस्मुपसं दैनंदिनवर्तिनमुषःकालमशीय प्राप्नुयाम्। स एवार्थः स्पष्टी क्रियते। हेऽग्ने प्राणाहं ज्योतिरशीय प्रकाशं प्राप्नुयां न कदाचिदप्यन्धकारम्। किंच हेऽग्ने प्राणाहं त्वत्प्रसादादपो वृष्टिजलादिकमशीय प्राप्नुयाम्। दयमित्यादि पूर्ववत्।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्ड एकादशप्रपाठके पञ्चमोऽनुवाकः॥ ५॥

---

अथ षष्ठोऽनुवाकः।

---

पञ्चमे विश्वप्रीनामको होममन्त्रोऽभिहितः। षष्ठे तूपस्पर्शनादिमन्त्रा अभिधीयन्ते। तत्र बौधायनः—“ अथाग्निमाभिमृशति। यत्तेऽचितम् ” इति। पाठस्तु—

यत्तेऽचितं यदुं चितं ते अग्ने यत्त ऊनं यदु तेऽ-

तिरिक्तम् । आदित्यास्तदङ्गिरसश्चिन्वन्तु । विश्वे
ते देवाश्चितिमापूरयन्तु । चितश्चासि संचितश्चा-
स्यग्ने । एतावाꣳश्चासि भूयाꣳश्चास्यग्ने, इति ।

हेऽग्ने ते तव संबन्धि यदङ्गमाचितं चयनकाले विस्मृतं ते तव संबन्धि यदु यदप्यङ्गं चितमविस्मरणेन चयनं कृतम् । किंच ते तव संबन्धि यदङ्गमूनं मन्त्रादि कलं ते तव यदु यदप्यङ्गमतिरिक्तं तत्सर्वमङ्गम्, आदित्या देवा अङ्गिरसो महर्षयश्च चिन्वन्तु यथाशास्त्रं चयनं कुर्वन्तु । विश्वे सर्वे देवास्ते त्वदीयां चितिमापूरयन्तु । हेऽग्ने त्वमनेन प्रकारेण चितश्चासि, अस्माभिरादौ चितोऽसि पश्चाद्देवैः संचितश्चासि सम्यक्चितोऽसि । एकविंशतिभिरिष्टकाभिर्यावान्संपद्यते हेऽग्ने त्वमेतावानप्यासि । फलतो भूयानप्यासि ।

कल्पः—" लोकं पृणाति लोकंपृणा उपदधाति " इति । ते एते द्वे ऋचौ । तत्र प्रथमामाह—

लोकं पृण च्छिद्रं पृणाथो सीद शिवा
त्वम् । इन्द्राग्नी त्वा बृहस्पतिः । अस्मिन्यो-
नावसीषदन् ( १ ) । तया देवतयाऽङ्गिरस्व-
द्ध्रुवा सीद, इति ।

हे इष्टके लोकं चयनार्थे प्रदेशे पूर्वोक्ताभिरिष्टकाभिरनाक्रान्तमवशिष्टं स्थानं पृण पूरय । तथा छिद्रं पृण द्वयोरिष्टकयोर्मध्ये किंचिदपि च्छिद्रं यथा न दृश्यते तथा पूरय । अत्यन्तं संश्लिष्टा भवेत्यर्थः । अथो अपि च त्वं शिवा शान्ता सती सीदावतिष्ठस्व । इन्द्राग्नी बृहस्पतिश्चेत्येते देवा अस्मिन्योनौ स्थाने त्वामसीषदन्सादितवन्तः । तथेन्द्रादिदेवतयाऽङ्गिरोभिरिवोपहिता सती ध्रुवा सीद स्थिरा भूत्वेह तिष्ठ ।

अथ द्वितीयामाह—

ता अस्य सूददोहसः । सोमꣳ श्रीणन्ति

१ क. °मन्यद्रम् ।

पृश्नयः। जन्मन्देवानां विशः। त्रिष्वारोचने
दिवः। तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद, इति।

दिवो रोचने स्वर्गस्य प्रकाशकेऽस्य जन्मन्यजमानस्य जन्मनि निमित्तभूते सति देवानां संबन्धिन्यो विशः प्रजारूपाः पृश्नयोऽल्पगोरूदशाः सूददोहसोऽन्नस्य दोहयित्र्यस्ता इष्टकाः सोमं श्रीणन्ति पक्वं कुर्वन्ति। कदा त्रिषु सवनेषु। आ समन्ताद्यानि प्रातःसवनादीनि तेषु निरन्तरं सोमपाके हेतव एता इष्टका इत्यर्थः। एता इष्टका यद्देवतासंबन्धिन्यस्तया देवतयेत्यादि पूर्ववत्।

अथ महाग्निचयन आग्नेय्या गायत्रिया प्रथमां चितिमभिमृशेदित्यादिना पञ्चभिर्ऋग्भिः पञ्चानां चितीनां स्पर्शनमुक्तम्। इह तु चितेरेकत्वात्पञ्चभिरप्येकामेवाभिमृशेत्। तत्र प्रथमामाह—

अग्ने देवाꣳ इहाऽऽवह। जज्ञानो वृक्त-
बर्हिषे। असि होता न ईड्यः, इति।

हेऽग्ने त्वमिह कर्मणि देवानावह। जज्ञान उत्पन्न एव सन्नोऽस्माकं वृक्तबर्हिषेऽनिष्पन्नयज्ञनिष्पत्त्यर्थं होता होमनिष्पादक ईड्यः स्तुत्यश्चासि।

अथ द्वितीयामाह—

अगन्म महा मनसा यविष्ठम् (२)। यो
दीदाय समिद्ध स्वे दुरोणे। चित्रभानु
रोदसी अन्तरुर्वी। स्वाहुतं विश्वतः प्रत्यञ्चम्, इति।

योऽग्निः स्वे दुरोणे स्वकीये गृहे समिद्धः सम्यक्प्रज्वलितो दीदाय दीप्तवान्। तमग्निं मनसाऽगन्म वयं प्राप्तवन्तः। कीदृशं महागुणैर्महान्तं पूज्यं वा यविष्ठं युवतमम्, स्वाहुतं सुष्ठु होमेन तर्पितम्, विश्वतः प्रत्यञ्चं सर्वतोऽभिमुखम्, उर्वी रोदसी, अन्तः, विस्तीर्णयोर्द्यावापृथिव्योर्मध्ये चित्रभानुर्विचित्ररश्मिः, यो दीदायेत्यन्वयः। यद्वा चित्रभानुमिति द्वितीयार्थत्वेन व्याख्येयम्।

अथ तृतीयामाह—

मेधाकारं विदथस्य प्रसाधनम्। अग्निꣳ

होतारं परिभूतमं मतिम् । त्वाम-
र्भस्य हविषः समानमित् । त्वां महो
वृणते नरो नान्यं त्वत्, इति ।

हे चितिरूप त्वामग्निं स्पृशामीति शेषः। कीदृशं मेधाकारं ग्रन्थतदर्थधारणशक्तिर्मेधा तां करोतीति मेधाकारस्तम्, विदथस्य यज्ञस्य प्रसाधनं प्रकर्षेण साधनभूतम् । होतारं देवानामाह्वयितारम् । परिभूतमं शत्रूणामतिशयेन तिरस्कर्तारम्। मतिं मननीयम् । अर्भस्याल्पस्यापि हविषः समानमित्सदृशमेव । न ह्येतावद्धविःस्वी करोति न त्वल्पमित्येवं वैषम्यम् । नरो मनुष्या यजमानाः सर्वत्र महो महनीयं त्वां वृणते संभजन्ते त्वदन्यं कंचिदपि यज्ञनिर्वाहार्थं न वृणते ।

अथ चतुर्थीमाह---

मनुष्यत्त्वा निधीमहि । मनुष्वत्समिधीमहि ।
अग्ने मनुष्वदङ्गिरः (३)। देवान्देवायते यज, इति ।

हेऽग्ने त्वां मनुष्वन्निधीमहि यथाकथंचिन्मनुष्यं बन्धुं सखायं वा कश्चिद्विस्रम्भेण स्थापयामस्तथा त्वामप्यस्मिन्कर्मणि विस्रम्भेण स्थापयामः । तथा मनुष्वत्कस्मिंश्चिन्मनुष्य इव त्वयि विस्रब्धाः सन्तस्त्वां समिधीमहि सम्यक्प्रज्वालयामः। हेऽङ्गिरोऽङ्गसौष्ठवयुक्ताग्ने मनुष्वन्मनुष्यर्त्विगिव देवायते देवानात्मन इच्छते यजमानाय देवान्यज पूरय ।

अथ पञ्चमीमाह--

अग्निर्हि वाजिनं विशे । ददाति विश्वचर्षणिः ।
अग्नी राये स्वाभुवम् । स प्रीतो याति वार्यम् ।
इषꣳ स्तोतृभ्य आभर, इति ।

विश्वे चर्षणयो मनुष्या यस्यासौ विश्वचर्षणिः सर्वमनुष्योपकारकः । अयमग्निः खलु विशे प्रजायै वाजिनमन्नं ददाति । अयमग्नी राये धनार्थं यजमानानां धनदानाय स्वाभुवं सुष्ठु सर्वतो भूमिं प्राप्तवानिति शेषः । सोऽग्निः प्रीतः

---

१ क. °माह्वाता° । २ क. ° नाय ध° ।

सन्वार्यं वरणीयं यजमानं याति प्राप्नोति । हेऽग्ने स्तोतृभ्यो यजमानेभ्य इषमन्न-माभर संपादय ।

कल्पः—" चात्वालात्पुरीषमाहृत्य पृष्टो दिवीति वैश्वानर्यर्चा चितावध्यूहति सा चितिर्भवति " इति । पाठस्तु—

पृष्टो दिवि पृष्टो अग्निः पृथिव्याम् । पृष्टो विश्वा
ओषधीराविवेश । वैश्वानरः सहसा पृष्टो अग्निः ।
स नो दिवा स रिषः पातु नक्तम् ( ४ ), इति ।

असीषदन्यविंशमङ्गिरो नक्तम् ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टक एकादशाध्याये षष्ठोऽनुवाकः ॥ ६ ॥

पृष्ट इत्यत्र सकारलोपश्छान्दसः । अयमग्निर्दिवि स्पृष्ट आदित्यरूपेणावस्थितः । पृथिव्यामिह पाकप्रकाशकारित्वेनावस्थितः । तथा फलपाककारी सन्पृष्टः संबद्धः सर्वा अप्योषधीराविवेश । वैश्वानरोऽग्निः सहसा बलेन पृष्टः संबद्धः । स तादृशो नोऽस्मान्दिवा रिषो हिंसकात्पातु । नक्तं रात्रावपि सोऽस्मान्पातु ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्ड एकादशप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

अथ सप्तमोऽनुवाकः ।

षष्ठे स्पर्शनाद्यर्था मन्त्रा उक्ताः । एतावता नाचिकेतचयनस्यापेक्षिता मन्त्रा उक्ताः । अथानुवाकचतुष्टयेन ब्राह्मणमभिधीयते । तत्रास्मिन्सप्तमानुवाके नाचिकेताग्निदेवतोपासनमभिधीयते—

अयं वाव यः पवते । सोऽग्निर्नाचिकेतः । स
यत्प्राङ् पवते । तदस्य शिरः । अथ यद्दक्षिणा ।
स दक्षिणः पक्षः । अथ यत्प्रत्यक् । तत्पुच्छम् ।

यदुदङ्। स उत्तरः पक्षः (१)। अथ यत्संवाति। तदस्य समञ्चनं च प्रसारणं च। अथो संपदेवास्य सा, इति।

अयं वाव प्रत्यक्षतो दृश्यमान एव यो वायुः पवते संचरति सोऽयं पूर्वोक्तनाचिकेताग्निदेवस्वरूपः। स वायुः प्राग्दिगभिमुखः संचरतीति यत्तदस्य नाचिकेताग्नेः शिरःस्थानीयम्। अनन्तरं दक्षिणस्यां दिशि संचरतीति यत्सोऽयं पक्ष्याकारस्य नाचिकेताग्नेर्दक्षिणः पक्षः। अथ प्रत्यङ्मुखः संचरतीति यत्तत्पुच्छस्थानीयम्। अनन्तरमुत्तराभिमुखं संचरतीति यत्सोऽयमुत्तरः पक्षः। अथ संवाति संभूय सर्वत्र प्रसरतीति यत्तदस्याग्नेः संकोचो विकाशश्च। अपि च येयं शिरआदिकल्पना सेयमस्याग्नेः संपदेव ध्यानार्थं संपादनमेव। एवं संपाद्य ध्यायेदित्यर्थः।

अथ पूर्वोक्तस्य चयनस्येदानीमुक्तस्य ध्यानस्य च समानं फलं दर्शयति—

सं ह वा अस्मै स कामः पद्यते। यत्कामो यजते। योऽग्निं नाचिकेतं चिनुते। य उ चैनमेवं वेद, इति।

नाचिकेतो नाम कश्चिदुद्दालकस्य पुत्र उत्तरानुवाके वक्ष्यते तन्नाम्ना प्रसिद्धो नाचिकेतो लोकोऽसीत्यादिमन्त्रसाध्योऽग्निस्तं पूर्वोक्तप्रकारेण यश्चिनुते। योऽप्यन्यः कश्चिदयं वाव यः पवत इत्याद्युक्तप्रकारेणोपास्ते। उभयविधः स पुरुषो यद्विषयकामनायुक्तोऽनुतिष्ठति स कामोऽस्मै संपद्यते सम्यक्प्राप्यते।

तस्याग्नेराधारत्वेन हिरण्यध्यानं विधत्ते—

यो ह वा अग्नेर्नाचिकेतस्याऽऽयतनं प्रतिष्ठां वेद। आयतनवान्भवति। गच्छति प्रतिष्ठाम् (२)। हिरण्यं वा अग्नेर्नाचिकेतस्याऽऽयतनं प्रतिष्ठा। य एवं वेद। आयतनवान्भवति। गच्छति प्रतिष्ठाम्, इति।

अथ सर्वकामसंपूर्त्यर्थं नाचिकेताग्नेः प्रकारान्तरेण ध्यानं विधत्ते—

संवत्सरो वा अग्निर्नाचिकेतः। तस्य वसन्तः शिरः (२)। ग्रीष्मो दक्षिणः पक्षः। वर्षा उत्तरः। शरत्पुच्छम्। मासाः कर्मकाराः। अहोरात्रे शतरुद्रीयम्। पर्जन्यो वसोर्धारा। यथा वै पर्जन्यः सुवृष्टं वृष्ट्वा। प्रजाभ्यः सर्वान्कामान्त्संपूरयति। एवमेव स तस्य सर्वान्कामान्त्संपूरयति। योऽग्निं नाचिकेतं चिनुते (३)। य उ चैनमेवं वेद, इति।

ऽयं नाचिकेताग्निरुक्तः सोऽयं संवत्सरात्मकत्वेन ध्यातव्यः। तस्य नाचिकेताग्नेः संवत्सररूपस्य पक्ष्याकारस्य वसन्तर्तुः शिरःस्थानीयः। ग्रीष्मवर्षर्तू दक्षिणोत्तरपक्षस्थानीयौ। शरदृतुः पुच्छस्थानीयः। चैत्रादयो मासा कर्मकारा ऋत्विक्स्थानीयाः। अहोरात्रे तु 'त्वमग्ने रुद्रः' इत्यस्य शतरुद्रीयमन्त्रस्य स्थाने वर्तते। योऽयं पर्जन्यः सोऽयम् 'अग्नाविष्णू' इत्यस्य वसोर्धारामन्त्रस्य स्थाने वर्तते। तदेवमुक्तावयवविशिष्टं नाचिकेताग्निरूपं संवत्सरं य उपास्ते यश्च तमग्निं चिनोति तस्योभयविधस्य पुरुषस्य स नाचिकेताग्निः सर्वान्कामान्सम्यक्पूरयति। तत्र दृष्टान्तः—लोके पर्जन्यः सम्यग्वृष्टं यथा भवति तथा वृष्टिं संपाद्य प्रजार्थं सर्वान्कामान्व्रीह्यादिरूपान्संपूरयत्येवमेवायं नाचिकेताग्निरिति द्रष्टव्यम्।

पुनरपि प्रकारान्तरेण संवत्सररूपतया तदग्निध्यानं विधत्ते—

संवत्सरो वा अग्निर्नाचिकेतः। तस्य वसन्तः शिरः। ग्रीष्मो दक्षिणः पक्षः। वर्षाः पुच्छम्। शरदुत्तरः पक्षः। हेमन्तो मध्यम्। पूर्वपक्षाश्चितयः। अपरपक्षाः पुरीषम्। अहोरात्राणीष्टकाः। एष वाव सोऽग्निरग्निमयः पुनर्णवः। अग्निमयो ह वै पुनर्णवो भूत्वा। स्वर्गं लोक-

सैति। आदित्यस्य सायुज्यम्। योऽग्निं नाचि-
केतं चिनुते। य उ चैनमेवं वेद, इति।

अमुं तया लोकमभिजयति शिरश्चिनुत इष्टकाः षट् च।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टक एकादशाध्याये
दशमोऽनुवाकः ॥ १० ॥

---

इदानींतनस्य ध्यानस्य वर्षाः पुच्छमित्यादिर्विशेषः। पूर्वपक्षाः शुक्लपक्षा अपरपक्षाः कृष्णपक्षाः। 'संवत्सरो वा अग्निः' इत्यादिः "अहोरात्राणीष्टकाः" इत्यन्तो यो निरूपित एष एव सोऽग्निर्नाचिकेताख्यः। स चाग्निमयो ज्योतिर्मयः पुनर्नवः सर्वदा नूतन एव न तु कदाचिदपि जरो भवति। एवंरूपमग्निं य उपास्ते योऽपि चिनोति सोऽयमुभयविधोऽपि पुरुषः सर्वदा नूतनो भूत्वा स्वर्गं प्राप्याऽऽदित्यस्य सहावस्थानं गच्छति।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्ड एकादशप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

लोकस्त्वमग्नेऽग्नाविष्णू अन्नपते सप्त ते अग्ने यत्ते चितमयं वावोशन्ह वै तꣳ हैतमेके यां प्रथमामिष्टकां दश।

लोक आदित्य ओजोऽस्यूर्ध्वा दिगनन्तꣳ ह वै कामेन ग्रीष्मो द्विषष्टिः।

हरिः ॐ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टक
एकादशोऽध्यायः समाप्तः ॥ ११ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्वीरबुक्कणसाम्राज्यधुरंधरश्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्य एकादशः प्रपाठकः समाप्तः ॥ ११ ॥

---

## अथ द्वादशप्रपाठकस्याऽऽरम्भः

तत्र प्रथमोऽनुवाकः ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
नाचिकेताग्निचयनमेकादश उदीरितम् ।
चातुर्होत्रं वैश्वसृजं द्वयं द्वादश ईर्यते ॥ २ ॥

तत्र 'ब्रह्म वै चतुर्होतारः' इत्यस्मिन्प्रथमानुवाके चातुर्होत्रचयनस्य विधिर्भविष्यति । तच्च द्विविधं व्यस्तं समस्तं च । अनुवाकमात्रप्रतिपादितं व्यस्तम् । सावित्रादिभिः संयुक्तं समस्तम् । तत्र समस्ते वैश्वसृजचयनेऽङ्गभूता दिवःश्येन्याख्याः पाद्याख्याश्चेष्टयः । तत्र दिवःश्येनय इष्टयो द्वितीयानुवाके विधास्यन्ते । तास्विष्टिषु क्रमेण याज्यानुवाक्यानां प्रतीकानि प्रथमानुवाके दर्शयति—

हरिः ॐ ।

तुभ्यं ता अङ्गिरस्तमाऽश्याम तं काममग्ने ।
आशानां त्वा विश्वा आशाः । अनु नोऽद्यानु-
मतिरन्विदनुमते त्वम् । कामो भूतस्य काम-
स्तदग्रे । ब्रह्म जज्ञानं पिता विराजाम् । यज्ञो
रायोऽयं यज्ञः । आपो भद्रा आदित्पश्यामि ।
तुभ्यं भरन्ति यो देह्यः । पूर्वं देवा अपरेण
प्राणापानौ । हव्यवाह॒ꣳ स्विष्टम् (१), इति ।

तुभ्यं दश ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके द्वादशाध्याये प्रथमोऽनुवाकः ॥ १ ॥

'अग्नये कामाय पुरोडाशमष्टाकपालम्' इत्यस्य हविषः 'तुभ्यं ताः' इति पुरोनुवाक्या । 'अश्याम तम्' इति याज्या । एतच्चोभयं संहितायां

'प्रमतो रुद्रः' इत्यत्र व्याख्यातम्। 'आशायै चरुम्' इत्यस्य हविषः 'आशानां त्वाऽऽशापालेभ्यः' इति पुरोनुवाक्या। 'विश्वा आशा मधुना सꣳसृजामि' इति याज्या। एतच्चोभयं 'पुनर्न इन्द्र मघवा' इत्यनुवाके व्याख्यातम्। 'अनुमत्यै चरुम्' इत्यस्य हविषः 'अनु नोऽद्यानुमतिः' इति पुरोनुवाक्या। 'अन्विदनुमते' इति याज्या। एतच्चोभयम् 'इदं' 'वामास्ये' इत्यनुवाके व्याख्यातम्। 'कामाय चरुम्' इत्यस्य हविषः 'कामो भूतस्य भव्यस्य' इति पुरोनुवाक्या। 'कामस्तदग्रे समवर्तत' इति याज्या। एतच्चोभयम् 'जुष्टो दमूनाः' इत्यनुवाके व्याख्यातम्। 'ब्रह्मणे चरुम्' इत्यस्य हविषः 'ब्रह्म जज्ञानं प्रथमं पुरस्तात्' इति पुरोनुवाक्या। 'पिता विराजामृषभो रयीणाम्' इति याज्या। एतच्चोभयम् 'अहमस्मि प्रथमजा ऋतस्य' इत्यत्र व्याख्यातम्। 'यज्ञाय चरुम्' इत्यस्य हविषः 'यज्ञो रायो यज्ञ ईशे वसूनाम्' इति पुरोनुवाक्या। 'अयं यज्ञो वर्धतां गोभिरश्वैः' इति याज्या। एतच्चोभयं 'यज्ञो राये' इत्यनुवाके व्याख्यातम्। 'अद्भ्यश्चरुम्' इत्यस्य हविषः 'आपो भद्रा घृतमिदाप आसुः' इति पुरोनुवाक्या। आदित्पश्याम्युत वा शृणोमि' इति याज्या। एतच्चोभयं 'हिरण्यवर्णाः' इत्यनुवाक्ये व्याख्यातम्। 'अग्नये बलिमते चरुम्' इत्यस्य हविषः 'तुभ्यं भरन्ति क्षितयो यविष्ठ' इति पुरोनुवाक्या। 'यो देह्यो अनमयद्वधस्नैः' इति याज्या। एतच्चोभयं 'वृषाऽस्यꣳशुः' इत्यनुवाके व्याख्यातम्। 'अनुवित्त्यै चरुम्' इत्यस्य हविषः 'पूर्वं देवा अपरेणानुपश्यन्जन्मभिः' इति पुरोनुवाक्या। 'प्राणापानौ चक्षुःश्रोत्रम्' इति याज्या। एतच्चोभयं 'वार्त्रहत्याय' इत्यनुवाके व्याख्यातम्। स्विष्टकृद्धविषः 'हव्यवाहमभिमातिषाहम्' इति पुरोनुवाक्या। 'स्विष्टमग्ने अभि तत्पृणाहि' इति याज्या। एतच्चोभयं 'जुष्टो दमूना' इत्यनुवाके व्याख्यातम्।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे द्वादशप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

अथ द्वितीयोऽनुवाकः।

---

प्रथमेऽनुवाके दिवःश्येनीनामिष्टीनां याज्यानुवाक्याप्रतीकान्याम्नातानि। द्वितीये वा इष्टयो विधीयन्ते। तत्र बोधायनोऽथ समस्तस्येत्युपक्रम्य साविन्न-

नाचिकेतचातुर्होत्रसमष्टिरूपं प्रतिपाद्येदमाह—'तं चेत्सौम्येऽध्वर उत्तम एव चक्रे । चिन्वीत प्राग्दीक्षणीयायै दिवःश्येनीभिर्यजेतोदवसायाऽऽप्याभिः" इति । तत्र दिवःश्येनीर्विधातुं प्रस्तौति—

देवेभ्यो वै स्वर्गो लोकस्तिरोऽभवत् । ते प्रजापतिमब्रुवन् । प्रजापते स्वर्गो वै नो लोकस्तिरोऽभूत् । तमन्विच्छेति । तं यज्ञक्रतुभिरन्वैच्छत् । तं यज्ञक्रतुभिर्नान्वविन्दत् । तामिष्टिभिरन्वैच्छत् । तामिष्टिभिरन्वविन्दत् । तदिष्टीनामिष्टित्वम् । एष्टयो ह वै नाम । ता इष्टय इत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः ( १ ), इति ।

पुरा कदाचिद्देवानामर्थे स्वर्गलोकः प्रादुर्भूतो नाभूत् । किंतु तिरोऽभवत् । ते च देवाः स्वर्गलोकान्वेषणार्थं प्रजापतिं प्रार्थितवन्तः । स च प्रजापतिर्यज्ञक्रतुभिरन्विष्य तं लोकं नालभत । यूपवन्तो यज्ञक्रतवस्तैरलब्ध्वा पुनस्तं लोकं यूपरहिताभिरिष्टिभिरान्विष्य लब्धवान् । यूपो वै यज्ञस्य दुरिष्टमामुञ्चतीत्येवं यूपस्य निन्दितत्वात्तद्युक्तैः क्रतुभिरलाभः । इष्टिभिस्तु दुरिष्टाभावाल्लाभो युक्तः । अन्वेषणसाधनत्वादिष्टिनाम संपन्नम् । अत्र हीष्टीनां नेच्छामात्रसाधनत्वं श्रुत्या विवक्षितं किंत्विष्यमाणं वस्त्वागतमाभिरित्येतावानर्थो विवक्षितः । तथा सत्यागमनार्थवाचकमाकारमन्तर्भाव्य तासामेष्टय इत्येतादृशं नाम वक्तव्यम् । तथाऽपि तन्नाम रहस्यत्वेन गोपयित्वा परोक्षममुख्यमाकाररहितमिष्टय इत्येवं नाम प्रकटीकृत्य तेन परोक्षेण नाम्ना सर्वे देवा व्यवहरन्ति । लोकेऽपि देवाः पूज्याः पुरुषाः परोक्षनामप्रिया इव दृश्यन्ते । देवदत्तो यज्ञदत्त इत्यादिभिः प्रत्यक्षनामभिर्न तुष्यन्ति । किंतु हे मातर्हे पितरित्यादिभिरमुख्यनामभिस्तुष्टा भवन्ति ।

एवमिष्टीः प्रस्तुत्य प्रथमामिष्टिं विधत्ते—

तमाशाऽब्रवीत् । प्रजापत आशया वै श्राम्यसि ।

अहमु वा आशाऽस्मि । मां नु यजस्व । अथ ते सत्याऽऽशा भविष्यति । अनु स्वर्गं लोकं वेत्स्यसीति । स एतमग्नये कामाय पुरोडाशमष्टाकपालं निरवपत् । आशायै चरुम् । अनुमत्यै चरुम् । ततो वै तस्य सत्याऽऽशाऽभवत् । अनु स्वर्गं लोकमविन्दत् । सत्या ह वा अस्याऽऽशा भवति । अनु स्वर्गं लोकं विन्दति । य एतेन हविषा यजते । य उ चैनदेवं वेद, इति ।

कश्चिद्द्रव्यादिलाभः सर्वथा भविष्यतीत्येवं निश्चित्याद्य वा श्वो वेत्येवं कालमात्रप्रतीक्षणरूपस्तृष्णाविशेष आशा तदभिमानिनी देवताऽप्याशाशब्देनैवाभिधीयते । सेयमाशाख्या देवता तं प्रजापतिमिदमब्रवीत्, हे प्रजापते त्वमाशयैव श्रान्तो वर्तसे । सा द्विविधा ह्याशाऽनृता सत्या च । फलरहिताऽऽशाऽनृता । तथा सत्यत्र फलरहितया स्वर्गो भविष्यतीत्याशया तव श्रम एव जायते न तु स्वर्गो लभ्यते । अहमेव त्वाशाख्या देवताऽस्म्यतो मां नु क्षिप्रमेव यजस्वानन्तरमेव तव स्वर्गविषयाऽऽशा सत्या भविष्यति । तामनु स्वर्गं लोकं लप्स्यसे इति तद्वचनं श्रुत्वा स प्रजापतिस्त्रिहविष्कामिष्टिं कृतवान् । कामगुणकायाग्नये पुरोडाशमेकं हविः । आशादेवतायै चरुर्द्वितीयं हविः । अनुमतिदेवतायै चरुस्तृतीयं हविः । एते प्रथमतृतीये हविषी वक्ष्यमाणास्वपीष्टिष्वनुसंचारिणी । ततस्त्रिहविष्केष्ट्यनुष्ठानादस्य प्रजापतेः स्वर्गलाभाशा सत्याऽभवत् । तामाशामनु स्वर्गमलभत । एवमन्योऽपि यः पुमानेतेनोभयतोनुसंचारिद्वयसहितेन मध्यमेन हविषा यजते योऽप्येनद्धविर्यथावज्जानाति तस्योभयविधस्य पुरुषस्य स्वर्गलाभाशा सत्या भवति । तामाशामनु स्वर्गं लभते ।

अस्यामिष्टावुपहोमान्विधत्ते—

सोऽत्र जुहोति । अग्नये कामाय स्वाहाऽऽशायै

स्वाहा। अनुमत्यै स्वाहा प्रजापतये स्वाहा। स्वर्गाय लोकाय स्वाहाऽग्नये स्विष्टकृते स्वाहेति (२), इति।

यो यजते सोऽत्र षडुपहोमाञ्जुहुयात्।

अथ द्वितीयामिष्टिं विधत्ते—

तं कामोऽब्रवीत्। प्रजापते कामेन वै श्राम्यसि। अहमु वै कामोऽस्मि। मां नु यजस्व। अथ ते सत्यः कामो भविष्यति। अनु स्वर्गं लोकं वेत्स्यसीति। स एतमग्नये कामाय पुरोडाशमष्टाकपालं निरवपत्। कामाय चरुम्। अनुमत्यै चरुम्। ततो वै तस्य सत्यः कामोऽभवत्। अनु स्वर्गं लोकमविन्दत्। सत्यो ह वा अस्य कामो भवति। अनु स्वर्गं लोकं विन्दति। य एतेन हविषा यजते। य उ चैनदेवं वेद। सोऽत्र जुहोति। अग्नये कामाय स्वाहा कामाय स्वाहा। अनुमत्यै स्वाहा प्रजापतये स्वाहा। स्वर्गाय लोकाय स्वाहाऽग्नये स्विष्टकृते स्वाहेति (३), इति।

निश्चितस्य लाभस्य प्रतीक्षणमाशा। अनिश्चितस्यापेक्षा कामः। तस्य कामस्य प्रजापतिना सह यः संवादस्तमारभ्य स्वर्गं लोकमविन्ददित्यन्तो ग्रन्थो

विधेयस्यार्थस्य प्रस्तावः। तत ऊर्ध्वं य एवं वेदेत्यन्तो विधिः। ततोऽप्यूर्ध्वमुपहोमाः। एवं सर्वं द्रष्टव्यम्।

अथ तृतीयामिष्टिं विधत्ते--

तं ब्रह्माब्रवीत्। प्रजापते ब्रह्मणा वै श्राम्यसि। अहमु वै ब्रह्मास्मि। मां नु यजस्व। अथ ते ब्रह्मण्वान्यज्ञो भविष्यति। अनु स्वर्गं लोकं वेत्स्यसीति। स एतमग्नये कामाय पुरोडाशमष्टाकपालं निरवपत्। ब्रह्मणे चरुम्। अनुमत्यै चरुम्। ततो वै तस्य ब्रह्मण्वान्यज्ञोऽभवत्। अनु स्वर्गं लोकमविन्दत्। ब्रह्मण्वान्ह वा अस्य यज्ञो भवति। अनु स्वर्गं लोकं विन्दति। य एतेन हविषा यजते। य उ चैनदेवं वेद। सोऽत्र जुहोति। अग्नये कामाय स्वाहा ब्रह्मणे स्वाहा। अनुमत्यै स्वाहा प्रजापतये स्वाहा। स्वर्गाय लोकाय स्वाहाऽग्नये स्विष्टकृते स्वाहेति(४), इति।

ब्रह्म मन्त्रजातम्। तदभिमानिदेवोऽपि ब्रह्मशब्दाभिधेयः। तदनुग्रहरहितं मन्त्रजातं निष्फलम्। यथा पूर्वमनृतयाऽऽशयाऽनृतेन च कामेन वृथा श्रमः। एवमत्रापि निष्फलेन मन्त्रजातेन वृथा श्रमः। ब्रह्मण्वान्सफलमन्त्रयुक्तः। सति देवतानुग्रहे तथा भवति। अन्यत्पूर्ववत्।

अथ चतुर्थीमिष्टिं विधत्ते--

तं यज्ञोऽब्रवीत्। प्रजापते यज्ञेन वै श्राम्यसि।

प्रहान्यं व्लीनाति ( ८ ), इति ।

वदत्याश्वा इत्युवाच द्वितीयं वृणीष्वेत्यंजयत्तृतीयं मास्यंदगृह्णाददक्षन्त दक्षिणां प्रतिगृह्य दक्षंते ह वै दक्षिणां प्रतिगृह्य य एवं वेदैकं च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टक एकादशाध्यायेऽष्टमोऽनुवाकः ॥ ८ ॥

---

अन्नदाननिमित्तकीर्तियुक्तो महर्षिर्वाजश्रवास्तस्य पुत्रा वाजश्रवसः । ते च गौतमास्तद्गोत्रोत्पन्नत्वात्तादृशा महर्षयः । तदेतद्दक्षिणामाहात्म्यं विजानन्त अनुदेश्यामपि दक्षिणां प्रतिगृह्णन्ति । द्विविधा दक्षिणा प्रत्यक्षमेव दत्ताऽनुदिष्टा चेति । आन्विष्टकं दक्षिणा ददाति हिरण्यं ददातीत्येवं दानार्थधातुनैव विहिता प्रत्यक्षदत्ता । देवताभ्यः समर्पिताऽनुदिष्टा । अत एवान्यत्राऽऽम्नातम्—“ यदेवमेता अनुदिशति यथादेवतमेव दक्षिणा गमयति ” इति । तथा सति देवतार्थमनुदेश्याममुख्यामपि दक्षिणां प्रतिगृह्णन्ति किं वक्तव्यं प्रत्यक्षदत्तां मुख्यां प्रतिगृह्णन्तीति । तथा प्रतिग्रहीतॄणां तेषामयमभिप्रायः । मुख्याममुख्यां च दक्षिणां प्रतिगृह्योभयेन दक्षिष्यामहे कार्यसमर्था भविष्याम इति । ते महर्षयस्तथैव दक्षिणां प्रतिगृह्य स्वकार्येष्वदक्षन्त समर्था अभवन् । योऽप्यन्य एवं महर्षिवृत्तान्तं वेद सोऽपि दक्षिणां प्रतिगृह्य स्वकार्यसमर्थो भवत्येव । अन्यं द्रव्यरहितं स्वविरोधिनं प्रकर्षेण व्लीनाति हविःशीर्णं करोत्येव ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्ड एकादशप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

अथ नवमोऽनुवाकः ।

---

अष्टमे नाचिकेताग्निचयनतद्वेदने उपाख्यानेन प्रशस्ते । नवमे चयनप्रयोगोऽभिधीयते । तत्राऽऽदौ पूर्वोत्तरपक्षाभ्यां चयनस्य देशविशेषं निश्चिनोति—

तꣳ हैतमेकें पशुबन्ध एवोत्तरवेद्यां चिन्वते ।
उत्तरवेदिसंमित एषोंऽग्निरिति वदंन्तः । तन्न
तथां कुर्यात् । एतमग्निं कामेंन व्यर्धयेत् ।

स एनं कामेन व्यृद्धः । कामेन व्यर्धयेत् । सौम्ये वावैनमध्वरे चिन्वीत । यत्र वा भूयिष्ठा आहुतयो हूयेरन् । एतमग्निं कामेन समर्धयति । स एनं कामेन समृद्धः (१)। कामेन समर्धयति, इति ।

एके महर्षय एष नाचिकेतोऽग्निरुत्तरवेदितुल्य इत्येवं वदन्तो निरूढादिपशुबन्ध एव कर्मण्युत्तरवेदिदेशे तमेतं नाचिकेताग्निं चिन्वते । सोऽयं पूर्वः पक्षो न तु सिद्धान्तः, तत्तस्मात्तथा न कुर्यात् । यदि कुर्यात्तदानीमेतमग्निं कामेन व्यर्धयेत्सोमयागादिफलेन वियोजयेत् । सोऽग्निः कामेन वियोजितः सन्नेनं यजमानं फलेन वियोजयति । तस्मात्पशुबन्ध एवेति नियमं परित्यज्य सोमयाग एवैनं चिन्वीत । अथवा सोमयागेष्वपि यत्र गवामयनादावतिबहव आहुतयो हूयेरंस्तत्रैतमग्निं चिन्वीत । एवं सत्येतमग्निं तत्तत्फलेन समृद्धं करोति । स च समृद्ध एनं यजमानमपि फलेन समर्धयति ।

सैव फलसमृद्धिरुदाहरणबाहुल्येन प्रपञ्च्यते । तत्र प्रजालाभं स्वर्गप्राप्तिरूपं फलं च दर्शयति—

अथ हैनं पुरर्षयः । उत्तरवेद्यामेव सात्रियमचिन्वत । ततो वै तेऽविन्दन्त प्रजाम् । अभि स्वर्गं लोकमजयन् । विन्दते एव प्रजाम् । अभि स्वर्गं लोकं जयति । योऽग्निं नाचिकेतं चिनुते । य उ चैनमेवं वेद, इति ।

पुरा केचिदृषय एनं नाचिकेताग्निं सात्रियं सत्रसंबन्धिनं कृत्वोत्तरवेदिदेश एवाचिन्वत । ततस्तेषां फलसिद्धिर्जाता । एवमन्यस्यापि भवति ।

द्रव्यादिसमृद्धिलक्षणं फलं दर्शयति—

अथ हैनं वायुर्ऋद्धिकामः (२)। यथान्युप्त-

मेवोपदधे । ततो वै स एतामृद्धिमार्ध्नोत् । यामिदं वायुर्ऋद्धः । एतामृद्धिमृध्नोति । यामिदं वायुर्ऋद्धः । योऽग्निं नाचिकेतं चिनुते । य उं चैनमेवं वेद, इति ।

वायुदेवः समृद्धिं कामयमान एनं नाचिकेताग्निं यथान्युप्तमेवोपदधे । पशुबन्धसोमादावुत्तरवेदिर्न्युप्ता भवति । तामेतां न्युप्तामनतिक्रम्य यथान्युप्तम् । उत्तरवेदिनिर्वापस्थान एवेत्यर्थः । तत्रोपधाय स वायुः पुरातनीमेतां वक्ष्यमाणसदृशीं धनादिसमृद्धिं प्राप्तवान् । काऽसौ वक्ष्यमाणेति सोच्यते । ऋद्धः सर्वभोगसमृद्धो वायुः स्वेच्छासंचाररूपां यां समृद्धिमिदमस्मात्प्रत्यक्षं यथा भवति तथा प्राप्नोति तामेव स्वेच्छासंचाररूपां समृद्धिं प्राप्तवानित्यर्थः । अन्योऽपि यजमानश्चिन्वान उपासीनो वा यां समृद्धिं स्वातन्त्र्यलक्षणामिदमस्मत्प्रत्यक्षं यथा भवति तथा प्राप्तवान् । एतामेव समृद्धिं प्राप्नोति सर्वत्र स्वतन्त्रो भवति न तु परतन्त्र इत्यर्थः ।

पशुफलार्थं कंचित्प्रकारविशेषं विधत्ते—

अथ हैनं गोबलो वार्ष्णः पशुकामः । पाङ्क्तमेव चिक्ये । पञ्च पुरस्तात् (३) । पञ्च दक्षिणतः । पञ्च पश्चात् । पञ्चोत्तरतः । एकां मध्ये । ततो वै स सहस्रं पशून्प्राप्नोत् । प्र सहस्रं पशूनाप्नोति । योऽग्निं नाचिकेतं चिनुते । य उं चैनमेवं वेद, इति ।

वृष्णेः पुत्रो वार्ष्णो गोबलो नामतः । स च पशून्कामयमान एनं नाचिकेताग्निं पाङ्क्तमेव चिक्ये पञ्चसंख्योपेतमेव यथा भवति तथा चितवान् । तत्कथमिति तदुच्यते—प्राच्यादीनां चतसृणां दिशां मध्य एकैकस्यां पञ्च पञ्चेष्टकामध्ये

---

१ क. °तन एतां ।

चैका। एवं सति पञ्चसु स्थानेषूपहितत्वादेवैकस्यां दिशीष्टकानां पञ्चत्वात्पाङ्क्तत्वम्। ततश्चयनाद्गोबलस्य सहस्रपशुप्राप्तिः। एवमन्यस्यापि भवति।

ज्यैष्ठ्यादिकफलार्थं प्रकारान्तरं विधत्ते—

अथ हैनं प्रजापतिर्ज्यैष्ठ्यकामो यशस्कामः प्रजननकामः। त्रिवृतमेव चिक्ये (४)। सप्त पुरस्तात्। तिस्रो दक्षिणतः। सप्त पश्चात्। तिस्र उत्तरतः। एकां मध्ये। ततो वै स प्र यशो ज्यैष्ठ्यमाप्नोत्। एतां प्रजातिं प्राजायत। यामिदं प्रजाः प्रजायन्ते। त्रिवृद्वै ज्यैष्ठ्यम्। माता पिता पुत्रः (५)। त्रिवृत्प्रजननम्। उपस्थो योनिर्मध्यमा। प्र यशो ज्यैष्ठ्यमाप्नोति। एतां प्रजातिं प्रजायते। यामिदं प्रजाः प्रजायन्ते। योऽग्निं नाचिकेतं चिनुते। य उ चैनमेवं वेद, इति।

वयसा गुणैश्चाऽऽधिक्यं ज्येष्ठ्यम्। यशः कीर्तिः। प्रजननं पुत्राद्युत्पादनम्। त्रीणि फलानि कामयमानः प्रजापतिरेनं नाचिकेताग्निं त्रिवृतमेव त्रिगुणमेव यथा भवति तथा चितवान्। प्राक्प्रत्यग्दिशोरिष्टकानां सप्तसंख्या दक्षिणोत्तरदिशोस्त्रित्वसंख्या, मध्ये त्वेकसंख्येति त्रिविधसंख्योपेतत्वात्त्रैगुण्यम्। तथाविधेन चयनेन स प्रजापतिः कीर्तिं ज्यैष्ठ्यं च प्राप्तवान्। तथा प्रजा इदानीं वर्तमानायां पुत्रपौत्रदुहितृदौहित्ररूपायां प्रजोत्पत्तिमिदमस्मत्प्रत्यक्षं यथा भवति तथा प्रजायन्ते संपादयन्ति। तामेतां प्रजातिं पुत्राद्युत्पत्तिं प्राजायत स प्रजापतिः संपादितवान्। यत्तु ज्यैष्ठ्यं प्राशस्त्यं फलमुक्तं तत्त्रिविधम्। कुलाचारसंपन्ना माता तादृशः पिता पुत्रश्चेति। तथा प्रजोत्पादनसामर्थ्यलक्षणमपि प्रजननं

१ क. °विधं त्रित्वाकारसंपन्नम्।

त्रिगुणम् । उपस्थ इन्द्रियशक्तिः । योनिः स्त्रीलिङ्गम् । मध्यमा गर्भधारणस्थानम् । अतः फलरूपयोर्ज्यैष्ठ्यप्रजननयोस्त्रिगुणत्वात्त्रिगुणचयनसाध्यत्वं युक्तम् । प्रजापतिवदन्योऽपि तत्फलं प्राप्नोति ।

केवलस्य ज्यैष्ठ्यफलस्य प्रकारान्तरं विधत्ते—

अथ हैनमिन्द्रो ज्यैष्ठ्यकामः । ऊर्ध्वा एवोपदधे । ततो वै स ज्यैष्ठ्यमगच्छत् (६) । ज्यैष्ठ्यं गच्छति । योऽग्निं नाचिकेतं चिनुते । य उ चैनमेवं वेद, इति ।

ज्यैष्ठ्यं वयसा गुणैश्च प्रवृद्धत्वं कामयमान इन्द्र एनं नाचिकेताग्निं चिन्वन्प्रथमामिष्टकामुपधाय ततं ऊर्ध्वं द्वितीयां ततोऽप्यूर्ध्वं तृतीयामित्येवमूर्ध्वा एव इष्टका उपधाय तेन ज्यैष्ठ्यमौन्नत्यं प्राप्तवान् । एवमन्योऽपि प्राप्नोति ।

स्वर्गार्थं प्रकारान्तरं विधत्ते—

अथ हैनमसावादित्यः स्वर्गकामः । प्राचीरेवोपदधे । ततो वै सोऽभि स्वर्गं लोकमजयत् । अभि स्वर्गं लोकं जयति । योऽग्निं नाचिकेतं चिनुते । य उ चैनमेवं वेद, इति ।

स्वर्गं कामयमान आदित्यः प्रथमामिष्टकामुपधाय ततः प्राच्यां द्वितीयां ततोऽपि प्राच्यां तृतीयामित्येवमिष्टका उपधायैनं नाचिकेताग्निं चितवान् । ततः स आदित्यः स्वर्गं लोकमाभिमुख्येन प्राप्नोत् । एवमन्योऽपि प्राप्नोति । तदेतदूर्ध्वोपधानं प्राच्युपधानं च बोधायनेन स्पष्टीकृतम्—"अथ यदूर्ध्वाः पश्चात्कोट्याः प्रभृत्यूर्ध्वा आस्वयमातृण्णावकाशादथ यदि प्राचीः स्वयमातृण्णावकाशात्प्रभृति प्राचीः" इति ।

अथ तेजआदिप्राप्त्यर्थे प्रयोगे कंचिद्विशेषं विधत्ते—

स यदीच्छेत् (७) । तेजस्वी यशस्वी ब्रह्मवर्चसी स्यामिति । प्राङ्गाहोतुर्धिष्ण्यादुत्स-

पैतु । येयं प्रागाद्यशस्वती । सा मा प्रोर्णोतु । तेजसा यशसा ब्रह्मवर्चसेनेति । तेजस्व्येव यशस्वी ब्रह्मवर्चसी भवति, इति ।

यो नाचिकेतमग्निं चिनुते स यदि तेजोयशोब्रह्मवर्चसानि कामयेत तदानीं यजमानो होतुर्धिष्ण्यसमीपे समागत्य प्राङ्मुखस्तस्माद्धिष्ण्यादारभ्याऽऽहवनीयपर्यन्तं येयामित्यादिमन्त्रं पठन्नुत्सर्पेदुत्कर्षेण गच्छेत् । मन्त्रस्यायमर्थः—येयं देवता यशस्वती यशोयुक्ता सती प्राक्प्राङ्मुख्युपगच्छति सा देवता मां तेजोयशोब्रह्मवर्चसैः प्रोर्णोत्वाच्छादयतु, इति । तथा सत्येतैर्युक्त एव भवति ।

विश्वासबाहुल्यं दक्षिणाबाहुल्यं च कामयमानस्य कंचिद्विशेषं विधत्ते—

अथ यदीच्छेत् । भूयिष्ठं मे श्रद्दधीरन् । भूयिष्ठा दक्षिणा नयेयुरिति । दक्षिणासु नीयमानासु प्राच्येहि प्राच्येहीति प्राची जुषाणा वेत्वाज्यस्य स्वाहेति स्रुवेणोपहत्याऽऽहवनीये जुहुयात् (८) । भूयिष्ठमेवास्मै श्रद्दधते । भूयिष्ठा दक्षिणा नयन्ति, इति ।

सर्वे प्राणिनो मे मदर्थं भूयिष्ठमत्यधिकं श्रद्दधीरन्विश्वासं प्राप्नुयुः, ऋत्विजश्च भूयिष्ठा अतिबहुला दक्षिणा नयेयुरिति यः कामयते स पुमान्दक्षिणानयनकाले स्रुवेणाऽऽज्यं स्वीकृत्य प्राच्येहीत्यादिमन्त्रेणाऽऽहवनीये जुहुयात् । मन्त्रस्यायमर्थः- हे श्रद्धादक्षिणाभिमानिनि देवते प्राच्येहि प्राङ्मुखी सती समागच्छ । द्विरुक्तिः श्रद्धादेवताया दक्षिणादेवतायाश्चाऽऽभिमुख्यार्था । इतिशब्दो हेत्वर्थे । यस्मादागता तस्मात्प्राङ्मुखी भूत्वा प्रीतियुक्ता सती सा द्विविधा देवताऽऽज्यस्य वेत्विदमाज्यं पिबतु । तदर्थमिदं स्वाहुतमिति । अनेन होमेनास्मिन्यजमाने सर्वेऽप्यत्यधिकं विश्वासं कुर्वन्ति । दक्षिणा अतिबहुला ऋत्विजो नयन्ति ।

अथ सर्वप्रयोगसाधारणमनुष्ठानविशेषं विधत्ते—

पुरीषमुपधाय । चितिक्लृप्तिभिरभिमृश्य । अग्निं

प्रणीयोपसमाधाय। चतस्र एता आहुतीर्जुहोति।
त्वमग्ने रुद्र इति शतरुद्रीयस्य रूपम्। अग्नाविष्णु
इति वसोर्धारायाः। अन्नपत इत्यन्नहोमः। सप्त
ते अग्ने समिधः सप्त जिह्वा इति विश्वप्रीः (९), इति।

समृद्ध ऋर्द्धिकामः पुरस्तांच्चिक्ये पुत्रोऽगच्छदीच्छेज्जुहुयाद्विश्वप्रीः।
पुरर्षयो वायुर्गोबलः प्रजापतिस्त्रिवृदिन्द्रोऽसावादित्यः स यदीच्छेदथ यदीच्छेत्।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टक एकादशाध्याये नवमोऽनुवाकः ॥ ९ ॥

उपहितानामिष्टकानां सर्वासामुपरि 'पृष्टो दिवि' इत्यनया वैश्वानर्यर्चा पुरीषं पांशुमुपधाय 'यत्ते चितमग्ने देवाꣳ इहाऽऽवह' इत्यादिभिः, चिविक्लप्तिनामभिर्ऋग्भिस्तां चितिं हस्तेनाभिमृश्य तस्यां चितावग्निं प्रणीय समिद्भिरुपसमाधाय 'त्वमग्ने रुद्र' इत्यादिभिश्चतुर्भिरनुवाकैश्चतस्र आहुतीर्जुहुयात्। महाग्नौ यः शतरुद्रीयमन्त्रो यश्च वसोर्धारामन्त्रस्तयोरुभयोः प्रतिनिधिरूपं 'त्वमग्ने रुद्राग्नाविष्णू' इत्यनुवाकद्वयम्। 'अन्नपते' इत्यनेनानुवाकेनान्नहोमः कार्यः। 'सप्त ते अग्ने' इत्ययमनुवाको विश्वप्रीसंज्ञकः। विश्वं प्रीणयतीति विश्वप्रीः।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्ड एकादशप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

अथ दशमोऽनुवाकः।

नवमे नाचिकेतचयनस्य प्रयोगोऽभिहितः। दशमे तत्प्रशंसाऽभिधीयते। तत्राऽऽद्याविष्टकाः प्रशंसति—

यां प्रथमामिष्टकामुपदधाति। इमं तया
लोकमभिजयति। अथो या अस्मिँल्लोके

१ क. ख. 'स्तेन स्पृष्ट्वा त'।

देवताः । तासा॑ꣳ सायुज्य॑ꣳ सलोकतामाप्नोति । यां द्वितीयामुपदधाति । अन्तरिक्षलोकं तयाऽभिजयति । अथो या अन्तरिक्षलोके देवताः । तासा॑ꣳ सायुज्य॑ꣳ सलोकतामाप्नोति । यां तृतीयामुपदधाति । अमुं तया लोकमभिजयति ( १ ) । अथो या अमुष्मिँल्लोके देवताः । तासा॑ꣳ सायुज्य॑ꣳ सलोकतामाप्नोति । अथो या अमूरितरा अष्टादश । य एवामी उरवश्च वरीया॑ꣳसश्च लोकाः । तानेव ताभिरभिजयति, इति ।

लोकोऽसीति मन्त्रेणोपहितया प्रथमेष्टकया भूलोकं जित्वा तत्रावस्थितानां देवानां सहवासं समानलोकस्वामित्वं च प्राप्नोति । तथा तपोऽसि तेजोऽसीत्याभ्यां द्वितीयतृतीयमन्त्राभ्यामुपधेयेनेष्टकाद्वयेनान्तरिक्षद्युलोकजयादिकमवगन्तव्यम् । तथा समुद्रोऽसीत्यादिभिरवशिष्टैर्मन्त्रैरुपधेया अमूरिष्टका अष्टादशसंख्याकाः । अस्माभिः सर्वाभिरादित्यमण्डलादर्वाच उरूँल्लोकान्पराचो वरीयसश्च लोकानभिजयति ।

इष्टकाः प्रशस्य तच्चयनं तद्वेदनं च प्रशंसति—

कामचारो ह वा अस्योरुषु च वरीयःसु च लोकेषु भवति । योऽग्निं नाचिकेतं चिनुते । य उ चैनमेवं वेद, इति ।

नाचिकेताग्निं चिन्वानस्तदभिज्ञश्च यो विद्यते तस्योभयविधस्य पुरुषस्याऽऽदित्यलोकादर्वाक्षूरुषु लोकेषु पराक्षु वरीयःसु च लोकेषु स्वेच्छया संचारो भवति ।

आयतनमाधारः प्रतिष्ठा चिरमवस्थानम्। हिरण्येष्टकानां नाचिकेताग्नावुपहितत्वाद्धिरण्यमस्याऽऽधारः। तत्रैवास्य चिरकालावस्थितिः। हिरण्यस्याऽऽकारद्वयध्यानेनासौ गृहवान्भूत्वा चिरकालस्थितिं लभते। फलस्य पुनर्वचनमुपसंहारार्थम्।

अथ हिरण्यशरीरत्वेन ध्यानं विधत्ते—

यो ह वा अग्नेर्नाचिकेतस्य शरीरं वेद। सशरीर एव स्वर्गं लोकमेति। हिरण्यं वा अग्नेर्नाचिकेतस्य शरीरम्। य एवं वेद। सशरीर एव स्वर्गं लोकमेति, इति।

हिरण्यस्य शरीरत्वध्यानेन मनुष्यशरीरसहितस्यैव स्वर्गप्राप्तिः।

फलान्तरं दर्शयति—

अथो यथा रुक्म उत्तप्तो भायात् (३)। एवमेव स तेजसा यशसा। अस्मिꣳश्च लोकेऽमुष्मिꣳश्च भाति, इति।

अपि च यथा लोके रुक्मः सौवर्णाभरणविशेष उत्कर्षेणाग्नौ तप्तः सन्स्वनिष्ठां कालिकां परित्यज्य विस्पष्टं भासेत, एवमेव स हिरण्यध्याता शरीरकान्त्या कीर्त्या च लोकद्वये प्रकाशते।

अथाग्निचिता तदुपासकेन च प्राप्यानां लोकानामत्युत्तमत्वं वक्तुं लोकविभागं दर्शयति—

उरवो ह वै नामैते लोकाः। येऽवरेणाऽऽदित्यम्। अथ हैते वरीयाꣳसो लोकाः। ये परेणाऽऽदित्यम्। अन्तवन्तꣳ ह वा एष क्षय्यं लोकं जयति। योऽवरेणाऽऽदित्यम्। अथ हैषोऽनन्तमपारमक्षय्यं लोकं जयति। यः परेणाऽऽदित्यम्, इति।

द्विविधाः स्वर्गलोका आदित्यलोकादर्वाञ्च उपरितनाश्च । तत्राऽऽदित्यमवरेणाऽऽदित्यादर्वाञ्चो ये लोकाः स्वर्गविशेषास्ते सर्वेऽप्युरवो विस्तीर्णा इति । नाम प्रसिद्धम् । अथ ये स्वर्गलोका आदित्यं परेणाऽऽदित्यलोकात्परस्ताद्वर्तन्त एते वरीयांसोऽतिशयेन विस्तीर्णाः । एवं सति यः पुमानादित्यादर्वाञ्चं लोकं प्राप्नोति, एष पुमानन्तवन्तं विनाशयुक्तं क्षय्यं परस्परमेकैकापेक्षया क्षयार्हं तादृशं लोकं प्राप्नोति । यस्त्वादित्यात्पराञ्चं प्राप्नोति, एष पुमाननन्तमपारम्, आतानविताना-भ्यामवसानरहितमक्षय्यं भोग्यवस्तुक्षयरहितं लोकं प्राप्नोति ।

एवं विभागे व्यवस्थिते सति नाचिकेताग्निं चिन्वतस्तस्योपासकस्य चोपरितनलोकप्राप्तिफलं दर्शयति—

अनन्तꣳ ह वा अपारमक्षय्यं लोकं जयति ।

योऽग्निं नाचिकेतं चिनुते । य उ चैनमेवं वेद, इति ॥

आदित्यमण्डलादूर्ध्ववर्तिनं ब्रह्मलोकं प्राप्तस्याऽऽयुष्क्षयहेतुभूतकालपारतन्त्र्याभावं दृष्टान्तेन दर्शयति—

अथो यथा रथे तिष्ठन्पक्षसी पर्यावर्तमाने

प्रत्यपेक्षते । एवमहोरात्रे प्रत्यपेक्षते । नास्या-

होरात्रे लोकमाप्नुतः । योऽग्निं नाचिकेतं

चिनुते । य उ चैनमेवं वेद ( ४ ), इति ।

उत्तरः पक्षो गच्छति प्रतिष्ठां भाय्याद्यः परेणाऽऽदित्यमष्टौ च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टक एकादशाध्याये सप्तमोऽनुवाकः ॥ ७ ॥

---

अत्युन्नतस्य रथस्योपरि वर्तमानः पुरुषो रथस्य पार्श्वयोरधोभागे पुनः पर्यावर्तमाने पक्षसी उभे चक्रे, स्वस्मादत्यन्तमधस्तनत्वेन प्रतिक्षणं पश्यति, एवमसौ ब्रह्मलोके वर्तमानः पुरुषोऽधस्तनेषु मनुष्यादिलोकेषु प्राणिनामायुः-क्षपणाय पुनः पुनः पर्यावर्तमाने अहोरात्रे स्वस्मादत्यन्तनीचत्वेन प्रतिक्षणं

पश्यति । यो नाचिकेतमग्निं चिनुते यश्चोपास्ते उभयविधस्यास्य लोकमहोरात्रे न प्राप्नुतः । ब्रह्मलोके हि नैते अहोरात्रे अत्यल्पे प्रसरतः किंतु कल्पमात्रमेक-महः । तस्मादितरलोकेष्विव नास्याऽऽयुः क्षीयते ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरी-यब्राह्मणभाष्ये तृतीयकाण्ड एकादशप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

अथाष्टमोऽनुवाकः ।

---

सप्तमे नाचिकेताग्न्युपासनं पक्ष्याकारवायुदेवताविषयमुक्तम् । अष्टमे ब्रह्म-लोकप्राप्तिलक्षणस्य तत्फलस्य मृत्युराहित्यमुपाख्यानेन दर्शयति । तत्राऽऽदौ नचिकेतसः प्रश्नं दर्शयति—

उशन्ह वै वाजश्रवसः सर्ववेदसं ददौ । तस्य ह नचिकेता नाम पुत्र आस । तꣳ ह कुमारꣳ सन्तम् । दक्षिणासु नीयमानासु श्रद्धाऽऽविवेश । स होवाच । तत कस्मै मां दास्यसीति । द्वितीयं तृतीयम्, इति ।

वाजोऽन्नं तद्दाननिमित्तं श्रवः कीर्तिर्यस्यासौ वाजश्रवाः कश्चिन्मुनिर्गौत-मगोत्रोत्पन्नस्तस्य पुत्र उद्दालकाख्यो मुनिर्वाजश्रवसः । स च कदाचित्सर्वस्व-दक्षिणाकेन विश्वजिदादियागेनोशंस्तत्फलं कामयमानो यागमध्ये सर्ववेदसं सर्व-स्वमृत्विग्भ्यो ददौ । तस्मिन्काले तस्योद्दालकस्य कश्चित्पुत्रो नचिकेता नाम आसीत् । स चोपनयनयोग्यवयस्कः कुमारो भूत्वा तदा वर्तते । तं कुमारं सन्तं नाचिकेतसमृत्विजः प्रति दक्षिणासु पित्रा नीयमानास्वतिशयेन श्रद्धाऽऽविवेश । यथाशास्त्रं दक्षिणा दातव्येत्येषा बुद्धिः श्रद्धातिशयः । श्रद्धाविशिष्टः स कुमारो मनस्येवं विचारयामास । कर्मसाद्गुण्यार्थं पित्रा सर्वस्वं दातव्यम् । अहं च पितुः स्वं तस्माद्दातव्योऽहमिति विचार्य पितरं प्रत्येवमुवाच । हे तत हे पितः कस्मा ऋत्विजे मां दास्यसीति । तदानीं बालोऽयं मुग्ध इति तद्वचनमुपेक्ष्य तूष्णीं स्थितं पितरं प्रति द्वितीयं वारं तृतीयं वारं च तथैवोवाच ।

पुत्रस्य प्रश्नं दर्शयति--

तꣳ ह परीत उवाच । मृत्यवे त्वा ददामीति, इति ।

अयं तावन्मुग्धो न भवति । किंतु धूर्त इत्येवं कुपितः संस्तदाभिमुख्येन पर्यावृत्तः कोपावेशान्मृत्यवे त्वा ददामीति तं कुमारमुवाच । अस्मिन्नवसरे काचिददृश्यमानशरीरा दैवी वाक्तं नचिकेतसं समनुजग्राह ।

तदनुग्रहप्रकारं दर्शयति--

तꣳ ह स्मोत्थितं वागभिवदति (१)। गौतम-
कुमारमिति । स होवाच । परेहि मृत्योर्गृहान् ।
मृत्यवे वै त्वाऽदामिति, इति ।

कोपयुक्तं पितुस्तद्वचनं श्रुत्वा पितुः सकाशात्परतो गन्तुं सहोत्थितं कुमारमभिमुखीकृत्यानुग्रहपरा दैवी वागित्येवं वदति स्म । किमिति तदुच्यते--हे गौतमगोत्रोत्पन्न नचिकेतः स खलु तव पितैवमुवाच । तद्वचनस्यायमभिप्रायः, हे पुत्र मृत्योर्गृहान्प्रति परेहि गच्छ । मृत्यवे त्वामहं दत्तवानस्मीति ।

इत्थं तत्पितुरभिप्रायं विशदीकृत्य सा वाग्देवता कुमारमनुग्रहीतुं बुद्धिप्रदानं करोति--

तं वै प्रवसन्तं गन्तासीति होवाच । तस्य स्म
तिस्रो रात्रीरनाश्वान्गृहे वसतात् । स यदि
त्वा पृच्छेत् । कुमार कति रात्रीरवात्सीरिति ।
तिस्र इति प्रतिब्रूतात् । किं प्रथमाꣳ रात्रि-
माश्ना इति (२)। प्रजां त इति । किं द्विती-
यामिति । पशूꣳस्त इति । किं तृतीयामिति ।
साधुकृत्यां त इति, इति ।

हे नचिकेतो यमो यदा गृहान्निर्गत्य यत्र क्वापि प्रवसति तं प्रवसन्तं निश्चित्य तद्गृहे गन्तासि गमिष्यसि गच्छेत्यर्थः । एवमुक्त्वा पुनरप्येवमुवाच । तस्य

यमस्य गृहे गत्वा यमदर्शनाभावे तदीयपुत्रभार्यादिभिः प्रार्थितोऽपि त्वं दिनत्रयमनाश्वान्भोजनरहितो निवासं कुरु। तावत्समागत्य स यमो यदि त्वां प्रति हे कुमार कति रात्रीरिहोषितवानिति पृच्छेत्, तदानीं तिस्र इत्येवं सत्यमेव प्रत्युत्तरं ब्रूहि। ततः प्रथमदिने किं भुक्तवानसीत्येवं पृष्टः संस्त्वदीयां प्रजां भक्षितवानस्मीत्येवं प्रत्युत्तरं ब्रूहि। अतिथिर्गृहे समागत्य भोजनरहितो वसति चेत्तस्य गृहस्वामिन एकदिनभोजनराहित्यमात्रेण प्रजाक्षयो भवतीत्येतच्छास्त्ररहस्यं तेन वाक्येन सूचितं भवति। एवं द्वितीयतृतीयदिवसयोरुपवासेन पशुक्षयं सुकृतक्षयं चासूचयत्।

तदेवं वाग्देवतया शिक्षितो नचिकेतास्तथैव चकारेत्येतद्दर्शयति—

तं वै संन्तं जगाम। तस्यं ह तिस्रो रात्रीरनाश्वान्गृह उंवास। तमागत्यं प्रपच्छ। कुमार्र कति रात्रीरवात्सीरिति। तिस्र इति प्रत्युंवाच (३)। किं प्रथमाꣳ रात्रिमाश्ना इति। प्रजां त इति। किं द्वितीयामिति। पशूꣳस्त इति। किं तृतीयामिति। साधुकृत्यां त इति, इति।

पूर्ववद्व्याख्येयम्।

एतावता शास्त्रार्थरहस्याभिज्ञोऽयं कुमारो न तु मूर्खः। तस्मात्सत्कारार्हो न मारणीय इत्येवं निश्चित्य यं सत्कारं चकार तं दर्शयति—

नमस्ते अस्तु भगव इति
होवाच। वरं वृणीष्वेति, इति।

उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम्।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति॥

एतच्छास्त्रानुसारेण नचिकेतसमभिज्ञं मत्वा भगवच्छब्देन संबोध्य दिनत्रयोपवासकृतं स्वापराधं परिहर्तुं वरत्रयं दत्तवान्। सोऽयमर्थः कठवल्लीष्वस्मिन्नेव नाचिकेतोपाख्याने विस्पष्टमाम्नातः—"तिस्रो रात्रीर्यदवात्सीर्गृहे मेऽनश्नन्ब्रह्मन्नतिथिर्नमस्यो नमस्ते अस्तु ब्रह्मन्स्वस्ति मेऽस्तु तस्मात्प्रति त्रीन्व-

रान्वृणीष्व " इति । प्रतिशब्देन प्रतिदिनोपवासनिमित्तापराधपरिहारायेत्ययमर्थ उच्यते ।

नचिकेतसा वृतं प्रथमं वरं दर्शयति—

पितरमेव जीवन्नयानीति, इति ।

हे यम त्वयाऽहममारितो जीवन्नेव मदीयं पितरं प्राप्नवानि सोऽयं प्रथमो वरः ।

अथ प्रश्नोत्तराभ्यां द्वितीयं वरं दर्शयति—

द्वितीयं वृणीष्वेति (४) । इष्टापूर्तयोर्मेऽक्षितिं
ब्रूहीति होवाच । तस्मै हैतमग्निं नाचिकेत-
मुवाच । ततो वै तस्येष्टापूर्ते ना क्षीयेते, इति ।

द्वितीयवरार्थं प्रार्थितोऽयं कुमारो मदीययोः श्रौतस्मार्तसुकृतयोरक्षयहेतुं ब्रूहीत्येतादृशं वरं वृतवान् । ततो यमस्तस्मै नचिकेतस एतं पूर्वानुवाकेष्वभिहितं चेतव्यमुपास्यं च द्विविधं नाचिकेतनामाङ्कितमग्निमुवाच । तन्नामाङ्कितत्वं कठवल्लीषु स्पष्टीकृतम्—" एष ते अग्निर्नाचिकेतः स्वर्ग्यो यमवृणीथा द्वितीयेन वरेणैतमग्निं तवैव प्रवक्ष्यन्ति जनासः " इति । ततो नाचिकेताग्निचयनादग्निध्यानाच्च तस्य नचिकेतसः श्रौतस्मार्तसुकृते न क्षीयेते अल्पफले न भवतः ।

नचिकेतस इवान्यस्यापि श्रौतस्मार्तसुकृतयोरक्षयं दर्शयति—

नास्येष्टापूर्ते क्षीयेते । योऽग्निं नाचि-
केतं चिनुते । य उं चैनमेवं वेद, इति ।

पुनरपि प्रश्नोत्तराभ्यां वरान्तरं दर्शयति—

तृतीयं वृणीष्वेति । पुनर्मृत्योर्मेऽपचितिं ब्रूही-
ति होवाच । तस्मै हैतमग्निं नाचिकेतमुवाच ।
ततो वै सोऽप पुनर्मृत्युमजयत् (५) । अप
पुनर्मृत्युं जयति । योऽग्निं नाचिकेतं चिनुते ।

य उं चैनमेवं वेदं, इति।

वर्तमानस्य मनुष्यशरीरस्य सकृन्मृत्युरवश्यंभावी। तदूर्ध्वं पुनरप्यर्वाचीनजन्मस्वीकारे सति पुनर्मृत्युर्भवति। जन्मस्वीकारं विना मुक्तौ सत्यां सोऽयं पुनर्मृत्युरपक्षीयते। मृत्योरपजयः पुरुषस्यैव जयः। तादृशं पुनर्मृत्योरपजयहेतुं ब्रूहीत्येष तृतीयो वरः। एवं वृणानाय तस्मै नचिकेतसे पुनर्मृत्युजयहेतुत्वेन तमेव द्विविधं नाचिकेताग्निमुक्तवान्। चयनोपासनयोर्मध्ये चयनस्य प्राधान्यमुपासनस्योपसर्जनत्वं यस्य पुंसः संपद्यते तस्येष्टापूर्तयोरक्षयत्वमात्रं चिरं पुण्यलोकमनुभूय पुनर्जन्मस्वीकारः। यस्य तूपासनं प्रधानं चयनमुपसर्जनं तस्य ब्रह्मलोकप्राप्तिद्वारा मुक्तिरेव न तु जन्मान्तरम्। तस्मान्मृत्युं जयेत्येवं वरयोर्विभागः। ततो वै तस्मादेव प्रधानभूतादुपासनात्स नचिकेताः पुनर्मृत्युं जितवान्। अन्योऽपि विद्याप्राधान्ये सति तद्वन्मृत्युं जयति।

अथ प्रजापतिवृत्तान्तकथनमुखेन दक्षिणां प्रशंसति——

प्रजापतिर्वै प्रजाकामस्तपोऽतप्यत। स हिरण्यमुदास्यत्। तदग्नौ प्रास्यत्। तदस्मैनाच्छंदयत्। तद्द्वितीयं प्रास्यत्। तदस्मै नैवाच्छंदयत्। तत्तृतीयं प्रास्यत् (६)। तदस्मै नैवाच्छंदयत्। तदात्मन्नेव हृदय्येऽग्नौ वैश्वानरे प्रास्यत्। तदस्मा अच्छदयत्। तस्माद्धिरण्यं कनिष्ठं धनानाम्। भुञ्जत्प्रियतमम्। हृदयजꣳ हि। स वै तमेव नाविन्दत्। यस्मै तां दक्षिणामनेष्यत्। ताꣳ स्वायैव हस्ताय दक्षिणायानयत्। तां प्रत्यगृह्णात् (७)। दक्षाय त्वा दक्षिणां प्रतिगृह्णामीति। सोऽदक्षत दक्षिणां प्रतिगृह्य।

दक्षते ह वै दक्षिणां प्रतिगृह्य। य एवं वेद, इति।

पुरा कदाचित्प्रजापतिः प्रजा उत्पादयिष्यामीति कामयित्वा तपः कृतवान्। तदा स प्रजापतिः स्वाभीष्टफलत्वेन किंचिद्धिरण्यमुदास्यदुत्पादितवान्। तच्च हिरण्यं स्वकार्यसिद्ध्यर्थमग्नौ प्रक्षिप्तवान्। तच्चाग्नौ प्रक्षिप्तं हिरण्यमस्मै प्रजापत्यर्थं नाच्छदयत्कार्यप्रतिबन्धस्यापवारणं नाकरोत्। एवं द्वितीयतृतीययोरपि पर्याययोर्द्रष्टव्यम्। ततः स प्रजापतिर्हिरण्यस्य बाह्यवह्नौ प्रक्षेपं परित्यज्याऽऽत्मन्नेव स्वशरीरमध्य एव हृद्ये हृदयपुण्डरीकसमीपवर्तिनि वैश्वानरे सर्वपुरुषाहिते जाठराग्नौ प्रास्यत्प्रक्षिप्तवान्। तच्च जाठराग्नौ प्रक्षिप्तं हिरण्यमस्मै प्रजापत्यर्थमच्छदयत्कार्यप्रतिबन्धस्यापवारणमकरोत्। यस्माद्बाह्येऽग्नौ प्रक्षिप्तमकिंचित्करं जाठराग्नौ प्रक्षिप्तं कार्यकरमासीत्तस्माल्लोकेऽपि हिरण्यं बाह्यदेशे भूमिमञ्जूषादौ प्रक्षिप्तं सद्भोगानुपयुक्तत्वाद्धनानां मध्ये कनिष्ठमुच्यते। यत्तद्धनं भुञ्जद्भोगोपयुक्तं सदाभरणरूपेणान्नादिरूपेण वा तदेव सर्वेषां प्राणिनां प्रियतमम्। यस्माद्धृदयजं प्रजापतेरिव भोक्तृणां हृदयसंबद्धं तस्मात्प्रियतमत्वं युक्तम्। उक्तरीत्या चेतने प्रक्षिप्तस्य हिरण्यस्य प्रियतमत्वं पर्यालोच्य यस्मै चेतनाय पुरुषाय तां हिरण्यरूपां दक्षिणां स्वयमनेष्यत्तमेव चेतनं पुरुषं प्रतिग्रहीतारमन्विष्य तदानीं नालभत पुरुषान्तरमलब्ध्वा स्वकीयायैव दक्षिणहस्ताय तां हिरण्यरूपां दक्षिणां नीतवान्। नीत्वा च हे हिरण्य त्वद्रूपां दक्षिणां दक्षाय कार्यसमर्थाय प्रतिगृह्णामीत्येवं वदन्स्वयमेव तां दक्षिणां प्रत्यगृह्णात्। ततः प्रजापतिर्दक्षिणां प्रतिगृह्यादक्षत कार्यसमर्थोऽभूत्। अन्योऽपि यः पुमानेवं हिरण्यवृत्तान्तं वेद स एव दक्षिणां प्रतिगृह्य दक्षते कार्यसमर्थो भवति।

प्रजापतिवृत्तान्तेनास्य दक्षिणां प्रशस्य महर्षिवृत्तान्तेनापि प्रशंसति—

एतद्ध स्म वै तद्विद्वा ँसो वाजश्रवसा गोतमाः। अप्यनूदेश्यां दक्षिणां प्रतिगृह्णन्ति। उभयेन वयं दक्षिष्यामह एव दक्षिणां प्रतिगृह्येति। तेऽदक्षन्त दक्षिणां प्रतिगृह्य। दक्षते ह वै दक्षिणां प्रतिगृह्य। य एवं वेद।

अहमु वै यज्ञोऽस्मि। मां नु यजस्व। अथ ते सत्यो यज्ञो भविष्यति। अनु स्वर्गं लोकं वेत्स्यसीति। स एतमग्नये कामाय पुरोडाशमष्टाकपालं निरवपत्। यज्ञाय चरुम्। अनुमत्यै चरुम्। ततो वै तस्य सत्यो यज्ञोऽभवत्। अनु स्वर्गं लोकमविन्दत्। सत्यो ह वा अस्य यज्ञो भवति। अनु स्वर्गं लोकं विन्दति। य एतेन हविषा यजते। य उ चैनदेवं वेद। सोऽत्र जुहोति। अग्नये कामाय स्वाहा यज्ञाय स्वाहा। अनुमत्यै स्वाहा प्रजापतये स्वाहा। स्वर्गाय लोकाय स्वाहाऽग्नये स्विष्टकृते स्वाहेति (५), इति।

देवतामुद्दिश्य द्रव्यत्यागो यज्ञः। तदभिमानी देवोऽपि यज्ञशब्दाभिधेयः। तदनुग्रहरहितो यज्ञोऽनृतः। तत्सहितः सत्यः। अन्यत्पूर्ववत्।

अथ पञ्चमीमिष्टिं विधत्ते—

तमापोऽब्रुवन्। प्रजापतेऽप्सु वै सर्वे कामाः श्रिताः। वयमु वा आपः स्मः। अस्मान्नु यजस्व। अथ त्वयि सर्वे कामाः श्रयिष्यन्ते। अनु स्वर्गं लोकं वेत्स्यसीति। स एतमग्नये कामाय पुरोडाशमष्टाकपालं निरवपत्। अद्भ्यश्चरुम्। अनुमत्यै चरुम्। ततो वै

तस्मिन्त्सर्वे कामा अश्रयन्त । अनु स्वर्गं लोकमविन्दत् । सर्वे ह वा अस्मिन्कामाः श्रयन्ते । अनु स्वर्गं लोकं विन्दति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । अग्नये कामाय स्वाहाऽद्भ्यः स्वाहा । अनुमत्यै स्वाहा प्रजापतये स्वाहा । स्वर्गाय लोकाय स्वाहाऽग्नये स्विष्टकृते स्वाहेति (६), इति ।

आपो जलाभिमानिन्यो देवताः । आपोऽब्रुवन्नित्येतदेव वाक्यमुदाहृत्य सर्वेष्वपि वस्तुष्वभिमानिदेवताः सन्तीति भगवान्बादरायण उत्तरमीमांसायां सूत्रयामास—"अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्" इति । ताश्चाब्देवतास्तं प्रजापतिमिदमब्रुवन् । हे प्रजापते सर्वेऽपि भोगा अप्स्वाश्रिताः । ओषधिवनस्पत्यादिफलस्य जलाधीनत्वात्सर्वभोगानां(णां) च तत्फलाधीनत्वात् । तासामपां स्वामिभूता देवता वयमेवातोऽस्मत्परितोषमन्तरेण भोगाभावादस्मानेव त्वं यजस्व । त्वयि सर्वे कामा आश्रिता भविष्यन्ति । स्वर्गं चान्विष्य लप्स्यस इति तद्वाक्यं श्रुत्वा ता अब्देवता इष्टवति प्रजापतौ सर्वे कामा आश्रिताः । एवमन्यस्मिन्नप्याश्रयन्ते ।

अथ षष्ठीमिष्टिं विधत्ते—

तमग्निर्बलिमानब्रवीत् । प्रजापतेऽग्नये वै बलिमते सर्वाणि भूतानि बलिꣳ हरन्ति । अहमु वा अग्निर्बलिमानस्मि । मां नु यजस्व । अथ ते सर्वाणि भूतानि बलिꣳ हरिष्यन्ति । अनु स्वर्गं लोकं वेत्स्यसीति । स

एतमग्नये कामाय पुरोडाशमष्टाकपालं निरवपत्। अग्नये बलिमते चरुम्। अनुमत्यै चरुम्। ततो वै तस्मै सर्वाणि भूतानि बलिमहरन्। अनु स्वर्गं लोकमविन्दत्। सर्वाणि ह वा अस्मै भूतानि बलिꣳ हरन्ति। अनु स्वर्गं लोकं विन्दति। य एतेन हविषा यजते। य उ चैनदेवं वेद। सोऽत्र जुहोति। अग्नये कामाय स्वाहाऽग्नये बलिमते स्वाहा। अनुमत्यै स्वाहा प्रजापतये स्वाहा। स्वर्गाय लोकाय स्वाहाऽग्नये स्विष्टकृते स्वाहेति (७), इति।

बलिमान्पूजावान्। तस्मै बलिमतेऽग्नये सर्वे प्राणिनः पूजां संपादयन्ति।

सप्तमीमिष्टिं विधत्ते—

तमनुवित्तिरब्रवीत्। प्रजापते स्वर्गं वै लोकमनुविवित्ससि। अहमु वा अनुवित्तिरस्मि। मां नु यजस्व। अथ ते सत्याऽनुवित्तिर्भविष्यति। अनु स्वर्गं लोकं वेत्स्यसीति। स एतमग्नये कामाय पुरोडाशमष्टाकपालं निरवपत्। अनुवित्त्यै चरुम्। अनुमत्यै चरुम्। ततो वै तस्य सत्याऽनुवित्तिरभवत्। अनु स्वर्गं लोकमविन्दत्। सत्या ह वा अस्यानुवित्ति-

भवति । अनु स्वर्गं लोकं विन्दति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽग्ने जुहोति । अग्नये कामाय स्वाहाऽनुवित्त्यै स्वाहा । अनुमत्यै स्वाहा प्रजापतये स्वाहा । स्वर्गाय लोकाय स्वाहाऽग्नये स्विष्टकृते स्वाहेति (८), इति ।

अन्विष्य विद्यते लभ्यतेऽपेक्षितः पदार्थो यया क्रियया सेयं क्रियाऽनुवित्तिः । तदभिमानिनी देवताऽप्यनुवित्तिरित्युच्यते । सा देवता प्रजापतिमब्रवीत्—हे प्रजापते त्वं स्वर्गं लोकमनुविवित्सस्यन्विष्य वेत्तुं लब्धुमिच्छसि तदभिमानिन्या मम यागेन त्वदीयाऽनुवित्तिक्रिया सत्या फलपर्यवसायिनी भविष्यति । एतेषूक्तेषु पर्यायेष्विष्टिप्रस्ताव इति विधिरूपहोमाश्च प्रथमपर्यायवद्व्याख्येयाः ।

तदेवं कर्मावयवभूता इष्टयः पृथग्विहिताः । अथेष्टिसंघातरूपं कर्म विधत्ते—

ता वा एताः सप्त स्वर्गस्य लोकस्य द्वारः । दिवः श्येनयोऽनुवित्तयो नाम । आशा प्रथमा रक्षति । कामो द्वितीयाम् । ब्रह्म तृतीयाम् । यज्ञश्चतुर्थीम् । आपः पञ्चमीम् । अग्निर्बलिमान्षष्ठीम् । अनुवित्तिः सप्तमीम् । अनु ह वै स्वर्गं लोकं विन्दति । कामचारोऽस्य स्वर्गे लोके भवति । य एताभिरिष्टिभिर्यजते । य उ चैना एवं वेद । तास्वन्विष्टि । पष्ठौही धरां दद्यात्कंसं च । स्त्रियै चाऽऽभार-

समृद्ध्यै ( ९ ), इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके द्वादशाध्याये द्वितीयोऽनुवाकः ॥ २ ॥

या इष्टयः पूर्वमभिहितास्ता एताः सप्तसंख्याकाः स्वर्गलोकस्य द्वार इव प्राप्तिसाधनभूतास्तासां च दिवःश्येनय इत्येतन्नाम । यथा लोके श्येन उत्पत्त्याऽऽकाशे स्वेच्छया संचरत्येवमेता अपि यजमानस्य द्युलोके स्वेच्छया संचारं प्रापयन्ति । तस्माद्द्युसंपादाच्छ्येनाख्यपक्षिसदृशत्वाच्च दिवःश्येनयः संपन्नाः । अन्वेषणपूर्वकलाभसाधनत्वादनुवित्तय इत्युच्यन्ते । तासामिष्टीनां मध्ये प्रथमामिष्टिमाशाख्यदेवता रक्षति तत्स्वामित्वात्तयेष्ट्या तुष्टा सती तत्फलं प्रयच्छति । एवं कामाद्या देवतास्तां तामिष्टिं रक्षन्ति । एताभिः सप्तभिरिष्टिभिर्यो यजते योऽपि चैना यथोक्तप्रकारेण वेद सोऽयमुभयविधः पुमान्स्वर्गमन्विष्य लभते । तस्य तस्मिन्स्वर्गे कामचारः स्वेच्छया संचारो यथेष्टभोगप्राप्तिर्भवति । तासु सप्तस्वपीष्टिषु मध्येऽन्विष्टि, एकैकामिष्टिमनुष्ठायानन्तरमेव दक्षिणार्थं पष्ठौहीवरां दद्यात् । चतुःसंवत्सरवयस्का गौः पष्ठौही । पष्ठौहीनां मध्ये या श्रेष्ठा तां दद्यात् । तथा कंसं भोजनार्थं कांस्यपात्रं च दद्यात् । तथा स्त्रियै योग्यमाभारमाभरणं च दद्यात् । तत्सर्वं दक्षिणादानं फलसमृद्ध्यै संपद्यते ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे द्वादशप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

अथ तृतीयोऽनुवाकः ।

द्वितीये दिवःश्येनाख्या इष्टयोऽभिहिताः । अथाऽऽपाद्याख्यानामिष्टीनां चतुर्थानुवाके विधास्यमानानां याज्यानुवाक्यास्तृतीयानुवाकेऽभिधीयन्ते । तत्र 'तपसे चरुम्' इत्यस्य हविषः पुरोनुवाक्यामाह—

तप॑सा दे॒वा दे॒वताम॑ग्र॒ आय॑न् । तप॒सर्ष॑यः
सुव॒रन्व॑विन्दन् । तप॑सा स॒पत्ना॒न्प्रणु॑दा॒मा-
रा॑तीः । येने॒दं विश्वं॒ परि॑भूतं॒ यद॒स्ति, इति ।

यज्जगद्देवर्षिमनुष्यादिरूपमस्ति तदिदं विश्वं येन तपसा परिभूतं सर्वतो व्याप्तं तेन तपसा देवा इन्द्रादयः सर्वे देवत्वमग्रे सृष्ट्यादौ प्राप्ताः पूर्वसृष्टौ तपस्तप्त्वा देवजन्म लब्धवन्तः। तथर्षयो वसिष्ठनारदाद्याः पूर्वानुष्ठितेन तपसा स्वर्गमन्विष्य लब्धवन्तः। वयमपीदानीमनुष्ठितेन तपसा यागादिरूपेण सपत्नाञ्शत्रून्प्रणुदाम प्रकर्षेणापसारयामः। कीदृशान्सपत्नानरातीरस्मभ्यं दातव्यस्य धनस्यादातॄन्।

तत्रैव याज्यामाह—

प्रथमजं देवꣳ हविषा विधेम। स्वयंभु ब्रह्म परमं तपो यत्। स एव पुत्रः स पिता स माता। तपो ह यक्षं प्रथमꣳ संबभूव, इति।

योऽयं तपोभिमानी देवः स प्रथमजः। तथा चोपनिषदि सृष्टिप्रकरणे तपसः प्रथमजत्वमाम्नायते—"सोऽकामयत बहु स्यां प्रजायेयेति। स तपोऽतप्यत" इति। तादृशं तपोदेवं हविषा विधेम परिचरेम। यत्स्वयंभु स्वतःसिद्धं सत्यज्ञानादिरूपं ब्रह्म परमं सृष्टिकारणरूपं तपः संपन्नं स एव तपोदेवः पुत्रपितृमात्रादिरूपेणाऽऽविर्बभूव। किंच तपो ह तप एव प्रथमं यक्षं पूज्यं संबभूव। सर्वोऽपि हि पुरुषः प्रथमं फलसाधनं तपोऽनुष्ठाय पश्चात्फलं लभते। तस्मात्प्रशस्तमिदं तपः।

अथ 'श्रद्धायै चरुम्' इत्यस्य हविषः पुरोनुवाक्यामाह—

श्रद्धया देवो देवत्वमश्नुते। श्रद्धा प्रतिष्ठा लोकस्य देवी (१)। सा नो जुषाणोप यज्ञमागात्। कामवत्साऽमृतं दुहाना, इति।

येयमास्तिक्यरूपा श्रद्धा तयैव देवः सर्वोऽपीन्द्रादिदेवो देवत्वं प्राप्नोति। श्रद्धारहितस्य तपआदेर्निरर्थकत्वात्।

तथा च स्मर्यते—

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत्।
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥ इति।

अतः श्रद्धादेवी लोकस्य सर्वस्य प्रतिष्ठाऽऽश्रयः। सा देवी जुषाणा प्रीयमाणा नोऽस्मदीयं यज्ञमुपागात्प्राप्नोतु। कीदृशी श्रद्धा कामवत्सा फलकामनैव वत्सस्थानीया यस्याः सा कामवत्साऽत एवामृतं फलं दुहाना दोग्ध्री। श्रद्धालुर्हि यत्फलं कामयते तत्सिध्यत्येव।

तत्रैव याज्यामाह—

श्रद्धा देवी प्रथमजा ऋतस्य। विश्वस्य भर्त्री
जगतः प्रतिष्ठा। ताꣳ श्रद्धाꣳ हविषा यजामहे।
सा नो लोकममृतं दधातु। ईशाना देवी भुवनस्याधिपत्नी, इति।

श्रद्धाख्या देवी, ऋतस्य सत्यस्य परमार्थस्य ब्रह्मणः सकाशात्प्रथमजाऽऽदावेवोत्पन्ना। अत एव विश्वस्य भर्त्री सर्वस्य प्राणिजालस्य पोषयित्री जगतः प्रतिष्ठाऽऽश्रयः। श्रद्धाहीनस्य वैदिकस्य लौकिकस्य वा व्यवहारस्य फलपर्यवसायित्वाभावात्। तामेतां श्रद्धां देवीं वयं हविषा यजामहे पूजयामः। सा श्रद्धा देवी नोऽस्माकममृतमविनाशं लोकं संपादयतु। सा हि देवी यस्माद्भुवनस्याधिपत्नी पालयित्री तस्मादीशानाऽस्माकं लोकं संपादयितुं समर्था।

अथ 'सत्याय चरुम्' इत्यस्य हविषः पुरोनुवाक्यामाह—

आगात्सत्यꣳ हविरिदं जुषाणम्। यस्माद्देवा
जज्ञिरे भुवनं च विश्वे। तस्मै विधेम हविषा
घृतेन (२)। यथा देवैः सधमादं मदेम, इति।

यत्सत्यं सत्यवदनाभिमानिदेवतास्वरूपमस्ति तज्जुषाणं प्रीतियुक्तं सदिदमस्माभिर्दीयमानं हविः प्रत्यागादागच्छेत्[1]। अस्मात्सत्याख्याद्देवस्वरूपाद्विश्वे सर्वे देवा भुवनं च जज्ञिरे। सत्यं हि परब्रह्मस्वरूपत्वात्सर्वस्य जनकम्। तस्मै सत्याय देवाय घृतयुक्तेन हविषा विधेम परिचरेम। अथानन्तरं वयं देवैर्युक्ताः सधमादं मदेमैकत्र हर्षं प्राप्नुयाम।

---

१ क. 'च्छतु। अ'।

तत्रैव याज्यामाह—

यस्यं प्रतिष्ठोर्वन्तरिक्षम् । यस्माद्देवा जज्ञिरे भुवनं च सर्वे । तत्सत्यमर्चेदुपयज्ञं न आ-गात् । ब्रह्माऽऽहुतीरुपमोदमानम्, इति ।

यस्य सत्यस्य ब्रह्मण उरु विस्तीर्णमन्तरिक्षं प्रतिष्ठाऽऽश्रयः । सर्वगतत्वा-दन्तरिक्षव्यापित्वं युक्तम् । यस्मात्सत्याद्ब्रह्मणः सर्वे देवा भुवनं च जज्ञिरे तत्स-त्याख्यमर्चत्पूजायुक्तं परं ब्रह्मास्मदीया आहुतीरुपेत्य मोदमानं सन्मदीयं यज्ञ-मुपागादुपागच्छतु ।

अथ ' मनसे चरुम् ' इत्यस्य हविषः पुरोनुवाक्यामाह—

मनसो वशे सर्वमिदं बभूव । नान्यस्य मनो वशमन्वियाय । भीष्मो हि देवः सहसः सहीयान् । स नो जुषाण उप यज्ञमागात्, इति ।

सर्वमिदं जगन्मनसो वशे बभूव न त्वेतन्मनोऽन्यस्य कस्यचिद्वशमनुगच्छति । सर्वस्य मनोधीनत्वं श्रुत्यन्तरे दर्शितम्—"मन एव मनुष्याणां कारणं बन्धमोक्षयोः" इति । मनस इतराधीनत्वाभावश्च स्मर्यते—' असंशयं महाबाहो मनो दुर्नि-ग्रहं चलम् ' इति । तादृशमनोभिमानी देवो भीष्मो हि भयहेतुत्वेन प्रसिद्धः । मनसः सर्वदुःखापादकत्वं सर्वैरप्यनुभूयते । सुप्ते मनसि दुःखमात्रस्याभावात् । तस्मादयं मनोदेवः सहसः सहीयान्बलवतोऽप्यत्यन्तं बलीयान् । अत एव स्मर्यते—' चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम् ' इति । स तादृशो मनोदेवो जुषाणः प्रीतियुक्तः सन्नोऽस्मदीयं यज्ञमुपागात्प्राप्नोतु ।

तत्रैव याज्यामाह—

आकूतीनामधिपतिं चेतसां च (३) । संकल्प-जूतिं देवं विपश्चितम् । मनो राजानमिह वर्ध-यन्तः । उपहवेऽस्य सुमतौ स्याम, इति ।

इह कर्मणि वयं मनोनामकं चक्षुरादीन्द्रियाणां राजानं वर्धयन्तः परितो-षयन्त उपहवेऽनुज्ञाने सत्यस्य देवस्य सुमतावनुग्रहबुद्धौ स्याम भवेम । यदा

स्वयं सुखिनो भवन्त्वित्यस्माननुजानाति तदानीमेव सुखिनो भवेम । कीदृशं राजानमाकूतीनामिदमेव करिष्यामीत्येवंविधानां संकल्पानां चेतसां चेदं वस्त्वे-तादृशमिति ज्ञानानां चाधिपतिं कर्तव्यसंकल्पानां वस्तुज्ञानानां च मनोधीनत्वं प्रसिद्धम् । संकल्पजूतिं सहस्रसंख्याककर्तव्यविषयेषु संकल्पेषु जूतिर्वेगो यस्यासौ संकल्पजूतिस्तादृशं देवं सर्वस्य द्योतकमत एव विपश्चिं सर्वज्ञम् ।

अथ 'चरणाय चरुम्' इत्यस्य हविषः पुरोनुवाक्यामाह—

चरणं पवित्रं विततं पुराणम् । येनं पूतस्त-
रति दुष्कृतानि । तेनं पवित्रेण शुद्धेन
पूताः । अति पाप्मानमरातिं तरेम, इति ।

चरत्यनेनेति पादेन्द्रियं चरणं शास्त्रीयाचरणं वा तेनोच्यते । तच्च पवित्रं शुद्धिकारणं विततं सर्वप्राणिविषयत्वेन विस्तीर्णं पुराणं सृष्ट्यादिमारभ्य प्रवृत्त-त्वाच्चिरंतनं येन चरणेन देवेन पूतः शोधितः पुरुषो दुष्कृतानि तरति पापानि विनाशयति । पवित्रेणान्यस्य शोधकेन स्वयमपि शुद्धेन तेन चरणदेवेन पूता वयं पाप्मानमरातिं पापरूपं शत्रुमतितरेमातिशयेन लङ्घयामः ।

तत्रैव याज्यामाह—

लोकस्य द्वारमर्चिमत्पवित्रम् । ज्योतिष्मद्भ्रा-
जमानं महस्वत् । अमृतस्य धारा बहुधा दोह-
मानम् । चरणं नो लोके सुधितां दधातु, इति ।

यदेतच्चरणाख्यं देवतास्वरूपं तदेतन्नोऽस्माकं स्वर्गलोके सुधि[तां] सुखयुक्तामव-स्थितिं दधातु संपादयतु । कीदृ[शं] चरणं लोकस्य द्वारं स्वर्गस्य द्वारवत्प्रवेशसाध-न[म]र्चिमदर्चनायुक्तं [स]र्वैः पूज्यं पवित्रं शोधकं ज्योतिष्मत्त्विषा प्रका[श]नसामर्थ्यो-पेतं भ्राजमानं स्व[रूपेण] दीप्यमानं महस्वन्माहात्म्ययुक्तम् । अमृ[त]स्य पीयूषस्य [धा]रा बहुधा दोहमानमनेकप्रकारेण संपादनशीलम् ।

[अथ] 'आग्नेयमष्टाकपालम्' इत्यस्य हविषो याज्यानुवाक्ययोः प्रतीके —

अग्निर्मूर्धा भुवः, इति ।

'अग्निर्मूर्धा दिवः ककुत्' इति पुरोनुवाक्या । 'भुवो यज्ञस्य' इति याज्या । एतच्चोभयम् 'अग्निर्मूर्धा' इत्यनुवाके व्याख्यातम् ।

अथ 'अनुमत्यै चरुम्' इत्यस्य हविषो याज्यानुवाक्ययोः प्रतीके दर्शयति—

अनु नोऽद्यानुमतिरन्विदनुमते त्वम्, इति ।

'अनु नोऽद्यानुमतिर्यज्ञं देवेषु' इति पुरोनुवाक्या । 'अन्विदनुमते त्वम्' इति याज्या । एतच्चोभयम् 'इदं वामास्ये हविः' इत्यनुवाके व्याख्यातम् ।

अथ स्विष्टकृतो याज्यानुवाक्ययोः प्रतीके दर्शयति—

हव्यवाहꣳ स्विष्टम् (४), इति ।

देवी घृतेन चेतसां च दोहमानं चत्वारि च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके द्वादशाध्याये तृतीयोऽनुवाकः ॥ ३ ॥

'हव्यवाहमभिमातिषाहम्' इति पुरोनुवाक्या । 'स्विष्टमग्ने अभि तत्पृणाहि' इति याज्या । एतच्चोभयम् 'जुष्टो दमूनाः' इत्यत्र व्याख्यातम् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे द्वादशप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

अथ चतुर्थोऽनुवाकः ।

अपाद्याख्यानामिष्टीनां याज्यानुवाक्यास्तृतीयेऽभिहिताः । चतुर्थे ता इष्टयोऽभिधीयन्ते । प्रथमं तावदिष्टीनां प्रस्तावं दर्शयति—

देवेभ्यो वै स्वर्गो लोकस्तिरोऽभवत् । ते प्रजापतिमब्रुवन् । प्रजापते स्वर्गो वै नो लोकस्तिरोऽभूत् । तमन्विच्छेति । तं यज्ञक्रतुभिरन्वैच्छत् । तं यज्ञक्रतुभिर्नान्वविन्दत् । तामिष्टिभिरन्वैच्छत् । तमिष्टिभिरन्वविन्दत् ।

तदिष्टीनामिष्टित्वम् । एष्टयो ह वै नाम । ता इष्टय इत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः ( १ ), इति ।

द्वितीयानुवाकवद्व्याख्येयम् ।

सामान्येन सर्वासामिष्टीनां प्रस्तावमुक्त्वा विशेषाकारेण प्रथमाया इष्टेः प्रस्तावं हविष्केष्टिविधानमुपहोमविधानं च दर्शयति—

तं तपोऽब्रवीत् । प्रजापते तपसा वै श्राम्यसि । अहमु वै तपोऽस्मि । मां नु यजस्व । अथ ते सत्यं तपो भविष्यति । अनु स्वर्गं लोकं वेत्स्यसीति । स एतमाग्नेयमष्टाकपालं निरवपत् । तपसे चरुम् । अनुमत्यै चरुम् । ततो वै तस्य सत्यं तपोऽभवत् । अनु स्वर्गं लोकमविन्दत् । सत्यꣳ ह वा अस्य तपो भवति । अनु स्वर्गं लोकं विन्दति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । अग्नये स्वाहा तपसे स्वाहा । अनुमत्यै स्वाहा प्रजापतये स्वाहा । स्वर्गाय लोकाय स्वाहाऽग्नये स्विष्टकृते स्वाहेति ( २ ), इति ।

अत्रेष्टिस्तपोसाधारणदेवत्या । अग्निरनुमतिश्च पुरस्ताच्चोपरिष्टाच्च सर्वेष्टिसाधारणदेवते । वाक्यं तु सर्वं द्वितीयानुवाकोक्ताशीवाक्यवद्व्याख्येयम् ।

अथ द्वितीयामिष्टिं विधत्ते—

तꣳ श्रद्धाऽब्रवीत् । प्रजापते श्रद्धया वै

श्राम्यसि । अहमु वै श्रद्धाऽस्मि । मां नु
यजस्व । अथ ते सत्या श्रद्धा भविष्यति ।
अनु स्वर्गं लोकं वेत्स्यसीति । स एतमा-
ग्नेयमष्टाकपालं निरवपत् । श्रद्धायै चरुम् ।
अनुमत्यै चरुम् । ततो वै तस्य सत्या श्रद्धाऽ-
भवत् । अनु स्वर्गं लोकमविन्दत् । सत्या
ह वा अस्य श्रद्धा भवति । अनु स्वर्गं लोकं
विन्दति । य एतेन हविषा यजते । य उ
चैनदेवं वेद । सोऽत्र जुहोति । अग्नये स्वाहा
श्रद्धायै स्वाहा । अनुमत्यै स्वाहा प्रजापतये
स्वाहा । स्वर्गाय लोकाय स्वाहाऽग्नये
स्विष्टकृते स्वाहेति ( २ ), इति ।

अथ तृतीयामिष्टिं विधत्ते—

त१ सत्यमब्रवीत् । प्रजापते सत्येन वै
श्राम्यसि । अहमु वै सत्यमस्मि । मां नु
यजस्व । अथ ते सत्य१ सत्यं भविष्यति ।
अनु स्वर्गं लोकं वेत्स्यसीति । स एतमाग्नेय-
मष्टाकपालं निरवपत् । सत्याय चरुम् । अनु-
मत्यै चरुम् । ततो वै तस्य सत्य१ सत्यमभ-
वत् । अनु स्वर्गं लोकमविन्दत् । सत्य१ ह वा

अस्य सत्यं भवति । अनु स्वर्गं लोकं विन्दति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । अग्नये स्वाहा सत्याय स्वाहा । अनुमत्यै स्वाहा प्रजापतये स्वाहा । स्वर्गाय लोकाय स्वाहाऽग्नये स्विष्टकृते स्वाहेति (४), इति ।

अथ चतुर्थीमिष्टिं विधत्ते—

तं मनोऽब्रवीत् । प्रजापते मनसा वै श्राम्यसि । अहमु वै मनोऽस्मि । मां नु यजस्व । अथ ते सत्यं मनो भविष्यति । अनु स्वर्गं लोकं वेत्स्यसीति । स एतमाग्नेयमष्टाकपालं निरवपत् । मनसे चरुम् । अनुमत्यै चरुम् । ततो वै तस्य सत्यं मनोऽभवत् । अनु स्वर्गं लोकमविन्दत् । सत्यꣳ ह वा अस्य मनो भवति । अनु स्वर्गं लोकं विन्दति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । अग्नये स्वाहा मनसे स्वाहा । अनुमत्यै स्वाहा प्रजापतये स्वाहा । स्वर्गाय लोकाय स्वाहाऽग्नये स्विष्टकृते स्वाहेति (५), इति ।

अथ पञ्चमीमिष्टिं विधत्ते—

तं चरणमब्रवीत्। प्रजापते चरणेन वै श्रा-
म्यासि । अहमु वै चरणमास्मि । मां नु
यंजस्व । अथ ते सत्यं चरणं भविष्यति ।
अनु स्वर्गं लोकं वेत्स्यसीति । स एतमाग्नेय-
मष्टाकपालं निरवपत् । चरणाय चरुम् ।
अनुमत्यै चरुम् । ततो वै तस्य सत्यं चरण-
मभवत् । अनु स्वर्गं लोकमविन्दत् । सत्यꣳ-
ह वा अस्य चरणं भवति । अनु स्वर्गं लोकं
विन्दति । य एतेन हविषा यजते । य उ
चैनदेवं वेद । सोऽत्र जुहोति । अग्नये स्वाहा
चरणाय स्वाहा । अनुमत्यै स्वाहा प्रजाप-
तये स्वाहा । स्वर्गाय लोकाय स्वाहाऽग्नये
स्विष्टकृते स्वाहेति ( ६ ), इति ।

प्रत्येकमिष्टीर्विधाय तत्संघातरूपं कर्म विधत्ते—

ता वा एताः पञ्च स्वर्गस्य लोकस्य द्वारः ।
अपाद्या अनुवित्तयो नाम । तपः प्रथमाꣳ
रक्षति । श्रद्धा द्वितीयाम् । सत्यं तृतीयाम् ।
मनश्चतुर्थीम् । चरणं पञ्चमीम् । अनु ह वै
स्वर्गं लोकं विन्दति । कामचारोऽस्य स्वर्गे
लोके भवति । य एताभिरिष्टिभिर्यजते ।
य उ चैना एवं वेद । तास्वन्विष्टि । पष्ठौ-

हीवरां दध्यात्कृश्सं च। श्रियै चाऽऽभारश्
समृद्ध्यै (७), इति।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके द्वादशाध्याये चतुर्थोऽनुवाकः ॥ ४ + ॥

अपहन्यन्ते स्वर्गप्रतिबन्धाः सर्वेऽपि याभिरिष्टिभिस्ता अपाद्याः। अन्यत्सर्वमप्यस्मिन्ननुवाके द्वितीयानुवाकवद्व्याख्येयम्। ता एता उक्ता दिवःश्येनयोऽपाद्याश्च द्विविधा अन्तःप्रयोज्या बहिष्प्रयोज्याश्चेति। समस्तस्य चातुर्होत्रचयनस्य मध्ये प्रयोगो बोधायनवाक्येन पूर्वमुदाहृतः। बहिस्तु स्वर्गकामेन(ण) चातुर्होत्रात्पृथगेव प्रयोक्तव्यः।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे द्वादशप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

अथ पञ्चमोऽनुवाकः।

चतुर्थेऽपाद्या इष्टयोऽभिहिताः पञ्चमे चातुर्होत्रचयनमभिधीयते। तत्राऽऽदौ चातुर्होत्रमन्त्रान्प्रशंसति—

ब्रह्म वै चतुर्होतारः। चतुर्होतृभ्योऽधियज्ञो
निर्मितः। नैनꣳ शतम्। नाभिचरितमाग-
च्छति। य एवं वेद, इति।

य एते चतुर्होतृसंज्ञका मन्त्रास्ते ब्रह्म वै परब्रह्मस्वरूपा एव। सर्वजगत्सृष्टिहेतुत्वात्। दशहोतृचतुर्होतृपञ्चहोतृषड्ढोतृसप्तहोतृमन्त्राः सर्वेऽपि चतुर्होतृशब्देनोच्यन्ते। एतेषां मन्त्राणां जगत्सृष्टिहेतुत्वं चतुर्होतृशब्दवाच्यत्वं च द्वितीयकाण्डस्य द्वितीयतृतीयप्रपाठकरूपे होतृमन्त्रब्राह्मणे बहुधा प्रपञ्चितम्। एतेभ्यश्चतुर्होतृभ्यः सर्वोऽपि यज्ञोऽधिनिर्मितः। एतदपि तत्रैवोक्तम्। यः पुमानेवं चतुर्होतृमन्त्राणां ब्रह्मत्वं यज्ञनिर्वाहकत्वं च वेद तमेनं पुरुषं शतं

+ अत्र क्वचिदधिको ग्रन्थः स यथा "आशानुवित्ति श्रद्धा सत्यो हं। कामो यज्ञः सत्यो हं। अन्यत्र सत्यꣳ हं" इति।

परकीयः शापो नाऽऽगच्छति । अभिचरितं परकृताभिचारोऽपि नाऽऽगच्छति ।

प्रकारान्तरेण पुनः प्रशंसति—

यो ह वै चतुर्होतृणां चतुर्होतृत्वं वेद । अथो पञ्चहोतृत्वम् । सर्वा हास्मै दिशः कल्पन्ते । वाचस्पतिर्होता दशहोतृणाम् । पृथिवी होता चतुर्होतृणाम् (१) । अग्निर्होता पञ्चहोतृणाम् । वाग्घोता षड्ढोतृणाम् । महाहविर्होता सप्तहोतृणाम् । एतद्वै चतुर्होतृणां चतुर्होतृत्वम् । अथो पञ्चहोतृत्वम् । सर्वा हास्मै दिशः कल्पन्ते । य एवं वेद, इति ।

यः पुमांश्चतुर्होतृसंज्ञकानामेतेषां मन्त्राणां बहूनामकेनैव चतुर्होतृशब्देनाभिधेयत्वं वेद । अपि च पञ्चस्वनुवाकेषु होतृप्रतिपादनात्पञ्चहोतृशब्दवाच्यत्वं च वेद । अस्मै पुरुषाय सर्वा अपि दिशः कल्पन्ते स्वस्वप्रयोजनसमर्था भवन्ति । आरण्यकेषु—'चित्तिः स्रुक्' इत्याद्यनुवाकेष्वाम्नाता ये होतृमन्त्रास्तेषु मध्ये 'पृथिवी होता' इत्यस्य चतुर्होतृमन्त्रस्याऽधिष्ठात्री देवता चतुर्वारमाह्वानेन श्रुत्वा प्रत्युत्तरं दत्तवती । 'अग्निर्होता' इत्यस्य पञ्चहोतृमन्त्रस्याधिष्ठात्री देवता पञ्चवारमाह्वानेन । 'वाग्घोता' इत्यस्य षड्ढोतृमन्त्रस्याधिष्ठाता षड्वारमाह्वानेन । 'महाहविर्होता' इत्यस्य सप्तहोतृमन्त्रस्याऽधिष्ठाता सप्तवारमाह्वानेन । 'चित्तिः स्रुक्' इत्यस्य दशहोतृमन्त्रस्याऽधिष्ठाता दशवारमाह्वानेन । चतुर्होतृमन्त्रदेवस्य शीघ्रप्रत्युत्तरेण परितुष्टः प्रजापतिस्तन्नाम्नैव सर्वेषां व्यवहारोऽस्त्विति वरं ददौ । तथा च तत्राऽऽम्नातम्[1]—'त्वं वै मे नेदिष्ठं हूतः प्रत्यश्रौषीः । त्वयैनानाख्यातार इति । तस्मान्नु हैनाश्चतुर्होतार इत्याचक्षते' इति । तदेतच्चतुर्होतृत्वं तत्र प्रपञ्चितत्वादत्र संगृहीतम् । यत्तु पञ्चस्वनुवाकेषु होतुः सद्भावात्पञ्चहोतृत्वं तदत्र प्रपञ्च्यते । चित्तिः स्रुगित्यादिमन्त्राणां दशहोतृणां मध्ये वाचस्पतिर्होतृत्वेनाऽऽम्नातः । 'वाचस्पतिर्होता' इति तस्मिन्ननुवाके प्रा-

१ क. ° मन्त्रावयवानां ।

म्नानात् । तथा चतुर्होतृमन्त्रावयवानां मध्ये पृथिवी होतेत्याम्नातः । पञ्चहोतृमन्त्रावयवानां मध्येऽग्निर्होतेत्याम्नातः । षड्ढोतृमन्त्रावयवानां मध्ये वाग्घोतेत्याम्नातः । सप्तहोतृमन्त्रावयवानां मध्ये महाहविर्होतेत्याम्नातः । चतुर्होतृसंज्ञकानां सर्वेषां मन्त्राणामेतदेव पूर्वकाण्डोक्तवरप्रदानेन चतुर्होतृत्वम् । अत्रोक्तपञ्चविधहोतृसद्भावेन पञ्चहोतृत्वं च । सर्वा हास्मा इत्यादि पुनर्वचनमुपसंहारार्थम् ।

पुनरपि प्रकारान्तरेण मन्त्रान्प्रशंसति—

एषा वै सर्वविद्या । एतद्भेषजम् । एषा पङ्क्तिः
स्वर्गस्य लोकस्याञ्जसाऽयनिः स्रुतिः (२) ।
एतान्योऽध्यैत्यच्छदिर्दर्शे यावत्तरसम् । स्वरेति ।
अनपब्रवः सर्वमायुरेति । विन्दते प्रजाम् । राय-
स्पोषं गौपत्यम् । ब्रह्मवर्चसी भवति, इति ।

येयं होतृमन्त्रविद्यैषैव सर्वविद्याऽनयैवापेक्षितस्य फलस्य लभ्यत्वात् । एतदेव मन्त्रजातं भेषजं सर्वानिष्टनिवारकम् । एषा विद्या पञ्चानुवाकरूपत्वात्पङ्क्तिः । सा च स्वर्गस्य लोकस्याञ्जसाऽयनिरनायासेन प्राप्तिहेतुः स्रुतिर्मार्गः । एतान्पञ्चानुवाकरूपान्मन्त्रान्यः पुमानच्छदिर्दर्शे गृहस्याऽऽच्छादकानि कटरूपाणि च्छदींषि यावति दूरे न दृश्यन्ते तावति दूरेऽरण्ये गत्वा यावत्तरसं यावद्बलमुच्चध्वनिनाऽध्यैत्यधिकत्वेन प्राप्नोति गुरुमुखादधीते जपति वेत्यर्थः । स पुमान्स्वरेति स्वर्गं प्राप्नोति । अनपब्रवोऽपकीर्तिरहितः सर्वमायुरेति प्रजादिकं च लभते ब्रह्मवर्चसयुक्तश्च भवति । तत्र स्तुतिप्रसङ्गादयं पुरुषार्थो जपविधिर्द्रष्टव्यः ।

पुनरपि तं विधिमनूद्य प्रशंसति—

एतान्योऽध्यैति । स्पृणोत्यात्मानम् । प्रजां
पितॄन्, इति ।

योऽयं पुमानेतान्मन्त्रान्पूर्वोक्तरीत्याऽधीते स स्वात्मानं स्वकीयां पुत्रादिप्रजां स्वकीयान्पितृपितामहादींश्च स्पृणोति तत्तदपेक्षितफलसंपादनेन प्रीणयति ।

---

१ ग. 'मे च' । २ क. दूरं द' ।

पुनरप्येतन्मन्त्रवेदितृपुरुषमुदाहृत्य प्रशंसति—

एतान्वा अरुण औपवेशिर्विदांचकार ( ३ )। एतैरधिवादमपाजयत् । अथो विश्वं पाप्मानम् । स्वर्ययौ । एतान्योऽध्यैति । अधिवादं जयति । अथो विश्वं पाप्मानम् । स्वरेति, इति ।

उपवेशिपुत्रः कश्चिन्मुनिररुणाख्य एतान्मन्त्रान्विदांचकारारण्ये गत्वा ध्यानं कृतवान् । स मुनिरधिवादं स्वस्मादधिकेन पुरुषेण सह विद्याविषये वादं कृत्वा स्वयं जितवान् । अपि च सर्वमपि पाप्मानमपाजयद्विनाशितवान् । स्वर्ययौ च स्वर्गं च प्राप्तवान् । एवमन्योऽपि यथोक्तं फलं सर्वं प्राप्नोति ।

एवं बहुधा मन्त्रान्प्रशस्य तैर्मन्त्रैश्चयनं विधत्ते—

एतैरग्निं चिन्वीत स्वर्गकामः । एतैरायुष्कामः । प्रजापशुकामो वा ( ४ ), इति ।

आयुरादिकामोऽस्मिंश्चयनेऽधिकारी ।

कर्म विधाय तदंशरूपानुपधानविशेषान्विधत्ते—

पुरस्ताद्दशहोतारमुदञ्चमुपदधाति यावत्पदम् । हृदयं यजूंषि पत्न्यौ च । दक्षिणतः प्राञ्चं चतुर्होतारम् । पश्चादुदञ्चं पञ्चहोतारम् । उत्तरतः प्राञ्चꣳ षड्ढोतारम् । उपरिष्टात्प्राञ्चꣳ सप्तहोतारम् । हृदयं यजूꣳषि पत्न्यश्च । यथावकाशं ग्रहान् । यथावकाशं प्रतिग्रहाल्ँलोकंपृणाश्च । सर्वा हास्यैता देवताः प्रीता अभीष्टा भवन्ति ( ५ ) । स देवमग्निं चिनुते, इति ।

चित्तिः स्रुगित्यादिमन्त्रसंघो दशहोता। तन्मन्त्रोपधेयाऽपीष्टका दशहोतेत्युच्यते। दशहोतृरूपामिष्टकां पूर्वस्यां दिश्युदगपवर्गमुपदध्यात्। 'सुवर्णं घर्मम्' इत्यनुवाको हृदयसंज्ञकः। तेनोपधेयमपीष्टकारूपं हृदयमित्युपदध्यात्। 'अग्निर्यजुर्भिः सविता स्तोमैः। इन्द्र उक्थामदैः' इत्याद्यनुवाकोक्तानि मन्त्राणि यजुर्नामकानि। तैरुपधेयमपि यजुरित्युच्यते। ते यजुषी द्वे उपदध्यात्। 'सेनेन्द्रस्य' इत्याद्यनुवाकोक्ताः पत्नीसंज्ञकाः। तन्मन्त्रैरुपधेया अपि पत्न्यः। ते अपि द्वे उपदध्यात्। तदेवं दशहोतृमन्त्रैर्दशेष्टकाः। हृदयमन्त्रेणैका। यजुर्मन्त्राभ्यां द्वे देवपत्नीमन्त्राभ्यां द्वे इत्येतावतीः पूर्वस्यां दिशि यावत्पदमुपदध्यात्। पदमुपधानस्थानं तद्यावत्स्वीकृतं तावत्येव सर्वोपधानमन्तर्भावयेत्। एतच्च सर्वं बोधायनः स्पष्टमुदाजहार। ब्रह्मचित्तस्य प्रसिद्धं क्षेत्रकरणं यथा सावित्रस्यैतावदेव नानाऽत्र लेखा भवन्ति, अथ पुरस्तादुदीचीर्दशेष्टका उपदधाति चित्तिः स्रुक्तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद। चित्तमाज्यं तया देवतयाऽङ्गिरस्वद्ध्रुवा सीदेति दश हृदयेष्टकामुपदधाति। सुवर्णं घर्मं परिवेद वेनमित्यनुद्रुत्य देवैः समानसनि आत्मा जनानामित्यन्तो यजुरिष्टके उपदधात्यग्निर्यजुर्भिस्तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद। सविता स्तोमैस्तया देवतयाऽङ्गिरस्वद्ध्रुवा सीदेत्यथ पत्नीष्टके उपदधाति। सेनेन्द्रस्य तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद। सेना बृहस्पतेस्तया देवतयाऽङ्गिरस्वद्ध्रुवा सीदेत्येवं पुरस्तादुपधाय दक्षिणस्यां दिशि पृथिवी होतेत्यादिभिश्चतुर्होतृमन्त्रैश्चतस्र इष्टका अनन्तरभाविना हृदयमन्त्रेणैका, अनन्तराभ्यां यजुर्भ्यां पत्नीभ्यां च द्वे द्वे इत्येवं प्रागपवर्गमुपदध्यात्। प्रतीच्यां दिश्यग्निर्होतेत्यादिचतुर्भिर्मन्त्रैः पञ्चहोतृसंज्ञकैश्चतस्र इष्टकाः पूर्ववत्तदनन्तरभाविभिर्हृदययजुःपत्नीमन्त्रैश्चेष्टका उदगपवर्गमुपदध्यात्। तदुत्तरस्यां दिशि वाग्घोतेत्यादिभिः षड्ढोतृमन्त्रैः षडिष्टकाः पूर्ववत्तदनन्तरभाविभिर्हृदययजुःपत्नीमन्त्रैस्तत्तदिष्टकाश्च प्रागपवर्गमुपदध्यात्। उपरिष्टादित्यनेन मध्यदेश उपलक्ष्यते। अन्तरिक्षस्योपधानयोग्यताभावात्। अत ऊर्ध्वदिग्बुद्ध्या मध्यदेशे महाहविर्होतेत्यादिभिः सप्तहोतृसंज्ञकैः सप्तेष्टकाः पूर्ववत्तदनन्तरभाविभिर्मन्त्रैर्हृदययजुःपत्नीष्टकाश्च प्रागपवर्गमुपदध्यात्। एतदेव विवक्षित्वा दक्षिणादिचतुर्दिक्शेषत्वेन 'हृदयं यजूꣳषि पत्न्यश्च' इत्याम्नातम्। सर्वेष्वेतेषु होतृमन्त्रानुवाकेष्वन्तिमभागाः 'वाचस्पते विधे नामन्' इत्यादयो ग्रहमन्त्रास्तैरुपधेया इष्टकाविशेषा अपि ग्रहसंज्ञकाः। तान्सर्वान्यथावकाशमुपदध्यात्। 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्'

इत्यनुवाकोक्ताः प्रतिग्रहमन्त्रास्तैरुपधेया इष्टकाविशेषा अपि प्रतिग्रहाः। लोकंपृणेतिमन्त्रोपधेया इष्टका अपि लोकंपृणाः। प्रतिग्रहाँल्लोकंपृणाश्च यथावकाशमुपदध्यात्। एवमुपधाने सत्यस्य यजमानस्य सर्वा अपि तत्तन्मन्त्रोक्ता देवतास्तुष्टा अभीष्टफलप्रदाश्च भवन्ति। ततोऽयं देवैश्च सहितमग्निं चितवान्भवति।

अस्य चयनदेशस्येयत्तां विधत्ते—

रथसंमितश्चेतव्यः। वज्रो वै रथः। वज्रेणैव पाप्मानं भ्रातृव्यꣳ स्तृणुते। पक्षःसंमितश्चेतव्यः। एतावान्वै रथः। यावत्पक्षः। रथसंमितमेव चिनुते, इति।

रथस्य यावद्देशोऽपेक्षितस्तावति देशे चयने सति रथसंमितो रथतुल्योऽग्निर्भवति। रथो हि वज्रस्य तृतीयांशत्वाद्वज्ररूपः। 'रथस्तृतीयम्' इति श्रुतेः। अतः पापरूपं शत्रुं वज्रेणैव हिनस्ति। पक्षःशब्देन रथस्यैकभागवर्ति चक्रमुच्यते। चक्रपरिमिते देशे चेतव्यः। न चैवं सति रथसंमितत्वं विरुध्यते। चक्रं यावदस्ति तावानेव रथस्य मुख्योंऽशः। अतश्चक्रसंमितत्वेन रथसंमित एव भवति।

एतस्य चयनस्य कर्मविशेषयोगेन(ण) फलविशेषं दर्शयति—

इममेव लोकं पशुबन्धेनाभिजयति। अथो अग्निष्टोमेन (६)। अन्तरिक्षमुक्थ्येन। स्वरतिरात्रेण। सर्वाँल्लोकानहीनेन। अथो सत्रेण, इति।

एतच्चयनयुक्तेन पशुबन्धाग्निष्टोमयोरन्यतरेण भूलोकजयः। भूमौ विद्यमाना भोगाः प्राप्यन्ते। चयनयुक्तेनोक्थ्येनान्तरिक्षलोकभोगप्राप्तिः। चयनयुक्तेनातिरात्रेण स्वर्गभोगप्राप्तिः। अहीनसत्रयोरन्यतरेण चयनयुक्तेन सर्वकामप्राप्तिः।

चयनस्य दक्षिणां विधत्ते—

वरो दक्षिणा। वरेणैव वरꣳ स्पृणोति। आत्मा हि वरः, इति।

वरशब्देन गौरभिधीयते। 'गौर्वै वरः' इत्यापस्तम्बेनाभिधानात्। 'सा हि वरः'

इति श्रुतेश्च। एवं सति श्रेष्ठेनैव दक्षिणाद्रव्येण श्रेष्ठं प्रीणयति। श्रेष्ठ आत्मा। सर्वस्य भोग्यस्य तच्छेषत्वात्। ततः स्वात्मानमेव प्रीणयतीत्युक्तं भवति।

पक्षान्तरमाह—

एकविꣳशतिर्दक्षिणा ददाति। एकविꣳशो वा इतः स्वर्गो लोकः। प्र स्वर्गं लोकमाप्नोति (७)। असावादित्य एकविꣳशः। अमुमेवाऽऽदित्यमाप्नोति, इति।

भूर्लोकमारभ्य सत्यलोकान्ताः सप्त लोकाः। ते प्रत्येकमुत्तमाधममध्यमभोगेन त्रिविधाः। तथा सति सत्यलोके योऽयमुत्तमभोगयुक्तश्चरमः स्वर्गः सोऽयमधमभूर्लोकमपेक्ष्यैकविंशतिसंख्यापूरको भवति। अतः संख्यासाम्यात्प्रकृष्टं स्वर्गमाप्नोति। 'द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः' इति श्रुतेः। आदित्यस्यैकविंशत्वात्संख्यासाम्येन तं प्राप्नोति।

पक्षान्तरं विधत्ते—

शतं ददाति। शतायुः पुरुषः शतेन्द्रियः। आयुष्येवेन्द्रिये प्रतितिष्ठति, इति।

यथा गवामेकविंशत्या स्वर्गादित्यप्राप्तिस्तथा गवां शतेनाऽऽयुरिन्द्रिययोः प्रतिष्ठितत्वं भवति।

पक्षान्तरं विधत्ते—

सहस्रं ददाति। सहस्रसंमितः स्वर्गो लोकः। स्वर्गस्य लोकस्याभिजित्यै, इति।

स्वर्गभोग्यद्रव्याणां बहुमूल्यत्वात्स्वर्गस्य सहस्रसंमितत्वम्। अतः सहस्रदानेन स्वर्गाभिजयः। त एते पक्षाः शक्त्यनुसारेण विकल्पिताः।

एवं पक्षान्तरं विधत्ते—

अन्विष्टकं दक्षिणा ददाति। सर्वाणि वयाꣳसि (८)।

सर्वस्याऽऽप्त्यै । सर्वस्यावरुद्ध्यै, इति ।

एकैकामिष्टकामन्वित्यर्थेऽन्विष्टकमितिशब्दः । प्रतीष्टकमेकैका गौर्देया । तासु गोषु सर्वाणि वयांसि संपादनीयानि । वयोविशेषाश्चाऽऽपस्तम्बेन दर्शिताः—"एक-हायनप्रभृत्या पञ्चहायनेभ्यो वयांसि" इति । तच्च सर्वभोगप्राप्त्यै तद्वशीकाराय च भवति ।

इष्टकासंख्यया संख्येयानां गवामलाभे पक्षान्तरद्वयं विधत्ते—

यदि न विन्देत । मन्थानेतावतो दद्यादोद-नान्वा । अश्नुते तं कामम् । यस्मै कामा-याग्निश्चीयते, इति ।

यदि दरिद्रो गावस्तावतीर्न लभेत तदा यावत्य इष्टका एतावतो मन्थानोद-नान्वा दद्यात् । क्षीरादौ द्रवद्रव्ये सक्तुपिष्टमिश्रेण निष्पन्नो मन्थः । एतद्दानेना-पेक्षितं कामं प्राप्नोति ।

वैकल्पिकीं दक्षिणां विधाय नियतां विधत्ते—

पष्ठौहीं त्वन्तर्वतीं दद्यात् । सा हि सर्वाणि वयाꣳसि । सर्वस्याऽऽप्त्यै । सर्वस्यावरुद्ध्यै (९), इति ।

तुशब्दो विकल्पनिवृत्त्यर्थः । चतुर्वर्षा गौः पष्ठौही । सा चान्तर्वती गर्भिणी । तस्यां दत्तायां सर्वाणि वयांसि दत्तानि भवन्ति । एकहायनादीनां तत्र संभवात् । तच्च सर्वस्य भोगस्य प्राप्त्यै वशीकाराय च भवति ।

द्रव्यान्तरं विधत्ते—

हिरण्यं ददाति । हिरण्यज्योतिरेव स्वर्गं लोक-मेति, इति ।

हिरण्यसदृशं ज्योतिर्यस्यासौ हिरण्यज्योतिः । तादृशो भूत्वा स्वर्गं प्राप्नोति ।

द्रव्यान्तरं विधत्ते—

वासो ददाति । तेनाऽऽयुः प्रतिरते, इति ।

वाससो दीर्घत्वादायुर्वृद्धिहेतुत्वम् । यदुक्तं बोधायनेन—“ वेदिं विमिमीते वेदितृतीये यजेतेति विज्ञायते । तस्याः सौमिकं मानमेतावदेव नानासौमिकात्प्रक्रमात्तृतीयांशः स प्रक्रमः स्यात्तेन वेदिं विमिमीते ” इति ।

तदेतद्विधत्ते—

वेदितृतीये यजेत । त्रिषत्या हि देवाः । स सत्यमग्निं चिनुते, इति ।

सौमिकवेद्यास्तृतीयेंऽशे चयनं कृत्वा तत्र यजेत । अंशत्रये त्रिसंख्या विद्यते । तया च संख्यया सत्यमेतदिति देवा विश्वसन्ति । अत एव तत्र तत्राऽऽम्नायते—“ त्रिराह । त्रिषत्या हि देवा इति । त्रिर्ह्वयति । त्रिषत्या हि देवाः ” इति । तस्मात्तृतीयभागेन सत्यसहितोऽग्निश्चितो भवति । अग्नौ न किंचिदप्यनृतं वैकल्यं भवतीत्यर्थः ।

पूर्वत्रेममेव लोकं पशुबन्धेनेत्यादिना पशुबन्धाग्निष्टोमादावेतच्चयनमभ्युपगतम् । तत्र पशुबन्धपक्ष एव वेदितृतीयत्वविधानं व्यवस्थापयन्ति—

तदेतत्पशुबन्धे ब्राह्मणं ब्रूयात् । नेतरेषु यज्ञेषु, इति ।

तदेतद्ब्राह्मणं वेदितृतीयत्वविधिवाक्यं पशुबन्धादितरेष्वग्निष्टोमादिषु न ब्रूयात् । यज्ञसभायामागतेभ्यो विद्वद्भ्यो दक्षिणां विधत्ते—

यो ह वै चतुर्होतॄननुसवनं तर्पयितव्यान्वेद (१०)। तृप्यति प्रजया पशुभिः । उपैनꣳ सोमपीथो नमति । एते वै चतुर्होतारोऽनुसवनं तर्पयितव्याः । ये ब्राह्मणा बहुविदः । तेभ्यो यद्दक्षिणा न नयेत् । दुरिष्टꣳ स्यात् । अग्निमस्य वृञ्जीरन् । तेभ्यो यथाश्रद्धं दद्यात् । स्विष्टमेवैतत्क्रियते । नास्याग्निं वृञ्जते ( ११ ), इति ।

चतुर्होतृमन्त्राणामभिमानिनो देवाः प्रातःसवनादिषु प्रतिसवनं तृप्तिं प्रापणीया इति यो वेद स प्रजया पशुभिश्च तृप्यति सोमपानफलमप्येनमुपनमति । के चतुर्होतृदेवा इति तदुच्यते । साभायामुपविष्टा बहुविदो वेदशास्त्राभिज्ञा ब्राह्मणा एव ते चतुर्होतृदेवाः । तेभ्यो दक्षिणाया अदानेऽनुष्ठितं पशुबन्धाग्निष्टोमादिकर्म दुरिष्टं स्यात् । अस्य यजमानस्यैतं चितमग्निमपि ते विनाशयेयुः । तस्मात्स्वकीयश्रद्धानुसारेण दक्षिणायां दत्तायां दोषद्वयं न भवति ।

इष्टकानामुपादानद्रव्यं विधत्ते–

हिरण्येष्टको भवति । यावदुत्तममङ्गुलिकाण्डं यज्ञपरुषा संमितम् । तेजो हिरण्यम्, इति ।

हिरण्येन निर्मिता इष्टका यस्याग्नेः सोऽयं हिरण्येष्टकः । त्रिष्वङ्गुलिपर्वसूत्तममग्रमङ्गुलिपर्व यावद्भवति तावदिष्टकायाः परिमाणम् । तच्च यज्ञपुरुषस्य पर्वणा सदृशं भवति । हिरण्यं च तेजोरूपत्वात्प्रशस्तम् ।

तस्य हिरण्यस्यालाभे घृतेनाक्ताः शर्करा विधत्ते–

यदि हिरण्यं न विन्देत् । शर्करा अक्ता उपदध्यात् । तेजो घृतम् । सतेजसमेवाग्निं चिनुते, इति ।

घृतस्य तेजोरूपत्वात्तेनाक्तानां शर्कराणामुपधाने चितोऽग्निः सतेजा भवति ।

अथ विकल्पितं चयनाङ्गं विधत्ते–

अग्निं चित्वा सौत्रामण्या यजेत मैत्रावरुण्या वा । वीर्येण वा एष व्यृध्यते । योऽग्निं चिनुते । यावदेव वीर्यम् । तदस्मिन्दधाति, इति ।

सौत्रामणी संहितायां 'स्वाद्वीं त्वा' इत्यनुवाकेन ब्राह्मणे त्विन्द्रस्य सुषुवाणस्य यत्रिपु यूपेष्वित्यनुवाकाभ्यां च विहिता । सेयमत्र चयनादूर्ध्वमङ्गत्वेनानुष्ठेया । यद्वा मैत्रावरुण्यामिक्षा वा तदङ्गत्वेनानुष्ठेया । तदनुष्ठानेन यद्वीर्यं चयनेन विनष्टं तत्पुनः संपादितं भवति ।

चातुर्होत्रचयनतद्वेदनयोः फलं दर्शयति–

ब्रह्मणः सायुज्यꣳ सलोकतामाप्नोति । एता-

सामेव देवतानाꣳ सायुज्यम् । सार्ष्टिताꣳ समानलोकतामाप्नोति। य एतमग्निं चिनुते। य उ चैनमेवं वेद, इति।

'ब्रह्म वै चतुर्होतारः' इति चतुर्होतृमन्त्राणां ब्रह्मत्वाभिधानात्, तदीयचयनेन ब्रह्मणश्चतुर्मुखस्य सायुज्यं तादात्म्यं सलोकतामेकलोकनिवासं वा प्राप्नोति। तथैतासां तत्तन्मन्त्रोक्तानां तत्तदभिमानिनीनां देवतानां तादात्म्यं समानैश्वर्यं समानलोकतां वा प्राप्नोति। अत्र श्रद्धादितारतम्येन फलस्य विविधत्वम्।

चातुर्होत्रचयनस्याङ्गविधायकं ब्राह्मणं सावित्रनाचिकेतयोरतिदिशति—

एतदेव सावित्रे ब्राह्मणम्। अथो नाचिकेते, (१२) इति।

होता चतुर्होतॄणाꣳ स्तुतिश्चकार वा भवन्त्यग्निष्टोमेनाऽऽप्नोति वयाꣳसि वयाꣳसि सर्वस्याऽऽप्त्यै सर्वस्यावरुद्ध्यै वेद वृङ्क्ते चिनुते नवं च।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके द्वादशाध्याये पञ्चमोऽनुवाकः॥ ५॥

---

अत्र मीमांसा। प्रथमाध्यायस्य चतुर्थपादे चिन्तितम्—

"शर्करा उपधत्तेऽक्तास्तेजो वै घृतमत्र किम्।
तैलादिनाऽञ्जिता अक्ता घृतेनैवाथवाऽञ्जनम्॥
तैलादिनाऽपि मुख्यत्वादसंजातविरोधनात्।
अप्राप्तार्थत्वतश्चास्य विधेर्वादाद्बलित्वतः॥
सामान्यमननुष्ठेयं विशेषस्तु विधौ न हि।
घृतेनैवाञ्जनं वाक्यशेषात्संदिग्धनिर्णयात्॥
अर्थवादगता चेयं स्तुतिर्घृतमुपेयुषी।
बोधयन्ती विधेयत्वं घृतस्य गमयेद्विधिम्॥"

'अक्ताः शर्करा उपदधाति' 'तेजो वै घृतम्' इति श्रूयते। मृत्तिकामिश्राः क्षुद्रपाषाणाः शर्कराः। ताश्च घृततैलवसादीनामन्यतमेन द्रव्येणाञ्जनीयाः। कुतः—अञ्जनसाधनसामान्यबोधकस्य विधिवाक्यस्य घृतविशेषस्य बोधकादर्थवादात्प्रबलत्वात्। तत्प्राबल्ये च मुख्यत्वादयस्त्रयो हेतवः। स्वार्थतया विधेर्मु-

ख्यत्वम् । प्रथमश्रुतत्वाच्चासंजातविरोधित्वम् । अनधिगतार्थबोधकत्वादप्राप्तार्थत्वम् । अर्थवादस्तु विधिस्तावकत्वादमुख्यः । चरमश्रुतत्वात्संजातविरोधी । ज्ञातार्थानुवादित्वात्प्राप्तार्थः । तस्माद्येन केनाप्यञ्जनमिति प्राप्ते ब्रूमः—विधिवाक्येन किमञ्जनसाधनसामान्यं विधीयते तद्विशेषो वा । नाऽऽद्यः । सामान्यस्याननुष्ठेयत्वात् । न द्वितीयः । अक्ताः शर्करा इत्यत्र घृततैलादिविशेषवाचकशब्दाभावात् । तत उक्तरीत्या प्रबलमपि विधिवाक्यमनुष्ठानयोग्यविशेषे संदेहजनकतया निर्णयहेतुमर्थवादमपेक्षते नतु तेन सह विरुध्यते । अर्थवादेऽपि घृतस्य विधिर्नास्ति, इति चेत् । न । विधेरुन्नेयत्वात् । 'तेजो वै घृतम्' इत्येवं तेजस्त्वेन घृतस्य स्तूयमानत्वाद्विधेयत्वं गम्यते । 'यत्स्तूयते तद्विधीयते' इति न्यायात् । तेन च विधेयत्वेन विधायकः शब्दः कल्प्यते 'घृतेनाक्ताः' इति । तस्माद्घृतेनैवाञ्जनम् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे द्वादशप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

अथ षष्ठोऽनुवाकः ।

---

पञ्चमे चातुर्होत्रचयनमभिहितम् । उत्तरेषु चतुर्ष्वनुवाकेषु वैश्वसृजचयनमभिधीयते । तच्च बोधायनेन स्पष्टमभिहितम्—'अथ वैश्वसृजस्तस्य प्रसिद्धं क्षेत्रकरणं यथा सावित्रस्यैतावदेव नाना तिस्रो लेखा भवन्ति । अथान्तिमायां लेखायामुपदधाति यच्चामृतं यच्च मर्त्यमित्यष्टादश' इति । त एते मन्त्राः षष्ठानुवाकेऽभिधीयन्ते । तत्र प्रथमं मन्त्रमाह—

यच्चामृतं यच्च मर्त्यम् । यच्च प्राणिति यच्च
न । सर्वास्ता इष्टकाः कृत्वा । उप कामदुघां
दधे । तेनर्षिणा तेन ब्रह्मणा । तया देवतयाऽ-
ङ्गिरस्वद्ध्रुवा सीद, इति ।

लोके यदमृतं विनाशरहितं वस्तु यच्च मर्त्यं विनश्वरं यच्च श्वासोपेतं जंगमं यदपि श्वासरहितं स्थावरं ता अमृतादिरूपाः सर्वा अपि कामदुघाः स्वापेक्षितफलस्य दोहयित्रीरिष्टकाः कृत्वेह क्षेत्रेऽहमुपदधे । हे, इष्टके त्वं तेनर्षिणा मन्त्र-

दर्शिना तेन च ब्रह्मणा मन्त्रेण तया त्वदभिमानिन्या देवतयाऽङ्गिरस्वदङ्गिरोभिरिवोपहिता सती स्थिरोपविश ।

अथ द्वितीयमन्त्रमाह—

सर्वाः स्त्रियः सर्वान्पुꣳसः । सर्वं
न स्त्रीपुमं च यत् । सर्वास्ताः, इति ।

न स्त्रीपुमं स्त्रीपुरुषविलक्षणं नपुंसकम् । व्यक्तित्रयरूपास्ताः सर्वा इष्टकाः कृत्वेत्यादिकमनुषज्यते । एवमुत्तरत्रापि द्रष्टव्यम् ।

अथ तृतीयमाह—

यावन्तः पाꣳसवो भूमेः (१) ।
संख्याता देवमायया । सर्वास्ताः, इति ।

पांसवः परमाणवः । ते च मनुष्यादिभिः संख्यातुमशक्यत्वाद्देवमायया परमेश्वरशक्त्या दुर्घटकारिण्या संख्याता यावन्तो भवन्ति ताः सर्वा इत्यादि पूर्ववत् ।

अथ चतुर्थमाह—

यावन्त ऊषाः पशूनाम् ।
पृथिव्यां पुष्टिर्हिताः । सर्वास्ताः, इति ।

पशूनां गवादीनां पुष्टिकारित्वेन पुष्टिरूपाः । पृथिव्यां हिता अवस्थिताः । ऊषाः क्षारमृद्विशेषा यावन्तः सन्ति ताः सर्वा इत्यादि ।

अथ पञ्चममाह—

यावतीः सिकताः सर्वाः । अप्स्वन्तश्च याः श्रिताः । सर्वास्ताः, इति ।

जलमध्ये भूम्यां वाऽवस्थिताः सिकताः ।

अथ षष्ठमाह—

यावतीः शर्करा धृत्यै । अस्यां
पृथिव्यामधि (२) । सर्वास्ताः, इति ।

दार्ढ्यार्थं पृथिव्यामुपर्यवस्थिताः शर्कराः क्षुद्रपाषाणाः ।

अथ सप्तममाह—

यावन्तोऽश्मानोऽस्यां पृथिव्याम् ।
प्रतिष्ठासु प्रतिष्ठिताः । सर्वास्ताः, इति ।

भूमेरुपरि प्रतिष्ठासु दृढस्थलीष्ववस्थिता अश्मानः प्रौढाः पाषाणाः ।

अथाष्टममाह—

यावतीर्वीरुधः सर्वाः । विष्ठिताः
पृथिवीमनु । सर्वास्ताः, इति ।

पृथिवीमनु प्राप्य तत्र तत्र विशेषेणावस्थिता वीरुधो वल्ल्यः ।

अथ नवममाह—

यावतीरोषधीः सर्वाः । विष्ठिताः
पृथिवीमनु । सर्वास्ताः (३), इति ।

ओषधीर्व्रीह्यादयः ।

अथ दशममाह—

यावन्तो वनस्पतयः । अस्यां
पृथिव्यामधि । सर्वास्ताः, इति ।

वनस्पतयोऽश्वत्थपनसादयः ।

अथैकादशमाह—

यावन्तो ग्राम्याः पशवः सर्वे ।
आरण्याश्च ये । सर्वास्ताः, इति ।

गवाश्वादयो ग्राम्याः । उष्ट्रादय आरण्याः ।

अथ द्वादशमाह—

ये द्विपादश्चतुष्पादः । अपाद
उदरसर्पिणः । सर्वास्ताः, इति ।

द्विपादो मनुष्याः पक्षिणश्च । चतुष्पादो गवादयः । पादरहिता उदरेणैव गच्छन्तः सर्पजलूकायः ।

अथ त्रयोदशमाह—

यावदाञ्जनमुच्यते (४) । देवत्रा
यच्च मानुषम् । सर्वास्ताः, इति ।

देवत्रा देवेषु चक्षुषि प्रक्षेपणीयमाञ्जनं यावदुच्यते यदपि मानुषं मनुष्यैः प्रक्षेपणीयम् । त्रिककुत्पर्वतादिजन्यमाञ्जनम् ।

अथ चतुर्दशमाह—

यावत्कृष्णायसꣳ सर्वम् । देवत्रा
यच्च मानुषम् । सर्वास्ताः, इति ।

देवत्रा देवलोके कृष्णवर्णेनायसा निर्मितमायुधादि मानुषं च कुठारादि ।

अथ पञ्चदशमाह—

यावल्लोहायसꣳ सर्वम् । देवत्रा
यच्च मानुषम् । सर्वास्ताः, इति ।

लोहायसं ताम्रजन्यं पात्रम् ।

अथ षोडशमाह—

सर्वꣳ सीसꣳ सर्वं त्रपु देवत्रा यच्च
मानुषम् (५) । सर्वास्ताः, इति ।

सीसं त्रपु च तारतम्येन चैकवर्णं लोहद्वयम् ।

अथ सप्तदशमाह—

सर्वꣳ हिरण्यꣳ रजतम् । देवत्रा
यच्च मानुषम् । सर्वास्ताः, इति ।

हिरण्यं द्विविधं श्वेतं पीतं च तत्र श्वेतं रजतं पीतं सुवर्णम् ।

---

१ क. °न च श्वेतव° ।

अथाष्टादशमाह—

सर्वꣳ सुवर्णꣳ हरितम् । देवत्रा यच्च मानुषम् ।
सर्वास्ता इष्टकाः कृत्वा । उप कामदुघा दधे ।
तेनर्षिणा तेन ब्रह्मणा । तया देवतयाऽङ्गिरस्वद्-
ध्रुवा सीद, इति ।

भूमेरधि विष्ठिताः पृथिवीमनु सर्वास्ता उच्यते मानुषꣳ सीद ।

यच्च स्त्रियः पाꣳसव ऊषाः सिकताः शर्करा अश्मानो वीरुध ओषधीर्वन-स्पतयो ग्राम्या ये द्विपादो यावदाञ्जनं कृष्णायसं लोहायसꣳ सीसꣳ हिरण्यꣳ-सुवर्णꣳ हरितमष्टादश ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके द्वादशाध्याये षष्ठोऽनुवाकः ॥ ६ ॥

---

हरितं पीतं हिरण्यम् । अत एव मनोहरत्वात्सुवर्णम् । तच्च देवलोकगतं मनुष्यलोकगतं च यद्यदस्ति ताः सर्वाः कामदुधाः कृत्वोपदधे । सर्वत्रानुषङ्गद्यो-तनार्थं पुनः पाठः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरी-यब्राह्मणभाष्ये तृतीयकाण्डे द्वादशप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

अथ सप्तमोऽनुवाकः ।

---

षष्ठे तिसृषु लेखासूत्तमलेखायामुपधानार्था मन्त्रा उक्ताः । मध्यमलेखायामु-पधानार्था मन्त्राः सप्तमेऽभिधीयन्ते। यदुक्तं बोधायनेन—"अथाभ्यन्तरायां लेखा-यामुपदधाति—सर्वा दिशो दिक्ष्विति । पञ्चदश" इति । तत्र प्रथममन्त्रमाह—

सर्वा दिशो दिक्षु । यच्चान्तर्भूतं प्रतिष्ठितम् ।
सर्वास्ता इष्टकाः कृत्वा । उप कामदुघा

दधे । तेनर्षिणा तेन ब्रह्मणा । तया देवत-
याऽङ्गिरस्वद्ध्रुवा सीद, इति ।

याः प्राच्यादिदिशः सन्ति यच्च तासु दिक्ष्वन्तर्भूतं पर्वतादिकं स्थैर्येणाव-
स्थितम् । सर्वास्ता इष्टका इत्यादि पूर्ववत् ।

अथ द्वितीयमाह—

अन्तरिक्षं च केवलम् । यच्चास्मि-
न्नन्तराहितम् । सर्वास्ताः, इति ।

यदन्तरिक्षं केवलमवकाशरूपं यच्चास्मिन्नन्तरिक्षे मध्ये स्थितं विमानादि-
कम् । सर्वास्ता इत्यादि पूर्ववत् ।

अथ तृतीयमाह—

आन्तरिक्ष्यश्च याः प्रजाः (१) ।
गन्धर्वाप्सरसश्च ये । सर्वास्ताः, इति ।

अन्तरिक्षेऽवस्थिता आन्तरिक्ष्यस्तासु प्रजासु मुख्या गन्धर्वाप्सरसः ।

अथ चतुर्थमाह—

सर्वानुदारान्त्सलिलान् । अन्तरिक्षे
प्रतिष्ठितान् । सर्वास्ता, इति ।

उदारानतिबहुलान्सलिलाञ्जलभेदानन्तरिक्षे प्रतिष्ठितान्मेघमध्येऽवास्थितान् ।

अथ पञ्चममाह—

सर्वानुदारान्त्सलिलान् । स्थावराः
प्रोष्याश्च ये । सर्वास्ताः, इति ।

वृष्टिरूपा बहुला जलविशेषा अत्रोच्यन्ते । स्थावराः स्थिरत्वेन वृक्षाग्र-
बिन्द्वादिरूपेणावस्थिता आपः । प्रोष्या वायुना चलन्त्य आपः ।

अथ षष्ठमाह—

सर्वां धुनिꣳ सर्वान्ध्वꣳसान् । हिमो

यच्च शीयते (२)। सर्वास्ताः, इति।

धुनिरत्राऽऽकाशगङ्गा। ध्वंसा वाय्वादिकृता जलशोषाः। हिमवत्पर्वतादिषु हिमशब्दवाच्यो जलघनः शीयतेऽधः पतति।

अथ सप्तममाह—

सर्वान्मरीचीन्वितताम्। नीहारो
यच्च शीयते। सर्वास्ताः, इति।

अन्तरिक्षसंचारिणः सूर्यरश्मयो मरीचयः। घनीभावरहितो जलपरमाणुसमूहोऽधःपतन्नीहारः।

अथाष्टममाह—

सर्वा विद्युतः सर्वान्स्तनयित्नून्।
ह्रादुनीर्यच्च शीयते। सर्वास्ताः, इति।

विद्युतश्चञ्चलप्रभाः। स्तनयित्नवो मेघाः। ह्रादुन्यो गर्जनानि। यदपि शीयतेऽशन्यादिरूपेणाधः पतति।

अथ नवममाह—

सर्वाः स्रवन्तीः सरितः। सर्वमप्सु-
चरं च यत्। सर्वास्ताः (३), इति।

स्रवन्तीः सरितो गोदावर्यादयः। अप्सुचरं मत्स्यादिकम्।

अथ दशममाह—

याश्च कूप्या याश्च नाद्याः समुद्रियाः। याश्च
वैशन्तीरुत प्रासचीर्याः। सर्वास्ताः, इति।

कूपे नद्यां समुद्रे वैशन्ते चावस्थिता आपः कूप्याद्याः। प्रासचीः प्रकर्षेण समन्तादन्योन्यं समवेता आपः।

अथैकादशमाह—

ये चोत्तिष्ठन्ति जीमूताः। याश्च
वर्षन्ति वृष्टयः। सर्वास्ताः, इति।

जीमूता मेघा उत्तिष्ठन्त्यूर्ध्वं घनीभूतास्तिष्ठन्ति । वृष्टयो वर्षन्ति भूमौ पतन्ति ।

अथ द्वादशमाह—

तपस्तेज आकाशम् । यच्चाऽऽकाशे
प्रतिष्ठितम् । सर्वास्ताः, इति ।

तपः संतापः । तेजः प्रकाशः । आकाशमवकाशः । यदप्यन्यदन्धकारादिकमाकाशे प्रतिष्ठितम् ।

अथ त्रयोदशमाह—

वायुं वयाꣳसि सर्वाणि (४) । अन्तरिक्षचरं च यत् । सर्वास्ताः, इति ।

यो वायुर्ये च सर्वे पक्षिणो यच्चान्यद्यक्षराक्षसादिकमन्तरिक्षचरम् ।

अथ चतुर्दशमाह—

अग्निꣳ सूर्यं चन्द्रम् । मित्रं वरुणं भगम् ।
सर्वास्ताः, इति ।

अग्न्यादयो देवताविशेषाः ।

अथ पञ्चदशमाह—

सत्यꣳ श्रद्धां तपो दमम् । नाम रूपं च
भूतानाम् । सर्वास्ता इष्टकाः कृत्वा । उप-
कामदुघां दधे । तेनर्षिणा तेन ब्रह्मणा ।
तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद (५), इति ।

प्रजा हिमो यच्च शीयते सर्वास्ताः सर्वाणि ब्रह्मणैकं च ।

दिशोऽन्तरिक्षमान्तरिक्ष्य उदारानुदारान्धुनिं मरीचीन्विद्युतः स्रवन्तीर्याश्च ये चोत्तिष्ठन्ति तपो वायुमग्निꣳ सत्यं पञ्चदश ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके द्वादशाध्याये सप्तमोऽनुवाकः ॥ ७ ॥

भूतानां प्राणिनां संबन्धीनि सत्यवचनादीनि ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीय-ब्राह्मणभाष्ये तृतीयकाण्डे द्वादशप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

अथाष्टमोऽनुवाकः ।

---

सप्तमे मध्यमलेखायामुपधानमन्त्रा उक्ताः । तदभ्यन्तरलेखायामुपधानमन्त्रा अष्टमेऽभिधीयन्ते । यदुक्तं बोधायनेन—"अथाभ्यन्तरलेखायामुपदधाति सर्वान्दिवꣳ सर्वान्देवान्दिवीति नव" इति । तत्र प्रथमं मन्त्रमाह—

सर्वान्दिवꣳ सर्वान्देवान्दिवि । यच्चान्तर्भूतं
प्रतिष्ठितम् । सर्वास्ता इष्टकाः कृत्वा । उप-
कामदुघां दधे । तेनर्षिणा तेन ब्रह्मणा ।
तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद, इति ।

कृत्स्नमपि द्युलोकं तस्मिन्नवस्थितान्सर्वानपि देवानन्यदपि तस्य लोकस्यान्तर्विद्यमानं स्थिरत्वेन स्थितं सर्वास्ता इष्टकाः कृत्वेति पूर्ववत् ।

अथ द्वितीयमाह—

यावतीस्तारकाः सर्वाः । वितता
रोचने दिवि । सर्वास्ताः, इति ।

दिवि द्युलोके रोचने प्रकाशमाने तत्तन्मण्डले यावत्यस्तारका विततः सन्ति ।

अथ तृतीयमाह—

ऋचो यजूꣳषि सामानि ( १ ) ।
अथर्वाङ्गिरसश्च ये । सर्वास्ताः, इति ।

अथर्वणाऽङ्गिरसा च महर्षिणा दृष्टा मन्त्राश्चतुर्थवेदे समाम्नाता अथर्वाङ्गिरसः ।

अथ चतुर्थमाह—

इतिहासपुराणं च । सर्पदेवजनाश्च ये । सर्वास्ताः, इति ।

इतिहासो भारतादिः । पुराणं ब्राह्मपाद्मेत्यादि । सर्पेष्वेव देवाकारा मनुष्याकाराश्च सर्पदेवजनाः ।

अथ पञ्चममाह—

ये च लोका ये चालोकाः । अन्त-
र्भूतं प्रतिष्ठितम् । सर्वास्ताः, इति ।

लोकाः प्राणिनिवासस्थानविशेषा भूरादयो लोकाः । अलोकाः प्राणिनिवासरहिता लोकालोकपर्वताद्बहिर्देशाः । यदपि लोकेष्वन्तर्विद्यमानं स्थैर्येणावस्थितम् ।

अथ षष्ठमाह—

यच्च ब्रह्म यच्चाब्रह्म । अन्तर्ब्रह्मन्प्रति-
ष्ठितम् (२) । सर्वास्ताः, इति ।

ब्रह्म वेदः । अब्रह्म पौरुषेयग्रन्थाः । अन्तर्ब्रह्मन्वेदमध्ये प्रतिष्ठितं कर्म ज्ञानं च ।

अथ सप्तममाह—

अहोरात्राणि सर्वाणि । अर्धमासाꣳश्च
केवलान् । सर्वास्ताः, इति ।

मासरूपेण संघीभूता न भवन्ति किंतु शुक्लकृष्णपक्षरूपेण विश्लेषाकारा ये ते केवला अर्धमासाः ।

अथाष्टममाह—

सर्वानृतून्सर्वान्मासान् । संवत्सरं च केवलम् ।
सर्वास्ताः, इति ।

युगरूपेण संघीभावमप्राप्य प्रभवविभवादिविश्लिष्टाकारेणैव विवक्षितः केवलः संवत्सरः ।

अथ नवममाह—

सर्वं भूतꣳ सर्वं भव्यम् । यच्चातोऽधिभावि-

ष्यति । सर्वास्ता इष्टकाः कृत्वा । उप कामदुघां दधे । तेनर्षिणा तेन ब्रह्मणा । तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद (३), इति ।

सामानि ब्रह्मन्प्रतिष्ठितं कृत्वा त्रीणि च ।

दिवं तारका ऋचं इतिहासपुराणं च ये च यच्चाहोरात्राण्यृतून्भूतं नव ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके द्वादशाध्यायेऽष्टमोऽनुवाकः ॥ ८ ॥

---

भूतमतीतं, भव्यं वर्तमानम् । अत उभयस्मादप्युपरि यद्भविष्यति त्रिविधकालवर्तिजगद्रूपास्ताः सर्वाः कामदुघा इष्टकाः कृत्वोपदधे । हे इष्टके तेनर्षिणा मन्त्रदर्शिना तेन ब्रह्मणा मन्त्रेण तथा त्वदभिमानिन्या देवतयोपहिता त्वमङ्गिरोभिरुपहितेव निश्चलाऽत्र तिष्ठ ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे द्वादशप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

अथ नवमोऽनुवाकः ।

---

अभ्यन्तरलेखायामुपधानार्था मन्त्रा अष्टमेऽभिहिताः । नवमे ब्रह्मणा पठनीया मन्त्रा उच्यन्ते । यदुक्तं बोधायनेन—“ दक्षिणाकाले ब्रह्मा सदस्यासीनो वैश्वसृजं व्याचष्टे । ऋचां प्राची महती दिगुच्यत इति ऋक्षु पच्छोऽर्धर्चशो ब्राह्मणे वाग्यशस्तस्मा अध्वर्युः प्रतिगृणात्यों ब्रह्मन्नृतं ब्रह्मन्सत्यं ब्रह्मन् ” इति ।

तत्र प्रथमं मन्त्रमाह—

ऋचां प्राची महती दिगुच्यते । दक्षिणामाहुर्यजुषामपाराम् । अथर्वणामङ्गिरसां प्रतीची । साम्नामुदीची महती दिगुच्यते, इति ।

ऋगभिमानिदेवतानां प्राची दिक्प्रियेत्यभिज्ञैरुच्यते। अत एव सा दिङ्म-हती। यजुरभिमानिदेवतानां दक्षिणा दिक्प्रिया। सा च पाररहिताऽतिविस्तीर्णा। अथर्वाङ्गिरोनामकद्विविधमन्त्राभिमानिदेवतानां प्रतीची दिक्प्रिया। सामाभिमा-निदेवतानामुदीची दिक्प्रिया, सा च महती गुणैरप्यधिका। एताश्चतुर्वेदाभिमा-निदेवता आदित्यस्य प्राच्यादिदिक्ष्ववस्थाय सेवन्ते। एतच्छन्दोगाः—"असौ वा आदित्यो देवो मधु" इत्यस्यां मधुविद्यायां बहुप्रपञ्चेनाऽऽमनन्ति।

अथ द्वितीयमाह—

ऋग्भिः पूर्वाह्णे दिवि देव ईयते। यजुर्वेदे तिष्ठति मध्ये अह्नः। सामवेदेनास्तमये महीयते। वेदैरशून्यस्त्रिभिरेति सूर्यः, इति।

दिवि वर्तमान आदित्यो देवः पूर्वाह्णे काल ऋग्देवताभिः सह गच्छति। अह्नो मध्यमे भागे यजुर्वेददेवतायाः समीपेऽवतिष्ठते। अस्तमयकाले सामवेद-देवतया पूज्यते। तदेवं त्रिभिर्वेदैरभियुक्तः सूर्यः सर्वदा गच्छति।

अथ तृतीयमाह—

ऋग्भ्यो जाता सर्वशो मूर्तिमाहुः। सर्वा गतिर्याजुषी हैव शश्वत् (१)। सर्वं तेजः सामरूप्यं ह शश्वत्। सर्वं हेदं ब्रह्मणा हैव सृष्टम्, इति।

या या मूर्तिरस्त्यादित्यस्य वा देवतान्तरस्य वा तां सर्वामप्यभिज्ञा ऋग्भिः समुत्पन्नामाहुः। या या गतिर्देवानां विद्यते सा शश्वत्सर्वदैव याजुषी हैव यजु-षैव संपादिता। यद्यत्तेजो देवेषु विद्यते तत्सर्वं शश्वत्सर्वदा सामरूप्यं ह साम्नैव निरूपणीयम्। तदेवं सर्वमपीदं देवव्यहारजातं ब्रह्मणा हैव देवेनैव सृष्टम्।

अथ चतुर्थमाह—

ऋग्भ्यो जातं वैश्यं वर्णमाहुः। यजुर्वेदं क्ष-

---

१ क. ख. °रविमुक्तः।

त्रियस्याऽऽहुर्योनिम्। सामवेदो ब्राह्मणानां
प्रसूतिः। पूर्वे पूर्वेभ्यो वच एतदूचुः, इति।

यथा देवव्यवहारस्य सर्वस्य हि वेदत्रयमेव कारणम्, एवं मनुष्यव्यवहारस्यापीत्येतद्वचः पूर्वे सृष्ट्यादावुत्पन्ना महर्षयः पूर्वेभ्यस्तदानींतनेभ्यः स्वशिष्येभ्य ऊचुः।

अथ पञ्चममाह—

आदर्शमग्निं चिन्वानाः। पूर्वे विश्वसृजोऽ-
मृताः। शतं वर्षसहस्राणि। दीक्षिताः सत्र-
मासत (२), इति।

सर्वतो दर्शनीयं महाग्निं चिन्वानाः पूर्वकल्पवर्तिनो वर्तमानस्य विश्वस्य स्रष्टारोऽमृता देवा दीक्षिताः सन्तो लक्षसंख्याकान्संवत्सरान्सत्रमन्वतिष्ठन्।

अथ षष्ठमाह—

तप आसीद्गृहपतिः। ब्रह्म ब्रह्माऽभवत्स्व-
यम्। सत्यꣳ ह होतैषामासीत्। यद्विश्वसृज
आसत, इति।

तपआदिशब्दास्तदभिमानिदेवतावाचकाः। तस्मिन्विश्वसृजां सत्रे तपो गृहपतिर्यजमानेषु मुख्य आसीत्। ब्रह्म मन्त्रजातं ब्रह्माख्य ऋत्विगासीत्। यत्सत्यवदनं विश्वसृजोऽनुष्ठितवन्तस्तदेव सत्यमेषां विश्वसृजां होत्राख्य ऋत्विगासीत्।

अथ सप्तममाह—

अमृतमेभ्य उदगायत्। सहस्रं परिवत्सरान्।
भूतꣳ ह प्रस्तोतैषामासीत्। भविष्यत्प्रति चा-
हरत्, इति।

यदेतदमृतं देवैः पेयं पीयूषं तदेतदेभ्यो विश्वसृड्भ्यः सहस्रसंख्याकान्परिवत्सरानुद्गाता भूत्वौद्गात्रमकरोत्। यद्भूतमतीतकालस्वरूपं तदेषां विश्वसृजां

प्रस्तोत्राख्य ऋत्विगासीत् । यत्तु भविष्यत्कालरूपं तत्प्रतिहर्ता भूत्वा प्रतिहरणाख्यसामांशगानरूपं कर्माकरोत् ।

अथाष्टममाह—

प्राणो अध्वर्युरभवत् । इद॑ सर्व॑ सिषासताम् ( ३ ) । अपानो विद्वानावृतः । प्रतिप्रातिष्ठदध्वरे, इति ।

इदं सर्वं कृत्स्नमेतत्सत्रं सिषासतामन्तपर्यन्तं कर्तुमिच्छतां विश्वसृजां प्राणो वायुरेवाध्वर्युरभवत् । योऽयमपानवायुर्विद्वान्प्रयोगाभिज्ञः सोऽयमावृतः साकल्येनाऽऽर्त्विज्यार्थं वृतः सन्नध्वरे सोमयागे स्वयं प्रतिप्रस्थाता भूत्वा प्रतिप्रातिष्ठत्प्रतिप्रस्थातृकर्माकरोत् ।

अथ नवममाह—

आर्तवा उपगातारः । सदस्या ऋतवोऽभवन् । अर्धमासाश्च मासाश्च । चमसाध्वर्यवोऽभवन् , इति ।

आर्तवास्तत्तदृतुयोग्याः पदार्था उपगातारोऽभवन् । सामगेषु गायत्सु तदुत्साहार्थं हो, इति शब्दमुच्चारयन्त उपगातारः । ये तु वसन्तादय ऋतवस्ते सदस्या यज्ञसदस्यवस्थिता बहुविधा ब्राह्मणाः कर्मोपदेष्टारोऽभवन् । चतुर्विंशतिरर्धमासा द्वादश मासाश्चमसैर्होतारश्चमसाध्वर्युसंज्ञका अभवन् ।

अथ दशममाह—

अश॑सद्ब्रह्मणस्तेजः । अच्छावाकोऽभवद्यशः । ऋतमेषां प्रशास्ताऽऽसीत् । यद्विश्वसृज आसत ( ४ ), इति ।

विश्वसृजां यत्तेजस्तद्ब्राह्मणाच्छंस्याख्य ऋत्विग्भूत्वा ब्रह्मसंबन्धिशस्त्राण्यशंसत् । विश्वसृजां संबन्धि यद्यशस्तदच्छावाकाख्य ऋत्विगासीत् । विश्वसृजां संबन्धि यदृताख्यं मानसं यथार्थचिन्तनं तदेषामृत्विजां प्रशास्त्राख्य ऋत्विगासीत् ।

अथैकादशमाह—

ऊर्ग्राजानमुद्वहत्। ध्रुवगोपः सहोऽभवत्।
ओजोऽभ्यष्टौद्ग्राव्णः। यद्विश्वसृज आसत, इति।

येयमूर्क् विश्वसृजां संबन्धी रसः, सोऽयं राजानमुदवहत्, आसन्दीरूपेण सोममूर्ध्वं धृतवान्। यदेषां सहो बलं तद्ध्रुवगोपनामको भूत्वा ध्रुवाख्यग्रहस्य रक्षकोऽभवत्। विश्वसृजो यदोजः सामर्थ्यमासत संपादितवन्तस्तदोजो ग्राणस्तदाख्य ऋत्विग्भूत्वाऽभिषवहेतूनां ग्राव्णां स्तुतिमकरोत्।

अथ द्वादशमाह—

अपचितिः पोत्रीयामयजत्। नेष्ट्रीयामयजत्त्विषिः। आग्नीध्राद्विदुषी सत्यम्। श्रद्धा हैवायजत्स्वयम्, इति।

येयं विश्वसृजामपचितिः पूजा सेयं पोत्राख्य ऋत्विग्भूत्वा पोतृसंबन्धिनीं याज्यां पठितवान्। या च विश्वसृजां त्विषिर्दीप्तिः सेयं नेष्ट्राख्य ऋत्विग्भूत्वा नेष्टृसंबन्धिनीं याज्यामपठत्। या विश्वसृजां श्रद्धा सा स्वयमाग्नीध्राख्य ऋत्विग्भूत्वाऽऽग्नीध्राग्निभित्तिभूतायत्सत्यमवश्यानुष्ठेयं कर्म तद्विदुषी सत्ययजधाज्यामपठत्।

अथ त्रयोदशमाह—

इरा पत्नी विश्वसृजाम्। आकूतिरपिनड्ढविः (५)। इध्मँ ह क्षुच्चैभ्य उग्रे। तृष्णा चाऽऽवहतामुभे, इति।

येयमिराऽन्नभूता सेयं विश्वसृजां पत्नी बभूव। येयमाकूतिरेषां संकल्परूपा सेयं हविरपिनड्दासी भूत्वा पेषणमकरोत्। या क्षुत्, या च तृष्णा ते उभे उग्ररूपे सत्यौ, इध्ममावहतां भारेण समानीतवत्यौ।

अथ चतुर्दशमाह—

वागेषाँ सुब्रह्मण्याऽऽसीत्। छन्दोयोगान्वि-

जानती। कल्पतन्त्राणि तन्वानाऽहः।
सꣳस्थाश्च सर्वशः, इति।

येयमेषां विश्वसृजां वाक्सेयं सुब्रह्मण्याख्या देवताऽऽसीत्, तदुपलक्षितः सुब्रह्मण्याख्य ऋत्विगप्यासीत्। कीदृशी सुब्रह्मण्या छन्दोयोगान्विजानती गायत्र्यादिच्छन्दसां संबन्धिविशेषान्विजानती, तथा कल्पतन्त्राणि कल्पेषु प्रोक्तान्प्रयोगविशेषानहः संस्थाश्च, अग्निष्टोमोक्थादिरूपाः सर्वात्मना तन्वाना विस्तारयन्ती।

अथ पञ्चदशमाह—

अहोरात्रे पशुपाल्यौ। मुहूर्ताः प्रेष्या अभवन्। मृत्युस्तदभवद्धाता। शमितोग्रो विशां पतिः (६), इति।

यावेतावहोरात्राख्यौ कालविशेषौ तावत्रापेक्षितानां पशूनां पालकौ संपन्नौ। ये च मुहूर्ताख्याः कालविशेषास्ते नानाविधेषु व्यापारेषु प्रेषणीयाः पुरुषा अभवन्। तत्तस्मिन्सत्रे योऽयं मृत्युः सोऽयं शमिताऽभवत्। कीदृशः शमिता धाता, यथा पशुः शब्दं न करोति तथा तन्मुखं धारयितुं समर्थः। अत एवोग्रः सत्रोपयुक्तानां विशां प्रजानां पतिरमारणेन पालकः।

अथ षोडशमाह—

विश्वसृजः प्रथमाः सत्रमासत। सहस्रसमं प्रसुतेन यन्तः। ततो ह जज्ञे भुवनस्य गोपाः। हिरण्मयः शकुनिर्ब्रह्म नाम, इति।

पूर्वेषु मन्त्रेषु लक्षसंवत्सरसत्रं निरूपितम्। उत्तरेषु मन्त्रेषु सहस्रसंवत्सरसत्रं निरूप्यते। विश्वं सृजन्तीति विश्वसृजस्ते च प्रथमाः सृष्ट्यादावुत्पन्नाः सत्रमनुष्ठितवन्तः। कीदृशं सत्रं सहस्रसमं सहस्रसंख्याकाः समाः संवत्सरा यस्मिन्सत्रे तत्सहस्रसमम्। किं कुर्वन्तः प्रसुतेन यन्तः प्रतिदिनमभिषुतः सोमः प्रसुतस्तेनानुतिष्ठन्तः। ततः संवत्सरसत्रानुष्ठानाच्छकुनिर्जज्ञे ज्ञानशक्तिक्रियाशक्तिरूपद्वयवान्पक्षी समुत्पन्नः। स च भुवनस्य गोपाः सर्वस्य लोकस्य

पालकः, हिरण्मयो ज्योतिर्मयः, ब्रह्मेति तस्य नाम। परब्रह्मैव विश्वसृजामनुष्ठानं पालयितुं हिरण्मयशकुनिरूपं स्वी चकार। तं हिरण्यगर्भ इत्याचक्षते। तथा च मन्त्रान्तरमाम्नायते—"हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्" इति।

अथ सप्तदशमाह—

येन सूर्यस्तपति तेजसेद्धः। पिता पुत्रेण पितृमान्योनियोनौ। नावेदविन्मनुते तं बृहन्तम्। सर्वानुभूमात्मानꣳ संपराये, इति।

येन परब्रह्मरूपेण तेजसा चैतन्येनेद्धः प्रकाशितः सन्सूर्यो लोके तपति। अत एव ज्योतिषां ज्योतिरित्युपनिषद्याम्नायते। किंच येन तेजसेद्धः प्रकाशितः पिता योनियोनौ तत्तज्जन्मनि पुत्रेण युक्तो भवति। पुत्रश्च पितृमान्भवति। सूर्यतापपितृपुत्रादिव्यवहारः सर्वोऽपि परब्रह्माधीन इत्यर्थः। सर्वानुभूतं सर्वस्य जगतः साक्षित्वेन प्रकाशकत्वादनुभवितारं तं बृहन्तं परिपूर्णं परमात्मानं संपराये परलोकगमनवेलायामवेदवित्पुमान्न मनुते न जानाति। तस्य वेदव्यतिरिक्तप्रमाणान्तरागोचरत्वात्।

अथाष्टादशमाह—

एष नित्यो महिमा ब्राह्मणस्य। न कर्मणा वर्धते नो कनीयान् (७)। तस्यैवाऽऽत्मा पदवित्तं विदित्वा। न कर्मणा लिप्यते पापकेन, इति।

ब्राह्मणस्य परब्रह्मरूपस्य यो महिमा 'सत्यं ज्ञानमनन्तं ब्रह्म' इति प्रतिपादितस्वरूपविशेषः। स एष नित्यो विनाशरहितः। तत्कथमिति तदेवोच्यते। ज्योतिष्टोमाश्वमेधादिरूपेण पुण्येन कर्मणा न वर्धते नोत्कृष्टं जन्म प्राप्नोति। महापातकोपपातकरूपेण कर्मणा नो कनीयान्निकृष्टं जन्म न प्राप्नोति। तस्यैव ब्रह्मणः पदवित्स्वरूपज्ञानी तस्यैवाऽऽत्मा भवति। "ब्रह्मविद्ब्रह्मैव भवति" इत्यादिश्रुतिभ्यः। अतस्तं बृहन्तं परमात्मानं वेदमुखाद्विदित्वा पापकेनात्यन्तकुत्सितेन कर्मणा न लिप्यते। पुण्यं पापं चेत्युभयमपि कर्म शरीरप्रदत्वादत्यन्तकुत्सितं तदुभयलेपस्तत्त्वविदो नास्ति। तदेवं विश्वसृजां सहस्रसंवत्सरप्रसङ्गेन परमार्थतत्त्वं निरूपितम्। मन्त्राश्च समाप्ताः।

अथ सहस्रसंवत्सरसत्रस्वरूपप्रतिपादकं ब्राह्मणमुच्यते—

पञ्चंपञ्चाशतंस्त्रिवृतः संवत्सराः। पञ्चंपञ्चाशतः पञ्चदशाः। पञ्चंपञ्चाशतः सप्तदशाः। पञ्चंपञ्चाशतं एकविꣳशाः। विश्वसृजाꣳ सहस्रसंवत्सरम्, इति।

सार्धशतद्वयसंवत्सरः सहस्रचतुर्थांशरूपास्त्रिवृतः कार्याः, त्रिवृत्स्तोमयुक्तेन सोमयागेन तावन्तः संवत्सरा नेतव्याः। सोऽयं सहस्रसंवत्सरत्रयस्यैकोंऽशः। पुनस्तावन्त एव संवत्सराः पञ्चदशस्तोमयुक्तेन सोमयागेन नेतव्याः। सोऽयं द्वितीयोंऽशः। पुनरपि तावन्तः संवत्सराः सप्तदशस्तोमयुक्तेन सोमयागेन नेतव्याः। सोऽयं तृतीयोंऽशः। पुनरपि तावन्तः संवत्सरा एकविंशस्तोमयुक्तेन सोमयागेन नेतव्याः। सोऽयं चतुर्थोंऽशः। तदेतत्सर्वं मिलित्वा विश्वसृजां देवानां सहस्रसंवत्सरसत्रमित्युच्यते।

तस्य सत्रस्य विश्वनिष्पत्तिहेतुत्वं दर्शयति—

एतेन वै विश्वसृज इदं विश्वमसृजन्त। यद्विश्वमसृजन्त। तस्माद्विश्वसृजः, इति।

पुरा विश्वसृजो देवा एतेनैव सत्रेण सत्यसंकल्पाः सन्तो विश्वं सर्वं जगदसृजन्त। यस्मात्सत्यसंकल्पाः सत्यसंकल्पमात्रेणेदं विश्वमसृजन्त तस्मादेते विश्वसृज इत्यभिधीयन्ते।

तदेवं संवत्सरसत्रं प्रशस्य मनुष्यान्प्रति विधत्ते—

विश्वमेनाननु प्रजायते। ब्रह्मणः सायुज्यꣳ सलोकतां यन्ति। एतासामेव देवतानाꣳ सायुज्यम्। सार्ष्टिताꣳ समानलोकतां यन्ति। य एतदुपयन्ति। ये चैनत्प्राहुः। येभ्यश्चैनत्प्राहुः (८), इति।

ये मनुष्या एतत्सहस्रसंवत्सरसत्रमुपयन्त्यनुतिष्ठन्ति । ये चाध्यापका एतद्ग्रन्थजातमाहुः । येभ्यश्च शिष्येभ्य एतद्ग्रन्थजातमाहुः । एताननुष्ठातॄनध्यापकाञ्शिष्यांश्चानुसृत्य विश्वं प्रजायते । तत्रानुष्ठातारः साक्षाद्विश्वस्य कर्तारः । अध्यापकास्तदनुष्ठानद्वारा कर्तारः । शिष्यास्तु प्रथमतस्तदनुष्ठानप्रकारान्तरं विदित्वा तथाऽनुष्ठाय पश्चाद्विश्वस्य कर्तारः । तदेवं साक्षात्परम्परया वा तान्सर्वाननुसृत्य विश्वं प्रजायते । किंच देहपातादूर्ध्वं ब्रह्मणश्चतुर्मुखस्य सायुज्यं तादात्म्यं सलोकतां समानलोकनिवासं वा प्राप्नुवन्ति । किंचैतासामेवाऽऽदित्यानां देवतानां सायुज्यं तादात्म्यं सार्ष्टितां समानैश्वर्योपेतत्वं सलोकतां समानलोकनिवासं वा प्राप्नुवन्ति । तत्र कर्मानुष्ठानप्रवृत्तितारतम्यानुसारेण फलभेदो द्रष्टव्यः ।

यदेतद्दर्शपौर्णमासादिसहस्रसंवत्सरान्तं कर्मजातमुक्तं तस्य सर्वस्य वैकल्यपरिहारार्थं पुरुषार्थपर्यवसानार्थं च दर्शयितुं परतत्त्वप्रतिपादकं प्रणवमन्ते पठति—

ओम्, इति ।

शर्धदासत सिषासतामासत हविः पतिः कनीयां-
स्तस्माद्विश्वसृजोऽष्टौ च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके द्वादशाध्याये नवमोऽनुवाकः ॥ ९ ॥

---

तुभ्यं देवेभ्यस्तपसा देवेभ्यो ब्रह्म वै चतुर्होतारो यच्चामृतꣳ सर्वा दिशो दिक्षु सर्वान्दिवमृचां प्राची नव ।

तुभ्यं तपसा ता वा एताः पञ्च हिरण्यं ददाति सर्वा दिशस्तप
आसीद्गृहपतिः पट्पञ्चाशत् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे द्वादशप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टके द्वादशोऽध्यायः ॥ १२ ॥

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयाष्टकं समाप्तम् ॥ ३ ॥

अत एव महर्षय आहुः—

"यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ।
न्यूनं संपूर्णतां याति सद्यो वन्दे तमच्युतम्" ॥
ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥ इति ।

अत्र मीमांसा । षष्ठाध्यायस्य सप्तमपादे चिन्तितम्—

सहस्रवत्सरं सत्रं गन्धर्वादेर्नृणामुत ।
रसायनेन सिद्धानां कुलकल्पोऽथवोक्तितः ॥
तदायुर्वाऽथ सार्धद्विशतानामुत मासगा ।
वत्सरोक्तिरुत द्वादशरात्रिषु दिनेषु वा ॥
आद्यो दीर्घायुषः सत्त्वान्नृणामेवाग्निसंभवे ।
द्वितीयोऽस्तु रसस्याऽऽयुरहेतुत्वे तृतीयकः ॥
कृत्स्नकर्तुः फलित्वेऽस्तु तुर्योऽर्थासंभवे सति ।
पञ्चमोऽस्तु चतुर्विंशत्युत्तमाः सत्रिणो यदि ।
षष्ठोऽस्तु यो मास एष संवत्सर इतीरणात् ।
सहस्रमासा नाऽऽधानादूर्ध्वं चेदस्तु सप्तमः ।
वत्सरप्रतिमा द्वादश रात्रय इति श्रुतेः ।
न रात्रिष्वब्दशब्दोऽत्र प्रतिमाया विशेषणात् ॥
स्वारस्यात्त्रिवृदाद्युक्तेरष्टमः पक्ष इष्यते ।
त्रिवृदादिपदैः स्तोमविशिष्टमहरुच्यते ।
नाहःसंघस्ततोऽहःसु गौणी संवत्सराभिधा ।
तस्माद्विश्वसृजां सत्रे सहस्रदिनमिष्यते ॥

इदमाम्नायते—"पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः, पञ्चपञ्चाशतः पञ्चदशाः, पञ्चपञ्चाशतः सप्तदशाः, पञ्चपञ्चाशत एकविंशाः, विश्वसृजाः सहस्रसंवत्सरम्" इति । तत्र सहस्रसंवत्सरसत्रे गन्धर्वादीनामेवाधिकारः, तेषां दीर्घायुषः सद्भावादित्याद्यः पक्षः । "वसन्ते ब्राह्मणोऽग्निमादधीत" इत्यादिविधानान्मनुष्याणामेवाऽऽहवनीयाद्यग्नयः संभवन्ति, नान्येषां गन्धर्वादीनाम्, इति चेत् । तर्हि रसायनेन सिद्धानां दीर्घायुषां मनुष्याणामधिकारः, इत्यस्तु द्वितीयः पक्षः ।

१ क. वसन्ता ।

रसस्याऽऽरोग्यपुष्ट्यादिजनकत्वमेव न त्वायुर्हेतुत्वम्, इति चेत्तर्ह्येकस्मिन्कुले समुत्पन्नानां पितृपुत्रपौत्रादीनां बहूनां सहस्रायुःसंभवात्कुलाधिकारः, इति तृतीयः पक्षोऽस्तु। कृत्स्नकर्तुः फलं भवति। न च पितृपुत्रादिष्वेकोऽपि कृत्स्नं करोति तस्मान्नास्ति फलमिति चेत्। तर्हि सत्रविधायकवचनबलादेव सत्रिणां दीर्घायुर्भविष्यति, इति चतुर्थः पक्षोऽस्तु। न ह्यस्य वचनस्य सोऽर्थः संभवति, तद्वाचकपदाभावात्। न च कल्पयितुं शक्यते, संभावितायुष्याणामपि सत्रान्तरेषु प्रवृत्तानां दैवान्म्रियमाणानां तत्तत्सत्रविधिबलादायुर्वृद्ध्यदर्शनात्, इति चेत्। तर्हि पञ्चपञ्चाशत इत्यस्य शब्दस्य पुरुषपरत्वमङ्गीकृत्य सार्धद्विशतानां पुरुषाणामधिकारेऽभिहिते वत्सरचतुष्टयेन सत्रस्य सहस्रसंवत्सरत्वं संपद्यत इति पञ्चमः पक्षोऽस्तु। "चतुर्विंशतिपरमाः सत्रमासीरन्" इति वचनादभ्यधिकानां न तत्राधिकार इति चेत्। तर्हि "यो मासः स संवत्सरः" इति वचनात्संवत्सरशब्दस्य मासपरत्वे सति सहस्रमासं सत्रमित्येष षष्ठः पक्षोऽस्तु। अष्टमे वत्सर उपनीतो द्वादश वर्षाणि वेदमधीत्य विंशतिवयस्को विवाहं कृत्वा जातपुत्रोऽग्निमादधीत। तस्मात्—आधानादूर्ध्वमस्याऽऽयूंषि न सन्ति सहस्रं मासा इति चेत्तर्हि "संवत्सरप्रतिमा वै द्वादश रात्रयः" इति वचनात्संवत्सरशब्दो द्वादशरात्रिपरः। तथा सति रात्रीणां द्वादश सहस्राणि संपद्यन्ते। तासु च रात्रिषु षष्ट्युत्तरशतत्रयदिवसरूपसंवत्सरत्वेन गण्यमानासु त्रयस्त्रिंशत्संवत्सरेभ्य ऊर्ध्वं मासचतुष्टयं भवति। तावत्परिमितं चाऽऽयुराधानादूर्ध्वमपि संभवति, इति सप्तमः पक्षोऽस्तु। "संवत्सरप्रतिमा वै द्वादश रात्रयः" इत्यस्मिन्वाक्ये संवत्सरशब्दो न रात्रिपरः किंतु तेन शब्देन प्रतिमा विशेष्यते, तस्मात्सप्तमः पक्षोऽयुक्त इति चेत्। एवं तर्हि संवत्सरशब्दो दिनपर इत्यष्टमः पक्षोऽस्तु। तथा सति "त्रिवृतः संवत्सराः" इत्यादिवाक्यानां स्वारस्यं भवति। त्रिवृत्पञ्चदशः सप्तदश एकविंश इत्येते शब्दाः स्तोमवाचकाः सन्तः स्तोमयुक्त एकैकस्मिन्नहनि यागरूपे लक्षणया वर्तन्ते। सत्रेषु तथाविधप्रयोगबाहुल्यात्। न त्वहःसंघे क्वचिदपि त्रिवृदादिशब्दाः प्रयुक्ताः। तैश्च शब्दैः सामानाधिकरण्यात्संवत्सरशब्दः स्वावयवभूतेऽहनि लक्षणया वर्तते। 'त्रिवृतः संवत्सराः' इत्युक्ते त्रिवृत्स्तोमकयागयुक्तान्यहानीत्युक्तं भवति। तस्माद्विश्वसृजामृषीणामिदं सत्रं सहस्रदिनम्, इति राद्धान्तः"।

---

१ क. ख. न हि तस्य।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्वीरबुक्कणसाम्राज्यधुरंधरश्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये द्वादशः प्रपाठकः समाप्तः ॥ १२ ॥

---

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरहरिहरभूपालसाम्राज्यधुरंधरसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये तृतीयः काण्डः समाप्तः ॥ ३ ॥

---

समाप्तिमगमदिदं सभाष्यं तैत्तिरीयं ब्राह्मणम् ।

# तैत्तिरीयब्राह्मणविषयानुक्रमणिका ।

## प्रथमं काण्डम् ( १–३३५ )

### प्रथमः प्रपाठकः ( १—६२ )

#### अग्न्याधानविधिः १—६२

## दशमोऽनुवाकः ....(५८—६२)

## पञ्चाग्न्याधानविधिः ५८—६२



# द्वितीयः प्रपाठकः ( ६३—११० )

## गवामयनशेषविधिः ६३—११०

## प्रथमोऽनुवाकः .... (६३—८८)

## पूर्वोक्तानामाधानमन्त्राणां शेषविधानम् .... ६३—८८

## द्वितीयोऽनुवाकः ....(८९—९४)

## गवामयनविशेषाः, तत्र विषुवन्नामकस्य मुख्यस्याह्नस्तदुभयपार्श्ववर्तिनामष्टानामह्नां च विधानम् .... ....८९—९४

## तृतीयः प्रपाठकः ....१११-१७०

### वाजपेयब्राह्मणम् ( १११—१७० )

( वाजपेयपुनराधानपिण्डपितृयज्ञाः ) ।

## तृतीयोऽनुवाकः (१२२—१२६)

## ग्रहविधिः ....१२२—१२६



## चतुर्थोऽनुवाकः (१२६—१२९)

## वाजपेयपशूनां विधिः १२६—१२९



## पञ्चमोऽनुवाकः (१३०—१३७)

## चतुर्थप्रपाठकः....(१७१-२२७)

### सोमादिब्राह्मणानुक्तस्याभिधानम् १७१—२२७

## पञ्चमः प्रपाठकः....(२२८–२८२)

### नक्षत्रेष्टकामन्त्राणामभिधानम् २२८—२८२

---

## *षष्ठः प्रपाठकः....(२८३-३०३)

## राजसूययज्ञस्यानुब्राह्मणम् २८३—३०३



---

* एतत्प्रभृतिप्रपाठकत्रयस्य भाष्यं संहितायां [ का० १ प्र० ८ अ० १ ] इत्यत्र विद्यते तत एवैतत्प्रपाठकत्रयस्यविषयविशेषा अवगन्तव्याः। अत्रापि सामान्येन त उल्लिखिता एव।

## चतुर्थोऽनुवाकः....(२९०–२९१)

## वरुणप्रघासविधिः २९०–२९१



## पञ्चमोऽनुवाकः (२९२–२९३)

## पूर्वानुवाकोक्तशेषविधिः २९२–२९३



## षष्ठोऽनुवाकः ....(२९३–२९५)

## साकमेधविधिः ....२९३–२९५

## सप्तमोऽनुवाकः ....(२९५–२९६)

## साकमेधपर्वशेषः ....२९५–२९६

## अष्टमोऽनुवाकः ....(२९७–२९९)

## पितृयज्ञविधिः ....२९७–२९९

सप्तमः प्रपाठकः....(३०४–३२२)

राजसूयानुब्राह्मणम् ३०४—३२२



अष्टमः प्रपाठकः ....३२३–३३५

राजसूयानुब्राह्मणम् ३२३—३३५

## द्वितीयं काण्डम् ३३७—८५७

### प्रथमः प्रपाठकः ....(३३७–३८०)

### अग्निहोत्रविधिः ३३७–३८०

## द्वितीयः प्रपाठकः ....(३८१–४३५)

### आरण्यकाण्डगतमन्त्रब्राह्मणम् ३८१—४३५

## तृतीयः प्रपाठकः (४३६–४७३)

### पूर्वोक्तशेषाभिधानम् ४३६—४७३

## चतुर्थः प्रपाठकः....(४७४—९९१)

## उपहोमानां पूर्वभागाभिधानम् ४७४—९९१

## द्वितीयोऽनुवाकः....(४८५–४९२)

## उपहोममन्त्राः .... ४८५–४९२



## तृतीयोऽनुवाकः....(४९२–५०६)

## उपहोममन्त्राः .... ४९२–५०६

## पञ्चमः प्रपाठकः ....(५५१-६००)

### उपहोमशेषाभिधानम् ५५१-६००

**प्रथमोऽनुवाकः.... ५५१-५५४**

**उपहोमशेषाभिधानम् ५५१-५५४**

## षष्ठः प्रपाठकः .... (६०१–६९३)

### सौत्रामणेः कौकिल्या अभिधानम् ६०१–६९३

## सप्तमः प्रपाठकः....(६९४–७६१)

### सवनाम्नामेकाहविशेषाणामभिधानम् ६९४–७६१

---

## अष्टमः प्रपाठकः....(७६२–८५७)

### काम्यपशूनां याज्यानुवाक्याः ७६२—८५७

## तृतीयं काण्डम् ८५९—१४४७

### प्रथमः प्रपाठकः ....(८५९–९०८)

नक्षत्रेष्टियाज्यानुवाक्या नक्षत्रेष्टिविषयश्च ८५९—९०८

## *द्वितीयः प्रपाठकः ....(१०८–१३२)

### दर्शपूर्णमासेष्टिविधिः १०८—१३२



## तृतीयः प्रपाठकः .... (१३३–१५५)

### दर्शपूर्णमासेष्टिविधिः १३३—१५५



* द्वितीयतृतीयप्रपाठकौ संहितायां ( का० १ प्र० १ ) भाष्यकृता व्याख्यातावतस्तयोर्विषयविशेषास्तत एव बाहुल्येनावगन्तव्याः । अत्र तु संक्षेपेण ते लिख्यन्त इति बोध्यम् ।

पञ्चमः प्रपाठकः....(९७५–९८७)

इष्टिहौत्रस्य मन्त्राणामभिधानम् ९७५—९८७

## षष्ठः प्रपाठकः....(९८८–१०३९)

### पाशुकहौत्रविधिः ९८८—१०३९

## सप्तमः प्रपाठकः .... १०४०–११९४

### अच्छिद्रकाण्डाभिधानम् १०४०—११९४

## पञ्चमोऽनुवाकः १०७७–१०८८

## अष्टमः प्रपाठकः ....(११५५–१२३७)

### अश्वमेधब्राह्मणम् ( अश्वमेधे प्रथममहः ) ११५५—१२३७

---

## नवमः प्रपाठकः....(१२३८–१३१५)

### अश्वमेधब्राह्मणम् ( द्वितीयमहस्तृतीयं चाहः ) १२३८—१३१५

## अष्टमोऽनुवाकः (१२६९–१२७२)

## अश्वमेधस्य तदीयपशुविधीनां च प्रशंसा .... १२६९–१२७२



## नवमोऽनुवाकः (१२७२–१२७५)

## अश्वमेधसंबन्धित्रिरात्रस्योत्तमेऽहनि पशूनामभिधानम्, १२७२–१२७५



## दशमोऽनुवाकः (१२७५–१२७६)

## महिमाख्यग्रहयोरभिधानम् १२७५–१२७६



## एकादशोऽनुवाकः(१२७७–१२७९)

## शरीरहोमानां स्विष्टकृदाहुतीनां चाभिधानम् १२७७–१२७९



## द्वादशोऽनुवाकः (१२८०–१२८२)

## शरीरहोमस्विष्टकृद्धोमोभयमध्यवर्त्यश्वस्तोमीयहोमविधिः, १२८०–१२८२

---

# दशमप्रपाठकः .... (१३१५–१३५४)

## सावित्रचयनाभिधानम् .... १३१५–१३५४

## प्रथमोऽनुवाकः (१३१५–१३२०)

### सावित्रचयन इष्टकोपधानादिमन्त्राः .... १३१५–१३२०

## एकादशः प्रपाठकः .... (१३५५–१३९४)

## नाचिकेताग्निचयनविधिः .... १३५५—१३९४

## नवमोऽनुवाकः (१३८५–१३९१)

### नाचिकेताग्निचयनप्रयोगाभिधानम् .... .... १३८५–१३९१



## दशमोऽनुवाकः १३९१–१३९४

### नाचिकेताग्निचयनप्रशंसा १३९१–१३९४

## द्वादशः प्रपाठकः .... (१३९५–१४४७)

### चातुर्होत्राग्निचयनवैश्वसृजाग्निचयनप्रयोगः १३९५—१४४७

---

समाप्तेयं तैत्तिरीयब्राह्मणस्य विषयानुक्रमणी ।

# अथ तैत्तिरीयब्राह्मणकाण्डान्तर्गतप्रपाठकविषयानुक्रमणिका।

## प्रथमं काण्डम् ( १—३३५ )



## द्वितीयं काण्डम् ( ३३७—८५७ )



## तृतीयं काण्डम् ( ८५९—१४४७ )

---

समाप्तेयं प्रपाठकविषयानुक्रमणी ।